SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 115 ]

# CIDGAGANACANDRIKĀ

By

**KĀLIDĀSA**

With The Commentary

**KRAMAPRAKĀŚIKĀ**

**by**

Pt. RAGHUNĀTHA MIŚRA

Sampurnanand Sanskrit Vishvavidyalaya
Varanasi.



Research Publication Supervisor

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya.

VARANASI
1980

सरस्वतीभवन-ग्रन्थमाला

[ ११५ ]

महाकविकालिदासप्रणीता

# चिद्गगनचन्द्रिका

श्रीरघुनाथमिश्रविरचितया

क्रमप्रकाशिकाव्याख्यया

संवलिता

अनुसन्धानप्रकाशनपर्यवेक्षकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्

२०३७ तमे वैक्रमाब्दे १९०२ तमे शकाब्दे १९८० तमे खैस्ताब्दे

प्रकाशकः—
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये,
वाराणसी.

प्राप्तिस्थानम्—
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी-२२१००२.

प्रथमं संस्करणम् : ५०० प्रतिरूपाणि
मूल्यम्: ४६-०० रूप्यकाणि

मुद्रकः—
महावीर प्रेस,
भेलूपुर,
वाराणसी।

# प्रास्ताविकम्

कालिदासेत्युपाधिधारिणा केनचन सकलागमाचार्यचक्रवर्तिना मनीषिणा गगनचन्द्रिकेव चिद्गगनचन्द्रिकेयं विरचिता कालिकातास्थितयाऽऽगमानुसन्धानसमित्या १९३७ तमे खीस्ताब्दे प्रकाशिता स्वामित्रिविक्रमतीर्थसम्पादिता। तत्र पुष्पिकायाम् उपोद्घाते चैषा महाकविकालिदासविरचितेति समास्थितं तच्छ्लोकगतकालिदासशब्दस्यानेकधा प्रयोगात्, केषाञ्चिच्छ्लोकानां रघुवंशकुमारसंभवकाव्ययोः, अभिज्ञानशकुन्तलमालविकाग्निमित्रयोश्च नाटकयोः श्लोकसाम्यं बिभ्राणानां च दर्शनात्। एवं खलु तत्र चिद्गगनचन्द्रिकायाः कर्तुर्महाकविकालिदासाभिन्नत्वमङ्गीकृतम्।

'शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु' इति पद्यं स्मरन्तो दोषज्ञा विदन्त्येव व्यासवत् कालिदासभूयस्त्वम्। एकादशतोऽधिकानां कालिदासानामुल्लेखो दृश्यते संस्कृतवाङ्मये। कल्याणस्तवस्य, चर्चास्तवस्य, मकरन्दस्तवस्य च कर्ता कालिदास एकः। धातुप्रबोधस्य कर्ता कालिदासचक्रवर्ती। संक्षेपशङ्करजयस्य कर्ता माधवाख्यो विद्वान् अभिनवकालिदासपदवीमभजत्। अभिनवभारतचम्वा भागवतचम्पवाश्च प्रणेतुः कवेर्नामधेयमप्यभिनवकालिदास आसीत्। शृङ्गारकोशभाणस्य रचयिता काश्यपाभिनवकालिदासतयाऽऽख्यायते स्म। क्षेमेन्द्रकृते सुवृत्ततिलके, औचित्यविचारचर्चाख्ये च ग्रन्थे रघुवंशकुमारसंभवमेघदूताभिज्ञानशकुन्तलविक्रमोर्वशीयमालविकाग्निमित्रेत्यतिरिक्तस्य कुन्तेश्वरदौत्यस्य महाकविकालिदासकर्तृकत्वमुल्लिख्यते। दुर्घटकाव्यम्, नलोदयः, पुष्पभाणविलासः, राक्षसकाव्यम्, रामसेतुः सेतुबन्धो वा, लघुस्तवः, विद्वद्विनोदकाव्यम्, वृन्दावनकाव्यम्, शृङ्गारतिलकम्, शृङ्गाररसार इत्यादयो ग्रन्था अपि केनचित् कालिदासेन कृताः श्रूयन्ते।

अलङ्कारच्छन्दःकोशज्योतिषायुर्वेदकर्मकाण्डादिविषयकाणां बहूनां ग्रन्थानां रचयिता कालिदासः प्रसिध्यति। अलङ्कारे—कविरहस्यम्, काव्यप्रकाशार्थनिर्णयश्चेति, छन्दसि—वृत्तरत्नावली, श्रुतबोधश्चेति, कोशे—प्रयुक्तमञ्जरी, एकाक्षरमाला, नानार्थशब्दरत्नं चेति, ज्योतिषे—उत्तरकालामृतम्, कटपाया, जातकचन्द्रिका, ज्योतिर्विदाभरणम्, स्वरशास्त्रसारः, रहस्यबोधः, नारदसिद्धान्तव्याख्या चेति। आयुर्वेदे—धाराकल्पः, रससारसञ्चयः, वैद्यमनोरमा चेति ग्रन्थाः प्रथन्ते। कर्मकाण्डे—कुण्डप्रबन्धाख्यो ग्रन्थो बलभद्रात्मजेन कालिदासेन प्रणीतः। बहूनि शाक्ततन्त्रस्तोत्राणि कालिदासनाम्ना प्रथितानि सन्ति, यथा-अम्बास्तवः, कालीस्तवः चण्डिकादण्डकस्तोत्रम् नवरत्नमाला, श्यामलादण्डकम्, त्रिपुरसुन्दरीस्तुतिकाव्यम्, कल्याणस्तवः, मकरन्दस्तवः, चर्चास्तव इति।

महाकविकालिदासस्य रचनासादृश्यमिह चिद्गगनचन्द्रिकायां नूनं संलक्ष्यते। व्याख्याकारकृतभूमिकायास्त्रयोदशचतुर्दशपृष्ठयोस्तादृशानि स्थलानि तत्त्वज्ञैर्निभालनीयानि। काव्यतुलनया यद्यप्युभयोरनन्यत्वं प्रतीयते, तथापि द्वयोः पार्थक्याय समासाद्यते प्रभूतं गमकम्। 'कालिदासपदवीं त्वाश्रितः' (३०६) इत्यत्र श्लोके चिद्गगनचन्द्रिकाकारेण कालिदासेति पदवी निरूपिता, न तु नामधेयम्। अन्तिमे श्लोके प्रणेत्रा जगृहे स्वकीयं नामधेयम्—

पूर्णपीठकृतं सिद्धेस्ताद्भावस्तवमादरात्।
वा नरार्थं महागुह्य **श्रीवत्सो** विदधे स तु॥ इति।

इह क्रमप्रकाशिकाकार आह—'स कालिदासेति पदवीकः ३०६ पद्ये 'कालिदासपदवीं तवाश्रितः' इत्यत्र स्फुटमुल्लेखात्। स एव पूर्वचर्चितः **श्रीवत्सः**। एतदेवास्य कवेर्मुख्यं नाम प्रतीयते। गोत्रावल्यां कुत्राप्युपलब्धप्रतिषु श्रीवत्स इति गोत्रनाम न प्रसिद्धम्' इति। एवं तावद् भिन्नोऽयं कालिदासपदवीधारी **श्रीवत्सो** महाकविकालिदासात्। 'वीक्ष्य **कालि** महिमानुवर्ण्यते, त्वन्नुदे तदपि **दास**जल्पितम्' (२७२) इत्यत्र द्वितीयचरणगतस्य 'कालि! इत्यस्य चतुर्थचरणगतेन 'दासजल्पितम्' इत्यनेन सह संयोजनात् कालिदासजल्पितम् इत्यादि। चिद्गगनचन्द्रिकायां कालीमहिमा प्रामुख्यतो वर्णितः। अस्य वर्णनेन वर्णयितुरुपनामधेयं स्वत एव कालिदास इति भासते।

महाकविकालिदासेन श्रीगणेशो न क्वापि मङ्गलाचरणे स्मृतः। इह तु चिद्गगनचन्द्रिकायां ग्रन्थारम्भे स स्मर्यते। 'ये मनः प्रणिदधुर्महर्षयस्तान् पतञ्जलिमुखानुपास्महे' इत्यत्र पतञ्जलिर्महर्षिपदेन समाख्यात उपास्यतया। महाकविकालिदासात् पूर्वं शतद्वयवर्षेषु शतचतुष्टयवर्षेषु वा समवस्थितस्य भगवतः पतञ्जलिमुनेर्महर्षिषु मुख्यत्वेन निरूपणं महाकविकालिदासकृतं न संभाव्यते। अक्षरमालिकास्तोत्रम्, क्रमस्तोत्रपञ्जिका, कर्पूरस्तोत्रम्, ज्वालामुखीस्तोत्रम्, देवीपञ्चस्तवी, देव्यष्टकम्, देव्यारात्रिका, मङ्गलाष्टकम्, मातृका( पुष्प )मालास्तवः, मीननयनाष्टकम्, लक्ष्मीस्तवः, शारदास्तोत्रम्, सरस्वतीसाधनम्, सरस्वतीस्तोत्रमित्यादीनि कालिदासकृतानि प्रसिध्यन्ति स्तोत्राणि। इह नवरत्नमालायाः श्यामलादण्डकस्य च द्वौ कर्तारौ स्मर्येते कालिदासः शङ्कराचार्यश्चेति। गङ्गाष्टकं शङ्कराचार्यस्य सुप्रथितम्। कालिदासविरचितमपि गङ्गाष्टकं समुल्लिख्यते।

चिद्गगनचन्द्रिकेयं प्रकाशितचिद्गगनचन्द्रिकापुस्तकस्य पुष्पिकायाम् 'इति श्रीकालिदासमहाकविविरचिता चिद्गगनचन्द्रिका सम्पूर्णा' इति महाकविकालिदासविभाविता समुद्घोष्यते। सम्पादकेन परतो महाकविशब्दः पुष्पिकायां योजितः प्रतीयते। 'इह कालिदासचन्द्रप्रसूतिरानन्दिनी स्तुतिर्व्याजात्' (३), 'वीक्ष्य **कालि**!

महिमानुवर्ण्यते,····त्वन्मुदे तदपि **दास**जल्पितम्' ( २७२ ), '**सिद्धनाथ**कृतत्वत्क्रमस्तुतेः **कालिदास**रचितां च पञ्चिकाम्' ( ३०५ ), '**कालिदासपदवीं** तवाश्रितः, त्वत्प्रसादकृत-वाग्विजृम्भणः' ( ३०६ ) इति श्लोकेषु चिद्गगनचन्द्रिकायाः प्रणेतुर्विषये कश्चन संकेतो विभाव्यते ।

चिद्गगनचन्द्रिकेयं योगिनीहृदयदीपिकाटीकायां सादरं समुद्धृता । टीकाकार-स्थितिकालश्चतुर्दशखीस्तशताब्द्या अन्तिमो भागो निर्धार्यते । इतोऽपि पूर्वं महार्थमञ्जर्या रचयित्रा गोरक्षनाथापरनामधेयेन श्रीमहेश्वरानन्देन चिद्गगनचन्द्रिकाया बहवः श्लोकाः प्रमाणतया समुपन्यस्ताः । श्रीमहेश्वरानन्दस्य स्थितिकालश्चतुर्दशशताब्द्याः प्रथमो भागोऽङ्गीक्रियते विपश्चिद्भिः । अतश्चिद्गगनचन्द्रिकायाः प्रणेतुः कालिदासाख्यस्य श्रीवत्सस्य स्थितिकालस्त्रयोदशखीस्तशताब्द्याः परतो निर्धारयितुं न युज्यते ।

चिद्गगनचन्द्रिकायां सिद्धनाथः स्मृतो ग्रन्थकारेण—

'**सिद्धनाथ**कृततत्क्रमस्तुतेः' ( ३०५ ) इति । भुवनेश्वरीमहास्तोत्ररचयितुः पृथ्वीधरा-चार्यस्य गुरुरासीदसाविति तत्प्रणीतलघुसप्तशतीस्तोत्राद् ( १७ ) विज्ञायते—

> **श्रीसिद्धिनाथा**परनामधेयः **श्रीशम्भुनाथो** भुवनैकनाथः ।
> तस्य प्रसादात् सकलागमाच्च पृथ्वीधरः स्तोत्रमिदं चकार ॥ इति ।

शम्भुनाथापरनामधेयः श्रीसिद्धनाथः सिद्धिनाथोऽपि समाख्यायते स्म । यथा भुवनेश्वरीस्तोत्रे ( ४० )—

> **श्रीशम्भुनाथ** ! करुणाकर ! **सिद्धिनाथ** !
> **श्रीसिद्धनाथ** ! करुणाकर ! **शम्भुनाथ** !
> सर्वापराधमलिनेऽपि मयि प्रसन्नं
> चेतः कुरुष्व शरणं मम नान्यदस्ति ॥ इति ।

शम्भुनाथप्रसादात् पृथ्वीधराचार्येण वाक्सिद्धिपूर्वकं सर्वा विद्याः समधिगताः ( भुवनेश्वरी० ४२, ४४ )—

> वाक्सिद्धिमेवमतुलामवलोक्य **नाथः**
> श्री**शम्भु**रस्य महतीमपि तां प्रतिष्ठाम् ।
> स्वस्मिन् पदे त्रिभुवनागमवन्द्यविद्या-
> सिंहासनैकरुचिरे सुचिरं चकार ॥ ४२ ॥
> विद्याः सर्वाः सपदि वदने
> **शम्भुनाथ**प्रसादात् ॥ ४४ ॥

तन्त्रशास्त्रस्य प्रमाणभूताचार्याणां श्रीमतामभिनवगुप्तपादाचार्याणां गुरुपरम्परायां स्मर्यते शम्भुनाथोऽयं तन्त्रसारे—श्रीशम्भुनाथभास्करचरणनिपात०', 'योगः श्री-शम्भुनाथागमपरिगमितो जालनामा मयोक्तः' इति ।

दक्षिणभूमिपीठवसतेर्भैरवस्य शिष्यः श्रीशम्भुनाथो जालन्धरात् पीठात् प्रसिद्धिमुपेतः—

> कश्चिद् दक्षिणभूमिपीठवसतिः श्रीमान् विभुर्भैरवः
> पञ्चस्रोतसि सातिमार्गविभवे शास्त्रे विधाता च यः ।
> लोकेऽभूत् सुमतिस्ततः समुदभूत् तस्यैव शिष्याग्रणीः
> श्रीमाञ्छम्भुरिति प्रसिद्धिमगमज्जालन्धरात् पीठतः ॥ इति ।

अभिनवगुप्तपादाचार्याणां स्थितिकालो दशमख्रीस्तशताब्द्या उत्तरार्द्धं निश्चीयते । श्रीशम्भुनाथस्तस्य गुरुपरम्परायामासीन्न तु साक्षाद् गुरुः । श्रीपृथ्वीधराचार्यस्तु भगवत्पादश्रीशङ्कराचार्यस्य शिष्यस्तन्त्रमन्त्रविद्याप्रवीणः सकलशास्त्रवित्प्रकाण्डश्चाभूत् । 'रायल एशियाटिक सोसाइटी' इत्याख्यायाः संस्थाया मुम्बापुरीस्थशाखायाः सूचीपत्रे ८५१ संख्याङ्कितस्य 'बालार्चनविधिः' इत्याख्यस्य पुस्तकस्य विवरणे शृङ्गेरीमठगुरुपरम्परायां पृथ्वीधराचार्यः शङ्कराचार्यानन्तरं पठितः, ततो ब्रह्मचैतन्यः, आनन्दचैतन्यश्च । अतोऽयं पृथ्वीधराचार्यः खल्वष्टमख्रीस्तशताब्द्यामवस्थितस्य भगवत्पादशङ्कराचार्यस्य साक्षाच्छिष्यस्तत्समानकालिक इति ध्रुवं शक्यते वक्तुम् । तेन स्वगुरुपरिचयो भुवनेश्वरीस्तोत्रे ( ३७ ) इत्थं वर्णितः—

> श्रीसिद्धिनाथ इति कोऽपि युगे चतुर्थे
> प्रादुर्बभूव करुणावरुणालयेऽस्मिन् ।
> श्रीशम्भुरित्यभिधया स मयि प्रसन्नं
> चेतश्चकार सकलागमचक्रवर्ती ॥ इति ।

पद्यमिदं व्याचक्षाणो भाष्यकारः श्रीपद्मनाभ आह—'करुणया युक्ते वरुणालये = ग्रामविशेषे **नर्मदातटनिकटवर्तिनि**' इति । भगवत्पादशङ्कराचार्यस्य जन्मस्थानं तु **'कालटी'** इत्यत्र सुनिश्चितम् । एवं तावत् सकलागमचक्रवर्ती सिद्धिनाथापराह्वः श्रीशम्भुनाथो नूनं भिन्नो भगवत्पादशङ्कराचार्यात् । किन्तु शम्भुपर्यायतयाऽयमपि शङ्कराचार्याख्ययाऽऽख्यायते स्मेति प्रतीयते । तस्यैवास्य शिष्यः श्रीपृथ्वीधराचार्यः, मन्ये परतः शृङ्गेरीमठे दीक्षितो भगवत्पादशङ्कराचार्यशिष्यतां भेजे । दक्षिणभूमिपीठवसतेर्भैरवस्य शिष्याग्रणीः सकलागमचक्रवर्ती श्रीशम्भुनाथो जालन्धरपीठात् प्रसिद्धिमाससाद । अस्यैव परम्परायां श्रीमदभिनवगुप्तपादाचार्य आत्मानं दीक्षितं मन्यते । इत्थं खल्वागमाचार्यः श्रीशङ्कराचार्यो वैदिकाद् भगवत्पादशङ्कराचार्यात् पार्थक्यं भजते । तादृशानि तन्त्रागमपराणि स्तोत्राणि दीर्घजीविनमागमाचार्यं शङ्करापरनामधेयं श्रीशम्भुनाथमभिसम्बध्नन्ति । श्रीपृथ्वीधराचार्येण पूर्वगुरुपरम्पराया भुवनेश्वर्यादिसपर्यापरपरम्परायामपि समावेशिता । भगवत्पादशङ्कराचार्योदयकाले श्रीशम्भुनाथो दशमीं गतो जीवति स्मेति सिध्यति पृथ्वीधराचार्यवृत्तेन ।

श्रीशम्भुनाथपरम्परायां दीक्षितः कालिदासाख्यः श्रीवत्सः श्रीमदभिनवगुप्त-

पादात् पूर्वं नासीदिति तन्त्रालोकतन्त्रसारादिग्रन्थेषु तदनुल्लेखाद् विज्ञायते। इत्थं खलु दशमशताब्द्याः परतः श्रीवत्सः 'कालिदासः' बभूवेति निर्धारणं युक्तिसंगतं भाति।

सहस्रवर्षानन्तरं चिद्गगनचन्द्रिकाश्लोकेषु क्वचित् पाठभेदाः समुपनताः। दीपिकोद्धृतपाठैः सहेह प्रस्तूयते तुलना—

दृक्क्रियात्मशशिभानुमध्यगं खे चरत्यनिलवत् सुधाम यत्।
यत्तदूर्ध्वशिखरे परं नभस्तत्र दर्शय शिवं त्वमम्बिके॥ ३२।

श्लोकोऽयमस्मादेव पुस्तकात् समुद्धृतः। दीपिकायां तु 'मध्यगं' इत्यस्य स्थाने 'मध्यगे' इति पाठः। 'चरत्यनिलवत् सुधाम यत्' इत्यस्य स्थाने दीपिकायाम्— 'चरत्यनलदृष्टिधाम्नि यः' इति पाठः। 'शिखरे' इत्यस्य स्थाने दीपिकायां 'शिखरं' इति पाठः। 'शिवं' इत्यस्य स्थाने 'शिव' इति पाठः। तथा चायं श्लोकः सम्पूर्णस्तत्र दीपिकायाम् ( ११ पृष्ठे ) इत्थं पठितः—

यत्क्रियात्मशशिभानुमध्यगे खे चरत्यनलदृष्टिधाम्नि यः।
यत्तदूर्ध्वशिखरं परं नभस्तत्र दर्शय शिव त्वमम्बिके॥ इति।

श्लोकगतपाठभेदैः पर्याप्तमर्थभेदो दृश्यत इति विभावितं मनीषिभिः। 'चरत्यनिलवत् सुधाम यत्' इत्यस्मिन् पाठे वर्तमानपुस्तकगतपाठाद् महदन्तरमास्ते।

भोग्यभोक्तृमयगा विमर्शगा देवि मां चिदुदरे दृढां दशाम्।
आर्पयदनलसोममिश्रणस्त्वद्विमर्श इह भानुजृम्भणः॥

अस्मादेव पुस्तकादुद्धृतस्यास्य ( २१२ ) श्लोकस्य पाठभेदा उपरिष्टादुद्धरिष्यमाणेन दीपिकागतेन सह तोलनीयाः—

भोक्तृभोग्यमय-गोविमर्शनाद् देवि मां चिदुदधौ दृढां दशाम्।
अर्चयन्ननलसोममिश्रणं तद्विमर्श इह भानुजृम्भणम्॥ १८ पृष्ठे।

वर्तमानपाठाद् यत्र पाठेषु भेदाः सन्ति दीपिकागते श्लोके ते रेखाचिह्नैरङ्किताः। 'गोविमर्शनात्' इत्यस्मिन् दीपिकागते पाठेऽपि केषुचित् पुस्तकेषु 'गोविसर्गयोः' इति पाठान्तरं दृश्यते।

मेयमातृमिति लक्षणं कुलं प्रान्ततो व्रजति यत्र विश्रमम्।

इत्यस्य ( ७२ ) श्लोकस्य पाठभेदो दीपिकायामित्थमवाप्यते—

मेयमातृमिति लक्षणं कुलं प्रान्ततो व्रजति विश्रमम्बिके॥ इति ९१ पृ०।

इह 'यत्र विश्रमम्' इत्यस्य पाठान्तरम्—'विश्रमम्बिके' इति।

षण्ढवर्जमहिमद्युतेः कलाः सर्गबिन्दुरहिताश्च ये शुभे।
सर्व एव शशिनः कलाः शिवे योनयो विधृतबीजतत्स्वराः॥

इत्यस्य ( ४० ) श्लोकस्य पाठभेदा दीपिकागतश्लोके ( १२८ पृ० ) इत्थं समासाद्यन्ते—

षण्डवर्जमहिमद्युतेः कलाः
बिन्दुसर्गरहिताश्च ये शुचेः ।
सर्व एव शशिनः कलाः शिवे
योनयो विधृतबीजतः स्वराः ॥ इति ।

'द्युतेः कलाः' इत्यत्र 'द्युतेः स्वराः' इत्यपि पाठान्तरं लभ्यते । 'कलाः शिवे' इत्यस्य स्थाने केषुचित् पुस्तकेषु 'कलाश्च ये' इति पाठान्तरम् । 'बीजतः स्वराः' इत्यत्र 'बीजकांस्तदा' इत्यपि पाठान्तरम् ।

'विश्वसद्मनि सदात्मनीश्वरे' इत्यत्र ( ९१ ) श्लोके 'सदात्मनीश्वरे' इत्यस्य स्थाने 'चिदात्मनीश्वरे' इति पाठभेदः ।

इतः परं महार्थमञ्जर्याष्टीकायामुपलभ्यमानाः पाठभेदा उपन्यस्यन्ते । 'हृद्गुहामभिलषन्नहन्तया' इति पञ्चमे श्लोके 'हृक्क्रियापदम्' इत्यस्य स्थाने महार्थमञ्जर्यां 'हृक्क्रियात् पदात्' इति पाठान्तरम् । 'सूयते' इत्यस्य स्थाने 'सूतये' इति पाठः ।

याऽहमित्युदितवाक् परा च सा
यः प्रकाशलुलितात्मविग्रहः ।
यौ मिथः समुदिताविहोन्मुखौ
तौ षडध्वपितरौ श्रये शिवौ ॥ ६ श्लो० ।

अयं श्लोको महार्थमञ्जरीव्याख्यायामित्थं दृश्यते—

याऽहमित्युदितवाक् पराभिधा
यः प्रकाश उदितार्थविग्रहः ।
द्वौ मिथः समुदिताविहोन्मुखौ
तौ षडध्वपितरौ श्रये शिवौ ॥ ७० पृ० ।

'विग्रहद्वितयमप्यतः परम्' इत्यत्र तृतीये चरणे 'विग्रहो द्वितयमप्यतः परम्' इति पाठान्तरं महार्थमञ्जरीव्याख्यायाम् ।

ज्ञानदीधितिषु रौद्रदीधिते–
र्मन्त्रदीधितिषु वामयोदितम् ।
योगदीधितिषु जृम्भतेऽम्बिका
ज्येष्ठयैवमथ शक्तिदीधितेः ॥ १२८ श्लो० ।

इत्यत्र 'रौद्रदीधितेः' इत्यस्य स्थाने महार्थमञ्जरीटीकायां 'रौद्रयुदेति ते' इति पाठः । 'ज्येष्ठयैवमथ' इत्यस्य स्थाने च 'ज्येष्ठयेत्थमधि' इति पाठः ।

अस्वरोल्लसनबीजमग्रिमो
क्षीणतोऽवपुरपाकृतक्रमः ।
नाद एष तव विश्वदैशिकः
कोऽपि संविदि विमर्श ईश्वरः ॥ १४८ श्लो० ॥

इत्यत्र भूयांसः पाठभेदा महार्थमञ्जर्याम्--

अस्वरोल्लसनबीजमग्रिमो-
च्छूनतावपुरपाकृतक्रमः ।
नाद एष तव विश्वदेशिकः
कोऽपि स स्मृतिविमर्श ईश्वरे ॥ ९६ पृ० ।

साम्प्रतिकेऽस्मिन् पुस्तके 'अग्रिमो क्षीणतः' इत्यपपाठः । महार्थमञ्जर्याः 'अग्रिमोच्छूनता' इति शुद्धः पाठः ।

'यः परो निरुपसर्गतः परः' इति (२२३) श्लोकस्य 'यः परः' इत्यत्र महार्थमञ्जर्यां 'यत् परः' इति पाठः । 'उत्तरं च विषयोत्सवस्तदानन्द' इत्यत्र च महार्थमञ्जर्याम् 'उत्तरश्च विषयात् स च त्वदानन्द' इति पाठः शोभनः । 'उल्लसति' इत्यत्र तु 'उल्लससि' इति पाठः ।

'वारिवह्निमुकुरादिषु स्फुटा' इत्यत्र (१९५) श्लोके **वह्निवारिमुकुरादिषु स्फुटम्'** इति पाठभेदद्वयं प्राप्यते ।

## क्रमप्रकाशिकाया वैशिष्ट्यम्

तन्त्रागमपरम्परायां प्रमाणतया समुद्धृतपूर्वस्यास्य चिद्गगनचन्द्रिकाख्यस्य ग्रन्थस्य चिरकालमव्याख्येयतयाऽवस्थितस्य क्रमप्रकाशिकाख्या व्याख्या व्यातता महामहोपाध्यायगोपीनाथकविराजसकाशाल्लब्धाऽऽगमतत्त्वेन पण्डितप्रवरेण श्रीरघुनाथ-मिश्रमहाभागेन । कस्यापि ग्रन्थस्य व्याख्याकारो ग्रन्थकारीयज्ञानाम्भोधिमवगाह्य स्वज्ञानेन तज्ज्ञानमतिशेत इत्यभिधाने नास्त्यतिशयोक्तिः । प्रायोऽन्नूनकागमग्रन्थपरम्परा-पर्यालोडनपूर्वकं व्याख्येयं ग्रथिता व्याख्याकारेणेति तदीयो महानध्यवसायो व्यज्यते ।

क्रमप्रकाशिकायां प्रमाणतया समुद्धृतो ग्रन्थग्रन्थकारराशिरिह निदर्श्यते ।

श्रुतिः ( २ पृ० ); तन्त्रालोके ( २; १०,४५ पृ० ); योगिनीहृदये ( ५; ७;३० पृ०); अमृतानन्दनाथेन (५ पृ०); स्वच्छन्दसंग्रहे (५ पृ०); पुराणाद्युक्तं न विस्मर्तव्यम् ( ५ पृ० ); श्वेताश्वतरोपनिषद् ( ६ पृ० ); पातञ्जलो योगमार्गः ( ६ पृ० ); इत्याद्याः श्रुतयः ( ६ पृ० ); प्रत्यभिज्ञाहृदये ( ७ पृ० ); संकेतपद्धतौ ( ७ पृ० ); योगिनीहृदयदीपिकायाम् ( ७; ३९ पृ० ); श्रीकण्ठभाष्ये ( ९ पृ० ); गीता, श्रुतिः, पञ्चदशी ( ९ पृ० ); तथा च

काशः ( १० पृ० ); टीकायां जयरथेन ( ११ पृ० ); भागवते ( ११ पृ० ); सांख्यकारिकायाम् ( १३ पृ० ); भिक्षुसूत्रम् ( १४ पृ० ); छान्दोग्यो० ( १६ पृ० ); इति वाक्यपदीये ( १८ पृ० ); प्रपञ्चसारे ( १९; २४ पृ० ); शारदातिलके ( १९ पृ० ); तदुक्तं व्याकरणमहाभाष्ये ( १९ पृ० ); इति बृहदारण्यके ( २० पृ० ); तन्त्रचूडामणौ ( २१ पृ० ); प्रत्यभिज्ञाहृदये ( २२; ३६; ३८ पृ०); तन्त्रसारे ( २३ पृ० ); शारदातिलकटीकायाम् ( २६ पृ० ); प्रपञ्चसारः प्रमाणम् ( २७ पृ० ); मालिनीविजयोत्तरतन्त्रे ( २७ पृ० ); ललितासहस्रनाम्नि (३०; ३१ पृ.); सौभाग्यभास्करव्याख्यायाम् (३० पृ०); त्रिपुरासिद्धान्ते ( ३० पृ० ); दीपिकायाम् ( ३० पृ० ); स्वच्छन्दतन्त्रे ( ३१ पृ० ); योगदर्शने (३३ पृ०); तद्भाष्यवैशारद्यादौ ( ३३ पृ० ); छान्दोग्ये ( ३४ पृ० ); माण्डूक्यकारिकायाम् ( ३४ पृ० ); व्याख्यातं च क्षेमराजेन ( ३६ पृ० ); बौद्धादिग्रन्थेषु ( ३६ पृ० ); स्पन्दकारिकयोः ( ३९ पृ०); चिद्वल्लीव्याख्यायाम् ( ३९ पृ० ); पञ्चदश्याम् ( ३९ पृ० ); उक्तं मनुना ( ४१ पृ० ); श्रीविद्यार्णवतन्त्रे ( ४१ पृ० ); महानयप्रकाशे ( ४२; ४५; ५०; ६२; ७० पृ० ); तदुक्तं श्रीराजिकायाम् ( ४५ पृ० ); तदाहुः—आगमिकाः ( ४७ पृ० ); शाङ्करभाष्यादौ ( ४७ पृ० ); दुर्गासप्तशत्याम् ( ४७ पृ० ); गीता ५३; कठ० ५८; तदुक्तं सप्तशत्याम् ५८; तदुक्तं साम्बपञ्चाशिकायाः प्रथमपद्यस्य टीकायाम् ५९; प्रश्नोपनिषदि ५९ पृ०; योगः ५९; श्वेताश्वतरेऽपि ५९ पृ०; विज्ञानभैरवटीकायाम् ५९; श्रीविद्यार्णवतन्त्रे ६०; तन्त्रालोकव्याख्यायाम् ६०; छान्दोग्ये ६२; नादबिन्दूपनिषदि ६२; श्लोकार्थपरिष्कारिणी टीका ६३; वाक्यपदीये ७०; भामत्यां तट्टीकायां च ७०; पाणिनीयशिक्षायाम् ७५; १०५; योग० ८६; तदुक्तं गीतासु ८८; तदुक्तं हरिणा ९६; तदुक्तं मालिनीविजयोत्तरे १००; श्रीक्रमस्तोत्रेऽपि १०२; महानिर्वाणतन्त्रे १०२; कालीतन्त्रे १०२; ज्ञानसारग्रन्थेऽपि १०५; शारदातिलकानुसारेण १०९ पृ०; सौभाग्यसुधोदये १०९; सांख्यकारिका ११०; परमार्थसारोक्तदिशा ११०; महार्थमञ्जरीपरिमले ११९; पूजारहस्ये १२३; ईश्वरप्रत्यभिज्ञायाम् १२४; मार्कण्डेयपुराणोक्तनीत्या १२५; इति बोधपञ्चदशिका १२५; विज्ञानाद्वयवादेऽपि १२५; गौडपादेन माण्डूक्यकारिकासु १२५; यथा वायवीयसंहितायाम् १२७; कामकलाविलासचिद्वल्ल्याम् १२८; ऐतरेयेऽपि १२८; तापनीयेऽपि १२८; परापञ्चाशिकायाम् १२८; विरूपाक्षपञ्चाशिकायामपि १२८; शिवसूत्रनीत्या १२९; प्रत्यभिज्ञाविमर्शिन्याम् १३१; तदुक्तं योगसूत्रे पातञ्जले १३४; इति गीतोक्त्या १३५; मुण्डकोपनिषद् १३६; श्वेताश्वतरो० १३६; ईश्वरप्रत्यभिज्ञाकारिकायाम् १३७; परात्रिंशिकाविवृतौ १४७; इत्यमरः १४७; महानिर्वाणतन्त्रे १४७; योगवासिष्ठे १४८; त्रिपुरासारसमुच्चये १४८; मन्त्रमहार्णवे १४८; तन्त्रालोकविवेके १४८; १५२; १६१; ललितासहस्रनामस्तोत्रव्याख्याने १४९; भगवान् शङ्कराचार्योऽप्याह ( द० स्तो० ) १४९; दत्तात्रेयसंहितानुसारम् १४९; शक्तिसंगमतन्त्रम् १४९; स्पन्दकारिका १५०; मृगेन्द्रागमोक्त्या १५०; माघः १५१; पञ्चशतिके १५८; श्रीक्रमस्तोत्रे १५८; १६७; १६८; कठोपनिषद् १६०; रुद्रयामलेऽपि

१६०; उक्तं गोरक्षनाथेन परिमले १६०; गोरक्षनाथः १६२; छायाग्राहिणी कथा वाल्मीकीयात्र प्रमाणम् ( १६४ पृ० ); योगसूत्रनीत्या १६७; गीतोक्त्या १६९; ज्ञानगर्भस्तोत्रे १७१; तन्त्रालोके १७३; मुण्डकोप० १७३; श्वेताश्वतरे १७३; देवीभागवतपञ्चमस्कन्धे १७३; १७४; मत्स्यपुराणे १७४; श्रुतिरपि १७४; विद्यारत्ने १७४; यथोक्तं विष्णुपुराणे १७४; देवीभागवते १७४; तदुक्तं परमार्थसारे १७६; चिद्विलासस्तवे १७७; १८२; रघुवंशे १७९; सूर्यसिद्धान्ते १७९; मातृकाचक्रविवेके १८०; चिद्विलासतत्त्वे १८२; भक्तिस्तोत्रे १८२; १९५; इति प्राचा मुक्तिः १९२; वेदान्तदर्शने तु १९२ पृ०; स्तवचिन्तामणौ १९५; तन्त्रसारे १९९; नवार्णविग्रहे २९३; तन्त्रालोके २०२; कामधेनुतन्त्रे २०३ इति ।

एवं तावत् क्रमप्रकाशिकाख्याया व्याख्याया निबन्धनप्रसङ्गे संस्कृतवाङ्मय वारिधिनिमज्जनात्मकः कियान् श्रमः श्रीमिश्रमहोदयेन कृत इति विज्ञास्यन्ति विज्ञाः। गरीयोभ्योऽनुसन्धानकर्मभ्योऽपि गरिष्ठं व्याख्यानिबन्धनात्मकं कर्मेदं श्रीमिश्रस्य सिध्यति । पारम्परिकव्याख्यानिबन्धनपरम्परायामिदानीं वैरल्यं लब्धवर्णानाम् । क्रमप्रकाशाख्ययाऽनया व्याख्यया खलु तत्रोपस्थितस्याभावस्य परिपूर्तिर्विधीयते ।

व्याख्यासाध्यस्य दुरूहस्य ग्रन्थस्यास्य पद्यानामर्थनिर्धारणे व्याकरणज्ञानमावश्यकम् । क्रमप्रकाशिकाकारेण तद् बहुत्र प्रदर्शितम् । यथा—"अत्र विभासापदे, 'गुरोश्च हलः' इत्यप्रत्ययान्ताट्टाप्" ( ७ पृ० ) । 'कृभ्वस्तयः क्रियासामान्यवचनाः' ( ७ पृ० ) । 'अत्र विरागमयशब्दे प्राचुर्यार्थे मयट्' ( १२ पृ० ) । 'गुरोश्च हलः' इत्यप्रत्यये टापि ( २२ पृ० ) । पञ्चम्यर्थे बहुव्रीहिः ( ३४ पृ० ) । ल्यब्लोपे पञ्चमी ( ३६ पृ० ) । भासनपदे करणे ल्युट् ( ३७ पृ० ) । कर्मणि घञ्, ( ३७ पृ० ) । प्रकाशतामिति लोडन्तक्रियापदम् ( ३७ पृ० ) । कृभ्वस्तयः क्रियासामान्यवचना इत्यनुकरोतेरनुज्ञानार्थकत्वम् ( ६१ पृ० ) । अत्र लेलिह्यनयेति यङ्लुगन्तात् कानचि शानचि वा रूपम्, तत्तु न युक्तम् । यङ्लुगन्तस्यात्मनेपदनिमित्तहीनत्वेन परस्मैपदित्वात् । यद्वा, लेलेढीति लेलिट्, यङ्लुगन्तात् कर्तरि क्विप्, यया लेलिहा ( ७२-७३ पृ० ) । पद्यत्रयेऽपि जातावेकवचनम् ( ८५ पृ० ) । बीजमिति कर्मधारयः । यद्वाऽस्वरोल्लसनस्य बीजमिति षष्ठीतत्पुरुषः । क्षीणमिति नपुंसके भावे क्तः ( ८६ पृ० ) । योनिपञ्चकमयीत्यत्र स्वार्थे मयट् प्रत्ययः । तत्प्रकृतवचने मयट् इत्यत्र मयडिति योगविभागात् । यद्यपि योगविभागो भाष्यादौ न दृष्टः, तथापि प्रयोगदर्शनादभ्यूहनीयः ( ८७ पृ० ) । क्रमवान् भवतीति यावत् तत्प्रकृतवचने मयडिति प्राचुर्यार्थे मयट् ( ८८ पृ० ) । तन्त्रागमदर्शने मनःशब्दोऽकारान्तोऽपि प्रयुज्यत इति न विस्मर्तव्यम्, तन्त्रागमदर्शने किमपि भिन्नमेव व्याकरणं प्रचलितं कालक्रमेण लुप्तमिति साम्प्रदायिकाः ( १०४ पृ० ) । धूञ् कम्पने इति धातोः कम्पनमेव नार्थः, धात्वर्थनिर्णये तत्तदर्थनिर्णयस्तु प्रायोवादमनुसृत्यैव बोद्धव्यः । वस्तुगत्या तु दधात्यनेकार्थानिति धातुरिति नीत्यात्र धूयते प्रकर्षेण स्फुरतीति लोकैरपि सर्वोत्कृष्टतया मत्वा स्तूयते प्रणिपातपुरस्सरं शिरसा उह्यते मनसाऽङ्गीक्रियते सा स्मर्यत इत्यर्थो

ग्राह्यः ( १०८ पृ० )। त्रिधामगशब्दस्य व्याकरणं सुस्फुटम् ( १०८ )। 'टुमस्जो शुद्धौ' इति तुदादिगणपठितो धातुः परस्मैपदे प्रयुज्यमानोऽप्यत्रात्मनेपदे प्रयुक्तः। तत्र 'कवयो बहुलं प्रयुञ्जते' इति नीत्या समाधेयम्। विशिष्टभावनापक्षमनुसरन् हि कविर्विद्वद्भिः क्षन्तव्यः। किञ्च, वैदिकप्रयोगे पदभेदेन प्रयुक्ताः क्रियाप्रयोगा यथा छन्दोवत् सूत्राणि भवन्तीत्यादिमान्यतया सह्या गण्यन्ते, तथैवात्रापि व्यवहरणीयम्। 'भूयान् खलु शब्दस्य प्रयोगविषयः' इति पातञ्जलोक्त्या सर्वं कृत्स्नतयाऽज्ञात्वा परस्मैपदमेवेत्याग्रहो दुराग्रह-पदमेवाञ्चेदिति केचित् ( ११४ पृ० )। उग्रतायां क्रोधार्थे वा प्रयुक्तः स्त्रीलिङ्गार्थक-श्चण्डिमाशब्दः। इमनिच्प्रत्ययान्तस्तु पुंलिङ्गे प्रयुज्यते। 'जनिमृङ्भ्यामिमनिन्' इति सूत्रे आकृतिगणस्वीकारे टाबन्तः कथञ्चिदुन्नेयः (११७ पृ०)। अहमिति प्रकाशप्रतिरूपक-मव्ययम् ( १२८ पृ० )। 'प्रचुरप्रकाशयुतत्वमेवात्र मयडर्थः, 'तत्प्रकृतवचने मयट्' इति सूत्रात् प्राचुर्येण प्रस्तुतं प्रकृतम्, तदुच्यतेऽनेनेति प्रकृतवचनम्, न तु विकारावयवार्थे मयट् ( १२८ पृ० )। गुहायां शेत इति गुहाशयः, 'अधिकरणे शेते' इति पाणिनीयसूत्रादच् ( १२८ पृ० )। क्रुधातोर्ज्ञानमर्थः ( १३३ पृ० )। दृशिरित्यत्र 'इक्श्तिपौ धातुनिर्देशे' इतीक्प्रत्ययः ( १३९ पृ० )। मिथशब्दोऽत्राकारान्तः प्रयुक्तः, छन्दोभङ्गभयात्। सान्त-मिथस्शब्दोऽन्योन्यरहस्यार्थकः ( १४० पृ० )। अर्धशब्दोऽर्थवाचकः ( १९ श्लो०; २४१ श्लो०)। 'कृभ्वस्तयः क्रियासामान्यवचनाः' इति नियमाद् भूरत्र करणार्थकः (१७८ पृ० )। वहधातोरङ्गीकारोऽर्थः, धातूनामनेकार्थत्वात् (१८४ पृ० )। शब्देन साकं चितेर्नित्यसिद्ध-रूपेणास्ति, अस्य अस्मिन् वेति मतुबर्थे 'अन्येभ्योऽपि दृश्यते' इति वार्त्तिकेन वलच्प्रत्यये चिद्वलशब्दो निष्पन्नः ( १८४ पृ० )। कृभ्वस्तयः क्रियासामान्यवचनाः ( २०२ पृ० )। 'इतराभ्योऽपि दृश्यन्ते' इति सूत्रेण सार्वविभक्तिकस्तसिल्। आर्षप्रयोगाच्चक्रशब्दस्य पूर्वनिपातः ( २०६ पृ० )। 'गाङ् गतौ' इति भौवादिको धातुरात्मनेपदीयो यद्यपि, तथापि ङिल्लक्षणमात्मनेपदमनित्यमिति कृत्वा परस्मैपदप्रयोगः साधुरेव। बहुल-मेतन्निदर्शनमित्युक्त्या तत्तद्गणपठितधातुपाठस्य विसंवादितयाऽऽत्मनेपदपस्मैपदादी-नामर्थानां च नियमस्य बहुलतया विभेददर्शनात् प्रयोगभेददर्शनाच्च ( २१२ पृ० ) इति।

यद्यपि क्रमप्रकाशिकाव्याख्याकारेण चिद्गगनचन्द्रिकाया नालम्भि काचन मातृका, तथापि स्थाने स्थाने कृतः पाठभेदविमर्शस्तदीयं वैदुष्यं कामं प्रकाशयति। इह कानिचिन्निदर्शनानि पाठसंशोधनस्य समुपस्थाप्यन्ते—त्वल्लोचनेनेति क्वाचित्कः पाठ-स्त्वपपाठ एव ( ३ पृ० )। वस्तुतस्तु—अत्र 'या च' इत्येव पाठ्यम् ( ३८ पृ० )। उन्मिषतीत्यस्य स्थाने 'उन्मिषसि' इति पाठान्तरं साधु ( ४९ पृ० )। यद्वा 'ईर्यसे' इति पाठो भाति ( ५० पृ० )। 'धूमहे' इति पाठस्तु नाभीष्ट इत्यपपाठ एवेति त्यज्यते ( १०८ पृ० )। 'सभा' इति पाठापेक्षया 'प्रथा' प्रभा' वेति पाठ एव साधुः प्रतीयते। एवं 'न कृताः, अकृताः' इति पाठस्य स्थाने 'अमृताः' इति पाठ एव श्रेयान् प्रतीयते ( १८४ पृ० )। अकुलमिति पाठेऽपि प्रमातृत्वेन शिवे संस्थापिते त्रिपुटीव्यवस्थानिव्यूढे

व नः क्षतिः । किन्तु ग्रन्थेऽत्र शक्तेः प्राधान्येन 'कुलम्' इति पाठ एवोचितः ( १८५ पृ० ) । 'पुरुषः' इति प्रथमान्तपाठः साधुः । 'त्वन्त' इत्यत्र 'स्वन्त इति पाठेऽपि शोभनाऽन्ते यस्याः सा वृत्तिरभेदात्मिका ( २०३ पृ० ) । ईक्षण इति पाठो न युक्तः, अपि तु—ईक्षणमिति क्रियाविशेषणत्वाद् द्वितीयान्तमुचितम् ( २१३ पृ० ) ।

क्रमप्रकाशिकाकारेण पारम्परिकतन्त्रागमवाङ्मयविमर्शपूर्वकं मध्ये मध्ये प्रातिस्विकमपि समुपाहृतम् । किं नाम चिद्गगनम् इति पृच्छायां स आह—व्योमशब्देनाऽऽगमेषु चिद्गगनमुच्यते । तच्च न भूताकाशवद् शिवरूप आधारे स्थितम्, किन्तु निराश्रयम् (५१ पृ० ) । एवमेवाग्रे—'अत्र शरीरान्तः = हृद्देशे गगने = चिद्गगने ज्योतिरात्मकशक्तिरूपेण सदा उदिता, चिद्गगनस्थितमहारूपायाः शक्तेरविनाशित्वात् ( १०३ श्लो०, ६४ पृ० ) चिद्गगनचन्द्रिकानामकरणज्ञानाय १०३, १०४ संख्याकयोः श्लोकयोर्व्याख्यानं प्रेक्षणीयम् । १८३, १९२ संख्याकयोः पद्ययोर्विस्तृता व्याख्या जिज्ञासुभिर्विलोकनीया । क्रमप्रकाशिकाव्याख्यायां कलानां नामानि निवृत्तिः, प्रतिष्ठा, विद्या, शान्ता, शान्त्यतीतेति च पञ्च संख्यातानि, तत्त्वान्येकादश, भुवनानां संख्या शैवशाक्तागमग्रन्थवर्णनाधारेण २२२ इति दर्शिता नामानुल्लेखपूर्वकम् ( १११ पृ० ) । चिद्गगनचन्द्रिकोक्तलक्षणस्य साम्यं श्रीक्रमस्तोत्रलक्षणेन स्पष्टम् । ज्ञानगर्भस्तोत्रे सादृश्यद्योतकोऽयं श्लोक इत्येवंप्रकारेण बहुत्र तौलनिकमनुशीलनमपि लक्ष्यते क्रमप्रकाशिकायाम् ( १७१ पृ० ) । 'सोमपुत्रमपनीय' इत्यत्र ( ३०४ श्लो० ) सोमपुत्रशब्दव्याख्याने क्रमप्रकाशिकायाम् उमया सहितः सोमः शिवस्तत्पुत्रं गणेशम्, लोके वेदे च गणेशो बुद्धिविद्यादीनामधीश इति प्रदर्शितम् । एकत्र ग्रन्थकारोऽपि पर्यालोचितः क्रम-प्रकाशिकाकारेण—इति ग्रन्थकर्तुः कल्पनाप्रौढिः ( २०५ पृ० ) इति ।

एवं तावदस्या गभीराया उच्चस्थितायाश्चिद्गगनचन्द्रिकायाः सुषमापानं पक्षतिवैधुर्याज्जिज्ञासुभिश्चकोरवन्न कर्तुं पार्यते स्म । पण्डितप्रवरेण श्रीमता रघुनाथमिश्रेण महता परिश्रमेण तस्याः प्रकाशिका क्रमप्रकाशिकाख्या व्याख्या धरामवतारिता । सेयं संपूर्णानन्दसंस्कृतविश्वविद्यालयेन सरस्वतीभवनग्रन्थमालाया ११५ प्रसूनतया प्रकाशिता तयाऽनया विद्वज्जना नूनं प्रीणिता जिज्ञासवश्च बाढमुपकृताः स्युरिति दृढं प्रत्येति ।

| | |
|---|---|
| वाराणस्यां<br>गुरुपूर्णिमायाम् २०३७ वै०<br>( २७–७–८० ख्री० ) | भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'<br>निदेशकः<br>अनुसन्धानसंस्थानस्य |

# प्रकाशकीय वक्तव्य

पञ्चम पञ्चवर्षीय योजना के अन्तर्गत विश्वविद्यालय के सरस्वती भवन पुस्तकालय द्वारा दुर्लभ हस्तलिखित एवं मुद्रित ग्रन्थों के प्रकाशन की एक महत्त्वपूर्ण योजना विश्वविद्यालय अनुदान आयोग के स्वीकृत्यर्थ प्रस्तुत की गयी थी। यद्यपि आयोग द्वारा नियोजित विद्वानों का निरीक्षण मण्डल कुछ विलम्ब से आया, लेकिन आयोग ने इस योजना के महत्त्व को स्वीकार करते हुए अपनी स्वीकृति प्रदान की, जिसके लिये आयोग धन्यवादार्ह है।

योजनावधि में समय कम रह जाने और स्वीकृति आदि के आने में विलम्ब के कारण इसे यथाशीघ्र सम्पन्न करने हेतु कुलपति ने विश्वविद्यालय के विद्वानों की एक समिति गठित की, जिसे योजनान्तर्गत ग्रन्थों के प्रकाशनादि का कार्य सौंपा गया। इस विश्वविद्यालय के अनुसन्धान संस्थान द्वारा जो प्रकाशन के कार्य होते हैं, उनका भार उस विभाग पर कम नहीं है। साथ ही यह योजना यतः अलग से सरस्वतीभवन पुस्तकालय द्वारा प्रस्तुत की गयी थी, इस दृष्टि से कुलपति ने इसे अल्पावधि में ही सम्पन्न कराने हेतु एक समिति गठित की थी। समिति इस प्रकार है :—

**अध्यक्ष**

प्रोफेसर बदरीनाथ शुक्ल, कुलपति,
सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी।

**सदस्यगण**

(१) प्रो० जगन्नाथ उपाध्याय, पालिविभागाध्यक्ष तथा संकायाध्यक्ष, श्रमण-विद्या संकाय, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी।

(२) प्रो० व्रजवल्लभ द्विवेदी, सांख्ययोगतन्त्रागम विभाग, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी।

(३) डॉ० भागीरथ प्रसाद त्रिपाठी, ( वागीश शास्त्री ) अनुसन्धान निदेशक, अनुसन्धान संस्थान, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी।

(४) श्री बलराम शास्त्री भारद्वाज, उपपुस्तकाध्यक्ष, सरस्वती भवन, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी।

(५) श्री जनार्दन पाण्डेय, सरस्वती भवन, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी।

(६) श्री लक्ष्मीनारायण तिवारी ( सदस्य तथा संयोजक ), पुस्तकाध्यक्ष, सरस्वती भवन, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी।

समिति ने बड़ी तत्परता से प्रकाशनार्ह ग्रन्थों का चयन करके उनके प्रकाशन की तत्काल व्यवस्था प्रारम्भ की ।

उक्त योजना के अन्तर्गत श्री रघुनाथ मिश्र, आगमाध्यापक, सांख्ययोगतन्त्रागम विभाग, सम्पूर्णानन्द संस्कृत विश्वविद्यालय वाराणसी द्वारा सम्पादित **चिद्गगनचन्द्रिका** नामक दुर्लभ ग्रन्थ का प्रकाशन हुआ है, जो प्रस्तुत है ।

ऐतिहासिक विवेचन से ज्ञात होता है कि यह ग्रन्थ १३ वीं शताब्दी के बाद का नहीं है । मूलग्रन्थ के लेखक का नाम ग्रन्थ में ही उल्लिखित है—'इह कालिदास.......' (श्लो० ३), 'कालि.......दासजल्पितम्' (श्लो० २७२), 'कालिदासरचितां च पञ्चिकाम्' (श्लो० ३०५), 'कालिदासपदवीं तवाश्रितः' (श्लो० ३०६)। पुष्पिका के अनुसार भी महाकवि कालिदास ही इसके रचयिता हैं ।

इस प्रकार स्पष्ट है कि इसके कविकुलगुरु महाकवि कालिदास की रचना होने में सन्देह नहीं किया जा सकता ।

क्रमदर्शन में इस ग्रन्थ का अत्यन्त महत्त्वपूर्ण स्थान है । यह दर्शन स्वयं में जिज्ञासुओं के लिए दुरूह है तथा उसके गाम्भीर्य को स्पष्ट करते हुए ही आचार्य कालिदास ने इस अद्वितीय ग्रन्थ चिद्गगनचन्द्रिका का निर्माण कर क्रमदर्शन को सुप्रतिष्ठित किया है । किन्तु इस उद्देश्य की पूर्ति में यह ग्रन्थ स्वयं में अत्यन्त दुरूह एवं गम्भीर होने से सर्वसाधारण के लिये सहायक नहीं हो सकता ।

मूल ग्रन्थ की ग्रन्थियों के प्रस्फोरण के लिए इसकी कोई टीका उपलब्ध नहीं थी । श्री रघुनाथ मिश्र ने अपनी 'क्रमप्रकाशिका' नामक टीका द्वारा इस दुरूह ग्रन्थ को बोधगम्य करने का प्रयत्न किया है । यह टीका श्री मिश्र के तन्त्रागमशास्त्रीय गभीर ज्ञान का प्रकृष्ट निदर्शन है । इस योजना के अन्तर्गत ऐसे ग्रन्थ के प्रकाशन से मुझे प्रसन्नता है । एतदर्थ इसके व्याख्याकार श्री मिश्र धन्यवाद के पात्र हैं ।

इस प्रकार के ग्रन्थों के प्रकाशन में विश्वविद्यालय अनुदान आयोग ने केवल आर्थिक अनुदान ही नहीं दिया है, प्रत्युत अन्य अनेक प्रकार से सहयोग एवं प्रोत्साहन भी दिया है, एतदर्थ विश्वविद्यालय हृदय से उसका आभारी है ।

**श्री बदरीनाथ शुक्ल, कुलपति,**
सम्पूर्णानन्द संस्कृत विश्वविद्यालय,
वाराणसी ।

दि० ८-९-७९

# भूमिका

**तन्त्रार्थविचारः**

शक्तिसाधनैव तन्त्रशास्त्रसाधना। "तितुत्रथसिसुसरकसेषु च" (७।२।९) इति पाणिनिसूत्रव्याख्यानप्रसङ्गे "उणादिष्वपि सर्वधातुभ्यः ष्ट्रन्" इति नियमानुसारं तनिधातोः ष्ट्रनि प्रत्यये तन्त्रशब्दो निष्पद्यते। अर्थविस्तारस्तनधात्वर्थः, तन्यते विस्तार्यते ज्ञानमनेनेति तन्त्रम्। तदेवं ज्ञानविस्तृतिसाधके शास्त्रे तन्त्रशब्दप्रयोगोऽधुनाऽपि प्रचलति। कामिकागमे इमां व्युत्पत्तिमाश्रित्योक्तम्—

तनोति विपुलानर्थान् तत्त्व(तन्त्र)मन्त्रसमन्वितान्।
त्राणं च कुरुते यस्मात्तन्त्रमित्यभिधीयते॥ इति।

कोशादिषु तन्त्रशब्दार्थनिरूपणप्रसङ्गे शास्त्रमात्रस्य तन्त्रत्वमुक्तम्। ज्योतिषशास्त्रेऽशविशेषस्यतन्त्रेति संज्ञा। "स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधाना त्वसौ" वराहमिहिरः। सांख्यदर्शनस्य तन्त्राख्या तत्कारिकयैव लभ्यते। तद्यथा—"तेन च बहुधा कृतं तन्त्रम्" (७०), "कृत्स्नस्य षष्टितन्त्रस्य" (सा०का० ७२)। आचार्यशङ्करेण स्मृतेस्तन्त्रनाम्ना निर्देशः कृतः "स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता शिष्टपरिगृहीता" (ब्र० सू० शा० भा० २-१-१)। सुश्रुते चायुर्वेदशास्त्रस्य तन्त्रशब्देनोल्लेखः— "इत्यष्टाङ्गमिदं तन्त्रमादिदेवप्रकाशितम्"। कोशादिषु तन्त्रशब्दस्यानेकेऽर्थाः सङ्केतिता यथोपयोगं लोके शास्त्रे च समुपयुक्ता दृश्यन्ते। "तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे" इत्यमरः। प्रश्नप्रतिप्रश्नरूपेण परस्परं शिवशक्त्युक्तशास्त्रभेदेऽपि तन्त्रशब्दप्रयोगः। तल्लक्षणभेदादिकं वाचस्पत्ये यथा—

सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च।
देवतानां च संस्थानं तीर्थानां चैव वर्णनम्॥

तथैवाश्रमधर्मश्च विप्रसंस्थानमेव च।
संस्थानं चैव भूतानां यन्त्राणां चैव निर्णयः॥

उत्पत्तिर्विबुधानां च तरूणां कल्पसंज्ञितम्।
संस्थानं ज्योतिषां चैव पुराणस्थानमेव च॥

कोषस्य कथनं चैव व्रतानां परिभाषणम्।
शौचाशौचस्य चाख्यानं नरकाणां च वर्णनम्॥

हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैव लक्षणम्।
राजधर्मो दानधर्मो युगधर्मस्तथैव च॥

व्यवहारः कथ्यते यत्र तथा चाध्यात्मवर्णनम्।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यधीयते॥ इति।

लक्षणकथनप्रसङ्गे तन्त्रप्रशंसाऽपि तत्रैव—

विष्णुर्वरिष्ठो देवानां ह्रदानामुदधिर्यथा।
नदीनां च यथा गङ्गा पर्वतानां हिमालयः॥

अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा वरः।
देवीनां च यथा दुर्गा वर्णानां ब्राह्मणो यथा॥

तथा समस्तशास्त्राणां तन्त्रशास्त्रमनुत्तमम्।
सर्वकामप्रदं पुण्यं तन्त्रं वै वेदसम्मितम्॥

कीर्तनं देवदेवस्य हरस्य मतमेव च।
पावनं श्रद्दधानानामिह लोके परत्र च॥ इति।

मानार्थकोऽपि तन्त्रशब्दः शैवशाक्तदर्शने रूढिमापन्नः। यथा योगशब्दो नानार्थकस्तथैव तन्त्रशब्दोऽपि। अत एव युक्त्यर्थकं तन्त्रशब्दमादाय 'एकतन्त्रेण', 'तन्त्रेण' इत्यादिकथनं तत्र तत्र द्वयोः स्थाने एकेनैव कार्यनिर्वाहार्थकतया संक्षेपरूपा युक्तिरेव प्रशस्यते।

**आर्षतन्त्रम्**

वाराहीतन्त्रे ऋषिप्रोक्ततन्त्रस्यातन्त्रत्वमुपतन्त्रत्वं च सम्यगभिहितम्—

सैद्धोक्तान्युपतन्त्राणि कपिलोक्तानि यानि च।
अद्भुतानि च एतानि जैमिन्युक्तानि यानि च॥
वसिष्ठः कपिलश्चैव नारदो गर्ग एव च।
पुलस्त्यो भार्गवः सिद्धो याज्ञवल्क्यो भृगुस्तथा॥
शुक्रो बृहस्पतिश्चैव अन्ये ये मुनिसत्तमाः।
एभिः प्रणीतान्यन्यानि उपतन्त्राणि यानि च॥
विसङ्ख्यातानि तान्यत्र धर्मविद्भिर्महात्मभिः।
सारात् सारतराण्येव संख्यातानि निबोधत॥

वस्तुरीत्या विचारणायां प्रस्तोष्यमाणायां निष्पक्षत्वे एतदेव वक्तुमर्हं यत्तन्त्रशास्त्रं साधनात्मकम्। तन्त्रतत्त्वजिज्ञासासिद्धैर्न तत्प्रणयनं क्रियतेऽपि तु तदनुस्मरणमेव। ते हि तत्त्वद्रष्टार ऋषय एतच्छास्त्रबोद्धार उद्धर्तारः, न तु प्रणेतारः कर्तारो वा। तस्मात् प्रवाहपरम्पराप्राप्तस्यास्यानादिशास्त्रस्यानादित्वं सकलशास्त्रसम्प्रदायसिद्धम्। यदप्युक्तं तत्त्वं तन्त्रवत्प्रतिभासमानं कैश्चिदाचार्यैर्वाराहीतन्त्रवचनमनुसृत्य स्वतो वा प्रतिपादितम्, तत्तु नीतिशास्त्रापरपर्यायस्य बार्हस्पत्यादितन्त्रस्य प्रतिपादनतात्पर्यावसायकमतः मन्त्रद्रष्टार ऋषयो यदब्रुवन्नादितन्त्रानुस्मरणरूपं न तत्सर्वमुपतन्त्रात्मकमेव। अथापि यदगस्त्यसंहितासनत्कुमारसंहितागौतमीयतन्त्रादिरूपं वाङ्मयं तस्यर्षिप्रोक्तत्वे न संदेहलेशः।

तन्त्रस्य विभागनिरूपणक्रमे आगमो यामलं तन्त्रं चेति त्रिधा विभक्तमेतच्छास्त्रम्। परन्तु समानार्थकशब्दरूपेणैव पूर्वोक्तानामागमादीनां तन्त्रशब्देन व्यवहारः। विश्वसारतन्त्रे सृष्टिप्रलयदेवतादीनामर्चनादिषट्कर्मसाधके ध्यानयोगादिसाधके ग्रन्थविशेषे तन्त्रागमशब्दप्रयोगः। कुलार्णवतन्त्रे तु दिव्यगतिप्राप्तिसाधकात्मतत्त्वनिरूपकं शास्त्रं तन्त्रागमशास्त्रमित्युक्तम्—

आचारकथनाद् दिव्यगतिप्राप्तिविधानतः।
महात्मतत्त्वकथनादागमः कथितः प्रिये॥ (पृ० १७)
सृष्टिश्च प्रलयश्चैव देवतानां यथार्चनम्।
साधकं चैव सर्वेषां पुरश्चरणमेव च॥
षट्कर्म साधनं चैव ध्यानयोगश्चतुर्विधः।
सप्तभिर्लक्षणैर्युक्तमागमं तद्विदुर्बुधाः॥

इति रुद्रयामले या आगमशास्त्रस्य व्याख्या कृता, सैव वास्तविकी प्रसिद्धार्थप्रतिपादिका मनोज्ञा च।

**आगमशब्दार्थः**

आगमशब्देऽक्षरत्रयस्य सन्निवेशः—"आगतं गतं मतं चेति" तथा च—

आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखे।
मतं च वासुदेवस्य तस्मादागम उच्यते॥ इति।

शिवस्येशानतत्पुरुषाघोरवामदेवसद्योजातात्मकस्य मुखरूपस्याखिलवाङ्मयस्योद्गम-रूपस्य शास्त्रप्रतिपादकत्वेनोत्प्रेक्षणं साभिप्रायम्। तदेवमागतगतमतानां समन्वित-मर्थमुपसंगृह्योक्तं जयरथेन—

प्रसिद्धिरागमो लोके युक्तिमानथवेतरः।
विद्यायामप्यविद्यायां प्रमाणमविगानतः॥
प्रसिद्धिरविगीता हि सत्या वागैश्वरी मता।
तथा यत्र यथा सिद्धं तद्ग्राह्यमविशङ्कितैः॥
(तथा यच्च यदा सिद्धमिति पाठान्तरम्)।

युक्तिमती अयुक्तिमती वा विद्याविषयिणी अविद्याविषयिणी वा अविगीता (अनिषिद्धा अनिन्दिता अनुपेक्षिता) प्रसिद्धिरेवागमः। सा च प्रसिद्धिर्विचार्यमाणाऽनादिरेव सिद्ध्यति। जैनबौद्धागमानामपि तत्तन्मूलपुरुषोक्ताविगीतप्रसिद्धिमूलत्वादनादित्वमेव। तेन सर्वेषामागमानां श्रद्धावदनुयायिवर्गे निःसंशयप्रवृत्तिदर्शनात् प्रामाण्यं संदृश्यते। अत एवोक्तम्—

यत्किञ्चिद् वाङ्मयं लोके बौद्धमार्हतवैदिकम्।
वैमलं पाञ्चरात्रं च लाकुलं साङ्ख्यमेव च॥
तद् ग्राहयेन्न सन्देहः ........ .................... .. इति।

यथा "शक्तिशिवौ शिवतत्त्वम्" इति सौभाग्यसुधोदयानुसारं शक्तिशिवयोर्नामद्वयसत्त्वेऽपि तत्त्वात्मना ऐक्यमेवमेव तन्त्रागमयोर्नामभेदसत्त्वेऽपि विषयात्मना ऐक्यमेव, तन्त्रागमयोर्ज्ञानरूपतायां पर्यवसानात्। ज्ञानं च शब्दात्मकमेव स्वीक्रियत इत्युक्तं स्वच्छन्दे—

आगमो ज्ञानमित्युक्तं ह्यनन्ताः शास्त्रकोटयः।
शास्त्रं शब्दात्मकं सर्वम्...........................॥ (४।३४०)

आगमस्य ज्ञानरूपत्वे जयरथेन प्रसङ्गादेकं पद्यमुद्धृतं तदपि पर्याप्तं गमकम्—

इत्यागमं सकलशास्त्रमहानिधाना-
च्छ्रीशम्भुनाथवदनादधिगम्य सम्यक्।
शास्त्रे रहस्यरससंततिसुन्दरेऽस्मिन्
गम्भीरवाचि रचिता विवृतिर्मयेयम्॥

निखिलशास्त्रनिष्णाताद् गुरोः शम्भुनाथमुखादागमं ज्ञानं सम्यगवगम्येति वर्णनादागमतन्त्रयोर्ज्ञानरूपत्वं स्फुटं प्रतिध्वन्यते। वाक्यपदीयकारोऽपि—"चैतन्यमिव यश्चायमविच्छेदेन वर्तते। आगमस्तमुपासीनो हेतुवादैर्न बाध्यते॥" (१-४१) इति वदन् श्रुतिस्मृतिलक्षणस्यागमस्य सर्वशिष्टपरिगृहीतत्वं संमनुते। स च चैतन्यमिव तेनाविच्छिन्नतया तदाश्रयेणोपास्यमानस्तर्कैर्न बाध्यत्वमर्हति। प्रत्यक्षस्यापि प्रामाण्यमागमादेव। ज्ञानस्य शब्दाश्रितत्वे व्यवस्थापिते स्वयं कस्यचन धर्मस्याज्ञातारः श्रुत्वाप्युपास-

मानाः सद्गतिप्रापका भवन्तीति । यथोक्तम्—"अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते । तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥" अनेन वचनेन आगम-प्रामाण्यस्य दार्ढ्यमुपन्यस्यते । एवं च प्रसिद्धिरूप आगमस्त्रिविधः । प्रतिभारूपः प्रथमः, निबद्धप्रसिद्धिरूपो द्वितीयः, अनिबद्धप्रसिद्धिरूपस्तृतीयः । आसु तिसृषु प्रसिद्धिषु प्रमाणान्तरान्वेषणं नापेक्षितम्, एतासामविगीतनिरूढलोकव्यवहारानुगतत्वात् । आप्तवादे तु तदन्वेषणीयमेव । आप्तता च वक्तव्यवस्तुविषयकज्ञानपूर्विका एव । लोकवचनरूपा वा शास्त्रवचनरूपा वा सा कमपि मूलमपेक्ष्यैव समागता भवेदिति तत्र संदेहस्य सावकाशत्वात् । यदि च आप्तस्य स्वयमनुभूतं साक्षात्कृतं वा वस्तु भवेच्चेद् तत्तु प्रमाणमेव । स्वीयानुभूतेरपह्नोतुमशक्यत्वात् । बालवृद्धयुवानः स्वानुभवसमक्षम् आप्तवाक्यस्य प्रामाण्यं किञ्चिन्न्यूनमेव मन्यन्तेतराम् ।

## कालिदासः

संस्कृतसाहित्य ऐतिहासिकतत्त्वस्य न तादृशं माहात्म्यं यथा शास्त्रप्रक्रियायाः । भारतीया भारतीसेवका भारतं स्वजन्मस्थानं स्वीकुर्वन्तः सर्वथौपाधिकभेदशून्या देशकालाकारनिर्देशरहिता एवाभवन् । शास्त्रार्थतत्त्वपरिशीलनोद्यतानां मनीषिणां देशकालाकारादिज्ञापनं व्यर्थत्वेन गौणमेवासीत् ।

भारतीयाऽखण्डतैव तेषां कृते स्पृहणीयगवेषणाविषयः । जगत्प्रसिद्धकवि-रत्नकालिदासोऽपि नैतद् वर्त्मातिशेते । साहित्ये दर्शने चाप्रतिमः क्रान्तदर्शी कविकुल-गुरुरसौ स्वस्य स्वगुरोश्च दार्शनिकसिद्धान्तस्यापि न कुत्रापि कथमप्युल्लेखं चकार । एतत्सर्वं सार्वभौमसत्याग्रह एव । अनेके कालिदासा भारतभुवं स्वजनुषाऽलञ्चक्रुः । नामसाम्यभाजोऽधुनापि वर्तन्ते काल्या दासाः । यदेयं दासता रूढितां भजते सतता-राधनावशात् तदा दीर्घतां त्यक्त्वा भवति ह्रस्वः सत्त्वगुणोद्रिक्तः प्रकाशचिन्मयरूपः कालीदास एव कालिदासः । चतुर्दशशतकानन्तरं शिलालेखादिभिः कालिदासस्य सुस्पष्टोल्लेखः समुपलभ्यते । मालविकाग्निमित्रे शुङ्गवंशीयाग्निमित्रस्य खिस्ताब्द-पूर्वे द्वितीयशतके विद्यमानस्य चर्चा दृश्यते । एतत्तथ्यमवलोक्य विक्रमसंवत्सरस्थाप-कस्य विक्रमादित्यस्य समसामयिको महाकविरयमिति निश्चेतुं शक्यते ।

कस्यापि समयनिर्णयाय बहिरङ्गपरीक्षाऽन्तरङ्गपरीक्षा चापेक्ष्येते । भाषा-प्रयोगेण सिद्धान्तसाम्यदृष्ट्या च कालनिश्चये साहाय्यं लभ्यते । ग्रन्थानां संख्यां विषयं वर्ण्यविषयं काव्यनाटककथावर्णितविषयं च समीक्ष्य पूर्वोक्तसाम्यवैषम्ये निर्धार्येते । तद्वर्णितविषयदर्शनेनापि समयशासकादिदशाऽनुमीयते । महाकवेः समये बौद्धसंस्कृतेः प्राधान्यमनुमीयते । अभिज्ञानशाकुन्तले भरतवाक्ये—"प्रवर्ततां प्रकृति-हिताय पार्थिवः सरस्वती श्रुतिमहती महीयताम्" इत्येवं भारतीयसनातनसंस्कृतेर्दयनीय-दशां दर्शं दर्शं किञ्चिन्नैराश्यं गतः सन्नेव कविरित्थं कर्तव्यबोधोत्थापकवचां-स्युदीरयति शासकानां कृते । प्रजासु कर्तव्यबोधजागरणाय श्रुत्या महती सरस्वती वाग्व्यापारो महीयतां लोके माहात्म्यं भजतां लोकाः श्रुतीनामनुशीलनं कृत्वैव

जीवनयात्रां कृतार्थयन्त्विति हार्दमभिलाषं प्रकटयति। कविजीवनकाले बौद्धसंस्कृतेरेव राजाश्रितत्वमासीदित्यत्र न कस्यापि सचेतसो विदुषो विमतिः। तत्प्रणीतकाव्येषु रघुवंशकुमारसंभवमेघदूतादिषु नाटकेषु चाभिज्ञानशाकुन्तलविक्रमोर्वशीयमालविकाग्निमित्रादिषु याज्ञिकसंस्कृतेः प्राधान्यमुत वाऽन्यस्या इति विचार्यमाणे वैदिकसंस्कृतेरेव तत्कृतप्रशस्तीनां प्रतिपदं दर्शनं जायते। अभिज्ञानशाकुन्तलचतुर्थाङ्के "वत्से, दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकमुखे एवाहुतिः पतिता" इति। कुलपतेः कण्वस्योवत्याऽन्युपासनायाः सङ्केतः। सर्वत्रैव काव्यनाटकयोः पात्राणां राज्ञां राज्ञीणां वा कथोपकथनव्यवहारादिना शुद्धसनातनभारतीयसंस्कृतेरेवाभासः प्राप्यते। भारतं प्रति कविहृदये कियती श्रद्धा आसीदिति तु कुमारसंभवप्रथमपद्योच्चारणेनैवावगन्तुं शक्यते—"अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः" इति। यत्र नगाधिराजोऽपि देवतात्मा तत्र जङ्गमानां का कथेति प्रेक्षावतामेव विषयः। कामदहनपूर्वकमेव धर्माविरुद्धकामपुरुषार्थस्य सेवनेनैवात्र भारते सद्गार्हस्थ्यं प्रथते। एतादृशदाम्पत्ये समुत्पन्नः कुमार एव तारकासुरं हन्तुं प्रभवेत्। "गुरुप्रदेयाधिकनिस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च" इति याचकदात्रोश्चरित्रं भारते जगति वाऽदृष्टपूर्वमेव। एकं लघु काव्यं मेघदूताख्यं प्रणयता कविवरेण शैवशाक्तदर्शनस्य जडाजडनिरपेक्षतया जगतश्चिद्रूपत्वसिद्धान्तः सम्यगनुमोदितो, जडस्य मेघस्य चेतनकरणीयसंदेशहारित्वं कारयता। एतावत्प्रसिद्धिमाप्तवतोऽपि तस्य जन्म कस्मिन् कुले देशे काले वाऽजनिष्टेति निश्चेतुं न पार्यते, ग्रन्थेषु कुत्रापि संस्तवस्यालभ्यत्वात्। केवलं वागर्थतादात्म्यकथनेन तस्य शक्त्युपासकत्वम्। तन्नाम्नि शक्तेर्नामाप्युद्घुष्टमेव—"वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये। जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥" इति। अत्र परावाग्रूपा शक्तिः, अर्थरूपः शिव इति, "शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा। अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः॥" इति वायवीयसंहितोक्तेः। शाकुन्तलप्रथमपद्ये स्वीयदार्शनिकसिद्धान्तं समुद्घोषयता महाकविना—"यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः" (१) इति। न शिवस्याष्टमूर्तित्वमेव केवलं प्रत्युत तस्यावतारः परार्थ एवेत्यपि प्रतिपादितं कुमारसंभवे। तद्यथा—

विदितं वो यथा स्वार्था न मे काश्चित् प्रवृत्तयः।
ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः॥ (६।२६)

परार्थत्यक्तसर्वस्वोऽसौ देवो देवानामरिविप्रकृतीनून्मूलयितुं शिवशक्तिसामरस्यं जग्राह—

सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः॥ (६।२७)

सृष्टिरहस्यप्रकाशनतात्पर्येणैव कुमारसंभवकाव्यमवतारयन् कविः "आत्मा वै पुत्रनामासि", "स आत्मानमसृजत्" इत्यादिश्रुत्या कुमारोत्पत्तिच्छलेन आत्मनः सृष्टिमेव सृष्टित्वेनावगमितवान्। अतः सर्वाऽपि सृष्टिः शिवात्मिका भाषान्तरेण शक्त्यात्मिका

चेतनैव । एतन्मतं हृदि निश्चित्यैव हिमालयस्य देवात्मत्वमपि महता कण्ठेन प्रतिपादितं कविमूर्धन्येन । किमधिकम्, कण्ठरवेणैव शिवस्य विश्वरूपत्वमपि तेन प्रोद्घोषितम्—

जङ्गमं प्रैष्यभावे वः स्थावरं चरणाङ्कितम् ।
विभक्तानुग्रहं मन्ये द्विरूपमपि मे वपुः ।। ( ६।५८ )

यथा जङ्गमसृष्टिः प्राणिष्वनुग्रहात्मिका, तथैव स्थावरसृष्टिरपि । अतो द्विरूपं वपुरनुग्रहात्मकमित्युक्तं "विभक्तानुग्रहं मन्ये" इति । अन्यच्च, शिवस्य व्यापकत्वमपि तन्मुखेनैव प्रत्यपीपदत् कविः —

भवत्संभावनोत्थाय परितोषाय मूर्च्छति ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ।। ( ६।५९ )

काली तस्याराध्यदेवतैवेति ख्यापयितुं सुस्पष्टमवोचि—

तासां च पश्चात्कनकप्रभाणां काली कपालाभरणा चकासे ।
बलाकिनी नीलपयोदराजी दूरं पुरः क्षिप्तशतह्रदेव ।। ( ७।३९ )

एतेन कविकुलगुरोः कालिदासस्य क्रमदर्शनापरपर्यायं कुलदर्शनमेवाभिमतं मुख्यं दर्शनमासीदिति सडिण्डिमघोषं वक्तुं शक्यते ।

## एकत्वसाधनस्थितिः

सत्यपि सिद्धान्तसाम्ये व्यक्तेरेकत्वं न सिद्ध्यति । नामसाम्येऽपि यथा व्यक्तेरेकत्वं नावधारयितुं शक्यते । भारतीयेयं परम्परा न प्रत्युत सार्वभौम एष नियमो यत् पुत्रपुत्र्योर्नामकरणं देवानां पूर्वपुरुषाणां प्रथितयशसां महात्मनां नाम्ना क्रियते । न हि नामकरणमात्रेण तेषु तद्गुणाः संभाव्यन्तेऽथापि शुभाशया क्रियत एव । यथा व्यासशङ्कराचार्यसदृशानां महात्मनां नामानुकरणमद्यापि स्थानपरिकल्पनया क्रियत एव । एतादृशान्युदाहरणानि प्रभूतानि दातुं शक्यन्ते । नामव्यक्तित्वयोर्निधारणाय स एवायमितिप्रत्यभिज्ञापनाय न कापि युक्तिरिष्टसाधिका स्यात् । सिद्धान्तसाम्यमेव गमकं भवेदित्यत्र न सचेतसां विमतिः । काल्या दास एकसिद्धान्तस्वीकारेण स्वाभिजनक्लृप्तसंज्ञापरिहारेण कालिदासो भवितुमर्हतीत्यत्र न विपश्चितां विप्रतिपत्तिः । यद्येवं तर्हि सिद्धान्तसाम्यपुरस्कारेण मूलकालिदास एव चिद्गगनचन्द्रिकाकार इत्यत्र सूक्ष्मेक्षिकया प्रयतनीयं गवेषणैकधनैरित्यभ्यर्थ्यते । चन्द्रिकाकृत् कालिदासो यदि मूलकालिदासो नास्ति चेत्, तथापि यदोत्पलदेवस्येश्वरप्रत्यभिज्ञाकारस्योत्पत्तिरासीत् तत्समकाले ततः प्राग् वा स आसीदित्यकामेनापि स्वीकर्तव्यमेव । यत एतद्ग्रन्थे कस्यापि आगमतन्त्रादिप्रसिद्धदार्शनिकस्य चर्चा नायाता दृश्यते । न वा तेन कुत्रापि कस्याप्याचार्यस्य भङ्ग्यन्तरेणापि निर्देशः कृतः ।

काव्यनाटकाभ्यां क्रमदर्शनस्तोत्रग्रन्थस्य साम्यनिरूपणकार्यमेव नोचितं कयापि दृष्ट्याऽथापि क्वचित् किञ्चित्साम्यदर्शनेन साम्यदृष्टिर्बलवती भवेदत्र तु सिद्धान्तदृष्ट्या बहुसाम्यं प्राप्यते, कानिचित् पद्यानि यथा—

रघुवंशे ४-१२ श्लोके—"राजा प्रकृतिरञ्जनात्"
चन्द्रिकायाम्—"राजनात् प्रकृतिरञ्जनाच्च माम्" २।६५.

रघुवंशे—वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ १-१.

चन्द्रिका—याऽहमित्युदितवाक् परा च सा
यः प्रकाशलुलितात्मविग्रहः ।
यौ मिथः समुदिताविहोन्मुखौ
तौ षडध्वपितरौ श्रये शिवौ ॥ १-६ ।

मालविकाग्निमित्रे—एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्ता संमिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥ १ ॥

चिद्गगनचन्द्रिका—स्थूलं सूक्ष्मं परं च त्रिविधमिह जगद् यत्प्रथावेशसिद्धया
युक्तं सत्ता यदीया स्फुरति च परतः स्वप्रथैकस्वभावा ।
भामूर्ति यं विमर्शक्रियमनुपतिता लक्ष्यते लोकवृत्तिः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥ २ ॥

कविकुलगुरोः कालिदासस्येयं परम्परा यदसौ स्वकाव्येऽर्धश्लोकमविकलमेवानुवर्तयति तद्यथा—

रघुवंशे—वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥२।३१॥

कुमारसंभवे—निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम् ।
तच्छासनात् काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे ॥३।४२॥

अभिज्ञानशाकुन्तले—या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥

चिद्गगनचन्द्रिका—अष्टपुर्युदितबीजवासना—
संहृतिप्रवणरश्मिपुञ्जया ।
लीढमात्रमुखभेदिता त्वया
भूयसे जननि लेलिहानया ॥ १२१ ॥

अष्टधा स्फुरति या पुरी शिवे
सूक्ष्मभावमुपगम्य लैङ्गिकम् ।
तज्जपौष्टकृतचित्तवृत्तयो
वासनास्त्वदुदरस्थिते पशौ ॥ ६३ ॥

विश्वात्मत्वं शिवस्य प्रस्तुवन् कविस्तन्त्रागमसिद्धान्तसमर्थनं द्रढयति ।
कुमारसंभवे—अथ विश्वात्मने गौरी संदिदेश मिथः सखीम् ।

दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥ (६ । १ )

विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥ ५।७९

विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम् ।
यमामन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥ ५।८१

विश्वात्मकं विश्वोत्तीर्णमित्युभयमेकत्र—

चिद्गगनचन्द्रिका—मातृमेयमितिसाधनात्मिका
त्वत्कृतोन्मिषति या विकल्पधीः ।
त्वत्स्वरूपमकलङ्कितं तया
कस्य देवि विदुषो न मुक्तता ॥२३॥

द्वैताद्वैतोभयात्मकम्—चिन्मयीकृतमतोक्षदृश्यया
गुह्ययाम्ब विपरीतचर्यया ।
लभ्यते समरसीकृताखिल-
द्वैतवृत्ति तव घस्मरं वपुः ॥२७॥

सृष्टिरैश्वरं वपुराश्रयति—विश्वमूर्ति यददृष्टविग्रहं
त्वत्प्रशान्तिपदमैश्वरं वपुः ।
तत्र ते य उदयः कुलेशि ! तं
सृष्टिराश्रयति पञ्चवाहता ॥३४॥

शक्तिः स्वस्मिन् जगद् विलापयति—

शान्ततां भजदनाश्रितं पदं
शक्तिमात्रजगदेकसद्म यत् ।
निर्मलज्वलनशौचवज्जगत्
तत्र हि त्विषि निमज्जितं त्वया ॥५८॥

किं बहुना, प्रकृतिविकृतिभावं संहारसृष्ट्योर्वदता कविकुलशिरोमणिना कालिदासेन क्रमदर्शनाधीश्वर्याः कालीशक्तेः सर्वोत्कृष्टं महत्त्वं स्वाभिमतत्वं च तारस्वरेण चक्षुष्मतां पुरस्तात् समुद्घोषितम् । रघुवंशे—

प्रकृतिः मरणं शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु लाभवानसौ ॥ ८–८७ ॥

संहार एव स्वात्मस्वभावः, अत एव काल्या सर्वं स्वात्मनि संहृत्य सुखं स्थीयते, सदा विश्वरसभक्षणायैव कपालमेवाभरणरूपतया स्वीक्रियते ।

संहृतोर्ध्वनिकरस्मृतावधि-
व्यंक्तमण्डतनुरम्ब भास्वरम् ।
काललक्षणकलाप्रदीप्तये
त्वं हि विश्वरसभक्षमास्थिता ॥
(चि० ग० च० २४२)

जगदिदं कार्यात्मकं कारणं तु शक्तिरेव । शक्तौ प्राप्य प्रकृतिस्थत्वं लभ्यते । तन्त्रागमसिद्धान्ते चिद्रूपा पराशक्तिः सृष्ट्युन्मखी सर्वतः प्राक् प्राणात्मना परिणमति । तत इन्द्रियादिक्रमेण पृथिवीपर्यन्ता सृष्टिः । तदुक्त्–"प्राक् शक्तिः प्राणे परिणता" इति। शक्तेः सकाशात् प्राणस्य सृष्टिः पुनः संहारे शक्तौ लयेन कारणात्मिकां प्रकृतिं लभते। अतः सर्वमपि प्राणिचक्रं संहारमवाप्यैव प्रकृतिस्थत्वं लभेत, शक्तेः पृथग्भावस्तु विकृति-दर्शवेति शैवशाक्तसिद्धान्तमनुरुद्ध्यैव पूर्वोक्तश्लोकस्वारस्यं संघटते। कालिदास-प्रणीतनिखिलमपि काव्यनाटकवाङ्मयं क्रमदर्शनापरपर्यायकुलदर्शनानुप्राणितमेव । सर्वत्रैव कविर्मङ्गलाचरणे शिवशक्त्यन्यतरमेव स्मृत्वा प्रारभते। कुलदर्शने शरीर-मेव तीर्थमिति कृत्वा बाह्यतीर्थपरिभ्रमणादि निषिद्धमिव संमन्यते। एतत्सिद्धान्तं मनसिकृत्य हिमवन्मुखेन कविः प्रस्तौति—

अद्य प्रभृति भूतानामधिगम्योऽस्मि शुद्धये।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते॥ कु० सं० ६–५६॥

अर्हद्भिः शिष्टैरध्यासितं स्थानं स्थावरं यदि तीर्थं स्यात् तर्हि चिदात्मना-धिष्ठितं शरीरं तीर्थं नेत्यत्र का वाचोयुक्तिः । चिच्छक्तेरेवावरोहक्रमेण प्राणादिपञ्च-भूतसङ्घातमयं शरीरं षट्चक्रभावनया, इडापिङ्गलासुषुम्णारूपत्रिवेणीसंवलनया मूला-धारस्थत्रिवलयाकारया कुण्डलिनीशक्त्या ब्रह्मरन्ध्रस्थशिवशक्तिसामरस्यरूपगुरुपादु-कया सुशोभितं सर्वोत्तमं तीर्थमिति भावना(साधना)प्रधाने शैवशाक्तदर्शने कुलार्णवादि-तन्त्रसमर्थिते क्वापि संशीतिः साधनापथवैगुण्यापादिका महत्युद्भ्रान्तिरेव ।

**कालिदासस्याद्वैततत्वाग्रहः**

शैववैष्णवशाक्तदौर्गसौरवैनायकनारसिंहादिभावनासमर्थकेषु पारस्परिक-विवादमभिलक्ष्य कवेः सामञ्जस्यभावना समजायत। तच्छलेन कुमारसंभवे तेन त्रिदेवेषु उत्तममध्यमकनिष्ठत्वादिभावग्रहिलत्वं भर्त्सितम्—

एकैव मूर्तिर्विभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचिद्वेधास्तयोस्तावपि धातुराद्यौ ॥ ७४४ ॥

तदेवमेकमेवाद्वितीयं तत्त्वमौपाधिकं पौर्वापर्यमेतेषां ब्रह्मविष्णुशिवानामिति ।

**कालिदासस्य कार्यकारणयोरनाश्वासः**

शैवशाक्तदर्शनवत् कालिदासमतेऽपि कार्यकारणभावस्य नियतत्वं नाङ्गीक्रियते। अत्र दर्शने तत्त्वात्मकमेव जगत् स्वीकृतम्, तत्त्वभिन्नस्य तस्याकिञ्चित्करत्वात् । तत्त्वेषु कार्यकारणभावो शास्त्रान्तरवत् स्वीकृतोऽपि, तस्य द्वैविध्यं पारमार्थिककाल्पनिक-

भेदात्। तत्र पारमार्थिके लौकिकदृष्ट्या सृष्ट्याद्याविर्भावेऽपि स्वतन्त्रप्रकाशस्वरूप-स्फारमयत्वादस्य विश्वस्य सृष्टावपि स्वरूपाभिन्नरूपया स्थित्या स्वरूपविश्रान्त्या च संहृत्या स्थितत्वान्न किञ्चित् स्वरूपातिरिक्तत्वमस्य संजातमिति पारमार्थिकत्वमेव। भाषान्तरेण कर्तृस्वभावस्य स्वतन्त्रस्य भगवत एवंविधेन शिवादिपृथिव्यन्तेन वपुषा स्वरूपभिन्नेन स्वरूपविश्रान्तेन प्रथनं प्रकाशनं पारमार्थिकत्वम्। कल्पितस्तु परमेश्व-रेच्छया नियतिप्राणया निर्मितः। स च यावति यदा नियतपौर्वापर्यविभासनं सत्यप्य-धिके स्वरूपानुगतमेतावत्येव, तेन दण्डचक्रादेः सत्यप्यन्वये मृदेव कारणं तदपि सह-कारीति स्वरूपानुगम इति तेन कृत्तिकारोहिण्युदयादौ चन्द्रोदयः सूर्योदयो वेत्यत्र कार्यकारणप्रयुक्तपौर्वापर्यविभाससत्त्वेऽपि न काचित् क्षतिस्तत्र रूपान्वयाभावात्। रूपान्वयोपकृतपौर्वापर्यनियमात्मककार्यकारणताया अवभासनं परमेश्वरेच्छया न तु वास्तवया स्थित्या। तेन योगीच्छातोऽप्यङ्कुरोत्पत्तिर्बीजादपि। स्वप्नादौ प्रकृतभिन्न-घटादेरप्यङ्कुराद्युत्पादः। स्वप्ने स्वप्नदृष्टवस्तुनः प्रबोधपर्यन्तं वस्तुनोऽवभासः सत्यवत् प्रतीतोऽपि। तत्रापि परमेश्वरकर्तृत्वस्य प्रमोषः कर्तुमशक्यत्वेन पारमार्थिकत्वं स्थित-मेव। पारमार्थिकस्थितौ स्वीकृतायां सत्यामेव सर्वमप्युल्लिख्यमानं दृश्यमानं वा घटते नान्यथा। एवं स्थिते सामग्र्याः कारणत्वस्वीकारे न काप्यनुपपत्तिः। सामग्री नाम प्रमातृरूपविश्रान्तिरेव। न तु व्यस्तानां दण्डचक्रचीवराणां प्रत्येकं कारणत्वम्, तेषामचेतनत्वात्। यथा षण्णां कारकाणां कर्तर्येव स्वतन्त्रेऽन्वयः, तदभावे तेषां परार्थतयाऽन्वयानर्हत्वात्। इत्येवं संवेदनस्वातन्त्र्यस्वभावः परमेश्वर एव सर्वत्र घटपटादौ कर्ता। तदुक्तं तन्त्रालोके—

> कुम्भकारस्य या संविच्चक्रदण्डादियोजने।
> शिव एव हि सा यस्मात् संविदः का विशिष्टता॥ (त० सा० ८ आ०)

तस्मात् सामग्रीवादोऽपि, तदादाय कार्यकारणभावोऽपि परमेश्वरकर्तृतायामुपो-द्बलको नान्यत्किञ्चित्। एतेन सृष्टकार्यकारणभावस्यानियतत्वं स्थितमेव। अत एव कविनाऽभिज्ञानशाकुन्तलसप्तमाङ्के सपत्नीकस्य मारीचस्य प्रजापतेर्ब्रह्मणो मानस-पुत्रस्याशीर्वादप्रसङ्गे राजमुखेनैव पूर्वोक्तस्य समर्थनमकारि—

राजा—भगवन्! प्रागभिप्रेतसिद्धिः पश्चाद् दर्शनम्। अतोऽपूर्वः खलु वोऽनुग्रहः। कुतः—

> उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक् तदनन्तरं पयः।
> निमित्तनैमित्तिकयोरयं क्रमस्तव प्रसादस्य पुरस्तु संपदः॥ ७-३०॥

भगवतो मारीचस्य दर्शनात् प्रागेव पुत्रमुखदर्शनं क्रोडे संस्थापनप्रयुक्तापूर्वसंप्र-हर्षादिकं सम्पन्नं ततो दर्शनानन्तरं शुभाशिष उदर्कं मङ्गलनिर्भरं करिष्यन्तीति विचित्र एव महतां योगजसंनिकर्षजः संप्रसादः। निमित्तनैमित्तिकयोः क्रमव्यत्यासं कण्ठरवेण समर्थयता कविकुलशिरोमणिना निरुपादानकसृष्टिक्रमस्य अकारणककार्योत्पादस्य बुद्धिपूर्वक एव नाटककथायां संनिवेशः कृत इति शैवशाक्तोभयदर्शनाभिप्रेतत्वं स्वात्मनः सम्यक् प्रतिपादितम्।

शक्तिप्राधान्यस्यापि तत्कर्तृक उपन्यासः। शैवदर्शननाम्ना प्रथिते दर्शने शक्तेरेव प्रामुख्यं वर्णितमवलोक्यते। शाक्तदर्शने तत्प्रमुखतायां कः संशयः। उभयत्रापि शक्तिरेव प्रभुत्वमर्हति। कविनाऽपि शाकुन्तलस्य पूर्वोक्ताङ्के सुस्पष्टमभाणि—

मारीचः—वत्से! विदितार्थासि। तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः। पश्य,

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा॥ ३२॥

शापात् स्मृतिरोधेन रूक्षेऽसहृदये सम्प्रति प्राप्तानुग्रहेऽपेततमसि भर्तरि तवैव प्रभुता स्थास्यति, भूतेऽप्यनुतापात्मनाऽऽसीत्, वर्तमाने तु मत्समक्षमेव वर्तत इति त्रिकालाबाधिता तत्कर्तृकप्रीत्या सदा सुखमासिष्यस इति शुभाशिषा संयोजयाव आवां दम्पतीति प्रद्यट्टकसंनिवेशमारचयता कविशेखरेण स्वेष्टदेवतायाः काल्याः प्रशस्तिरेव कृता स्वप्रणीतकाव्यनाटकयोः। प्रकृते चिद्गगनचन्द्रिकाख्ये कोषकाव्ये तु प्रतिपदं संनिवेशितेति न तिरोहितं सुमेधसाम्। शक्तेः प्राधान्यादेव शिवे व्यापकतेति शिवमाहात्म्यख्यापके कोषकाव्ये "ननु वामैव विभुता" इति ब्रुवता पुष्पदन्तेनापि सघोषमाघोषितम्। किं बहुना, व्यासोच्छिष्टं कविकर्म जगति प्रसृतं प्रसरति चेति वेदव्यासापरनामधेयेनार्षप्रज्ञावता सप्तशतीकोषकाव्ये—"शिवदूतीति लोकेऽस्मिन् ततः सा ख्यातिमागता" इत्यत्र शिवो दूतो यस्याः सेत्यन्वर्थसंज्ञया शिवस्यावरत्वं प्रसङ्गादुद्घाटयता शक्तिप्राधान्यं प्रपञ्चे सुनिपुणं प्रतिष्ठापितम्।

## मूलकालिदासकर्तृका चिद्गगनचन्द्रिका

तदियता प्रबन्धेन तत्काव्यनाटकोक्तवचनोद्धरणे प्रयस्यता मया संसाधितं यत्प्रकृतं कोषकाव्यं तत्प्रणीतमेव। विषयभेदमहिम्ना साम्यसंस्थापने कृतः प्रयत्नो बहूनां कृते न रोचिष्यत इत्यत्र न कश्चित् खेदः। विद्वत्समालोचकैः स्वनामधन्यैः कविराजमहोदयैरन्यैश्चापि शास्त्रप्रक्रियामर्यादापालकैः सुस्पष्टं प्रतिपादितं शास्त्रीयप्रक्रियायामैतिहासिकगवेषणाया अनुपयुक्तत्वं निरुद्देश्यत्वं च। सर्वतः प्रबलं प्रमाणमत्राद्यशङ्कराचार्यपादानां कृतिजातमेव। तैर्वेदान्तसूत्रदशोपनिषदां प्रसन्नगम्भीरभाष्याणि प्रणीतवद्भिः सौन्दर्यलहरीति कोषकाव्यमपि महोत्साहेन त्रिपुरसुन्दर्याः प्रशस्तौ भाषाभाववैदुष्यादिभिर्लोकोत्तरप्रावीण्यमुद्घाटयद्भिः प्रणीय प्रस्तुतमिति तत्र साम्यान्वेषणप्रयासः समुपहास्पदमेव। विषयभेदेन साम्यं कथमपि नोद्घाटितं भवेत्। तथापि लोके हर्षेण सर्वसम्मत्या कयाचिदाख्यायिकासाक्षितया तत्रैककर्तृकत्वं सम्मानितमेव। विषयभेदेन भाषाभाववर्णनवैदग्ध्यभेदः सुतरां सिद्ध्यत्येव।

काव्यनाटकप्रणयिभिः साहित्यिकैस्तावतैव संतोषं प्रकटयद्भिः केवलं काव्यनाटकरसास्वादनग्रहिलैः प्रभूतमात्रया प्रमादादिदोषैरेतत् कोषकाव्यं सर्वथैवोपेक्षित-

मिति सावकाशं सधीरं वक्तुं शक्यते। प्रायः साम्प्रतिकाः साहित्यिकाः काव्यलक्षण-नाटकलक्षणादिनिर्धारणे एव प्रयतमानाः संलक्ष्यन्ते। क्रमदर्शनग्रन्थेन तेषां विषय-भेदः सुप्रथित एव। अन्येऽपि सर्वतन्त्रस्वतन्त्रा विपश्चितः प्रमादमकुर्वन्निति कथनं न केवलं दोषैकदृक्त्वमेवापि तु कालिदास इत्युपाधिं श्रुत्वापि लौकिकदन्तकथां शृण्वन्तोऽपि समुपेक्षितवन्त इति सत्यमेव दुःखाकरोति हृदयम्। केवलं विदेशीय-दृष्टिं समाददाना ऐतिहासिकाः सर्वथा स्वात्मदोषानेवोद्घाटयितुं महता वेगेन पूर्वा-ग्रहेण च प्रयतन्ते।

इतिहासवेत्तृतासमारोहे पाश्चात्त्यप्रवाहप्रवेशलोभेन "Chronology" शब्द-व्यामोहे शास्त्रप्रक्रियां सततं प्रहरन्ति। काव्यसौष्ठवपरीक्षणश्रममकृत्वा शताब्दिभेदने सामर्थ्यमर्जयद्भिः निर्भरानन्दमनुभवद्भिः शास्त्रमार्गप्रस्तारः इतिहासविद्भिरव-रोधनयुक्त्या सन्ततमवरोध्यते, मन्दप्रचारप्रसाराभ्यां दम्यते चेति महती विनष्टिः। नहि शतकनिर्णयेन ज्ञानस्य तदानीमेवाविर्भाव इति कल्पयितुं शक्यते, ज्ञानस्यानादि-त्वात्। विदेशीया वेदेऽपि इतिहासमन्वेषयन्ति, तदभावनिश्चायके भाष्यप्रणेतृव्रजे पक्षपातित्वादिदोषदृष्टिं महता कण्ठेनोद्घाटयन्ति, किन्तु ते वेदविदूषका एव न तु तदुद्दिष्टमान्यतया जीवनं जीवन्ति। तन्निर्दिष्टपथमनुसर्तारः के त एवास्माकं समा-लोचनीयाः। अस्तु, अलमप्रकृतनिवेदनप्रसङ्गेन। अद्यापि निर्मत्सरा गुणैकपक्षपातिनो विद्वांसोऽनुरुध्यन्ते यत्ते चिद्गगनचन्द्रिकाख्यकोषकाव्यमधिकाधिकसमालोचनसमालोडन टीकाटिप्पण्यादिसमावेशेनोद्धर्तुं प्रयतन्तामिति। शास्त्रप्रक्रियासंगोपने सावहितं वर्तितव्यमिति।

### अनेकक्रमपरम्पराणां परिचयः

वर्णक्रमः सर्वमूलभूतोऽपि तदन्यधामसंविद्वृन्दक्रमादिभिः समवेतः। तत्रैक-मेव वस्तुतत्त्वं त्रिधा प्रस्ताव्य वर्णधामसंविदां कथनपूजनसंक्रमणेषु परस्परमन्तर्भावः कर्तव्यः। वर्णक्रमस्य पूजने तदन्ययोर्द्वयोर्यथायथमन्ययोरन्तर्भावः। तत्र कुण्डलिन्या-मावर्तपञ्चकप्रणवाकारोल्लास एव पञ्चात्मकविश्वव्याप्त्या स्थितः कन्दनाभिहृद्-वक्त्रभ्रूमध्यपञ्चकविकासेन च प्रथमस्पन्दरूपो धामक्रमः। वाक्चतुष्टयस्य परा-पश्यन्तीमध्यमावैखरीरूपस्य मूलाधिष्ठानं संविद्रूपा परा वागेवेति तया सह चतसृणां संमेलने पञ्चधाप्रसरः। स एव वर्णक्रमः। श्रोत्रादिपञ्चकप्रसरेण संवित्प्रसरः। तस्य ब्रह्मविष्णुरुद्रसदाशिवेश्वररूपकारणपञ्चकस्य प्रसरेण संवित्क्रमः। शब्दस्पर्शरूप-रसगन्धक्रमेण प्रसृतोऽर्थक्रम इत्येवं निखिलोऽयं संविद्धामक्रम एव।

वर्णादेव सृष्टिरिति नयेन पूर्वोक्तः सर्वप्रकारः सृष्टिक्रमेऽन्तर्भूतः। अनन्तरं स्थितिक्रमे श्रीखगेन्द्रनाथ-कूर्मनाथ-शेषनाथ-मच्छन्दनाथाः ज्ञानसिद्धाश्चत्वारो जाग्र-त्स्वप्नसुषुप्तितुर्यतुर्यातीतक्रमेण स्पर्शादिविषयचतुष्टयं व्याप्य पूर्णस्वातन्त्र्यविभवा लोकयात्रां प्रवर्तयन्ति निर्वहन्ति पारयन्ति च। एभिरेव चतुर्भिर्ज्ञानसिद्धैः स्थितिक्रमः पार्यते। अतः परं सैव शक्तिः परा परापरा अपराभेदेन त्रिविधा ज्ञानक्रियाभेदे षोढा व्यावहारिकी दृश्यते। यकारादिहकारान्ता अष्टौ। तत्र क + ष संयोगे क्षकारः, अःकार-

श्चेति संकलनया एकादश, मातृकासंहारक्रमस्य वर्णक्रमः संवित्क्रमान्तर्गतः। तत्र सर्वत्रैव सृष्टिक्रमे सृष्टिस्थितिसंहारानाख्याश्चतस्रः, एवमेव स्थितिसंहारयोरासां क्रमः। अनाख्यैवादिदेवी जगति सप्तदशार्गा चण्डमरीचिभिः समुद्योतिता सृष्टिस्थिति-संहारान् स्वात्मनि प्रविलाप्य स्वयं निरुपाधिका मूलधाम्नि सामरस्यमातिष्ठते। अर्थात् स्वयमविभक्ताऽपि विभागक्रममास्थाय तिष्ठन्ती भेदप्रविलापनेन सामरस्यमापन्ना महार्थनाम्ना प्रथते। अत्रादिदेव्याः स्वरूपप्रतिष्ठानमेव महासंहारक्रम इत्युच्यते। पराकाशोदिता कलनां प्राप्ता साक्षात्कृता पर्यन्ते भासाक्रमेण भासते। भासाक्रमोऽपि धाममयो निर्धामतां गच्छति, ब्रह्मसत्ताया निर्धामत्वात्। यद्यपि तत्सकाशादेव उदय-प्रलयौ, तत्रापि प्रलय उदयानुगतः, उदयश्च प्रलयानुगत इति व्यवह्रियते, तथापि तस्य निरधिष्ठाननिर्धामनिष्कलत्वादय एव संज्ञात्वेन प्रथन्ते, तस्मिन् तेजोविशेषत्वेन सर्व-संभवात्। भासाक्रमश्च सकलासकलनिष्कलानिष्कलपराख्यभेदेन क्रममहाक्रममव-भासयति। किन्तु सकलक्रमे द्वादशधा शक्तिविस्तारः। अकथह अवकहड आदिक्रमेण प्रत्येकं सप्तदशाष्टादश वा वर्णनियमः। परे च क्रमे एकैव कुलविद्या नव च वर्णा इति वर्णशक्तीनां वर्णसंख्यानां च प्राक्तनो नियमः सूर्यचन्द्राग्नीनां कलाभेदाद् नाडी-भेदाच्च भवतीति निर्धाम्नि एव परा शान्तिः।

**कालक्रमः**

यद्यपि क्रमकालयोः पर्यायत्वेऽपि न केवलं क्रमवर्णनेन कालक्रमस्य बोधो भवेत्, अनादिव्यवहारे कालक्रमस्यैव चिरप्ररूढत्वात्, बहुचर्चितत्वात्, व्यापकत्वाच्च। तत्र 'कल शब्दसंख्यानयोः' (भ्वा आ० सेट्),

'कल विल क्षेपे' ( चु० उ० सेट् )
'कल गतौ संख्याने च' ( चु० उ० से० )

'कल शब्दे' इति धातुचतुष्टयस्य पञ्चधायमर्थः—"क्षेपो ज्ञानं च संख्यानं गतिर्नाद इति क्रमात्" इति। कलति कलते कलयति कलयते सर्वमात्मनीति कर्तरि अच्प्रत्ययान्तः कलशब्दो निष्पद्यते, पुनः प्रज्ञादित्वादणि कालशब्दनिष्पत्तिः। काल-शब्दादेवाणन्तत्वाद् ङीपि कालीशब्दोऽपि सिद्ध्यति। केचित्तु के स्वस्वरूपे सुखे आसमन्ताद् लाति आदत्ते गृह्णाति प्राणिसमूहमिति कालः परमेश्वरः, प्राणिसमूह आनन्दाभिमुखमेवानुधावतीत्यनुगमात्। कलशब्दादेव टापि कलाशब्दः। सा च कला सृष्टेरारम्भकोपकरणम्। षडध्वसु वाच्याध्वनि प्रथमतत्त्वं कला एव, तयैव तत्त्वभुवनादीनामाविर्भावः। सा च कला मायातो जाता, या सुप्तस्थानीयमणुं किञ्चित्कर्तृत्वेन युनक्ति। कलया संसारबीजमुच्छूनं लब्ध्वा नामरूपात्मकं जगदुत्-पद्यते। यतो सा माययोत्पन्नाऽतः मायायामेव तस्या विकृतिर्न तु जीवेऽणौ। कलातत्त्वमेव किञ्चित्कर्तृत्वदायि। कलयैव विद्यारागकालनियतितत्त्वानि जायन्ते। कलातत्त्वायत्तैव सृष्टिर्भोक्तृभोग्यरूपा। भोक्तृभोग्ययोः परस्परं सापेक्षत्वात् तयोः सममेव क्रमरहिततया सृष्टिः। तदेवं षट्त्रिंशत्तत्त्वेषु तत्त्वात्मकः कालः कला-

तत्त्वोत्पन्न इति नित्यकालाद्भिन्नः। कालः श्रुतिपुराणादिष्वपि चर्चितः। प्रसङ्गात्त-दुक्त्वा पश्चात्तन्त्रागमसम्मतकालस्य विचारः प्रस्तोष्यते—

युगपदयुगपत्क्षिप्रं चिरं चिरेण परमपरमिदमिति च।
वर्त्स्यति नैतद् वर्त्स्यति वृत्तं तत्तन्न वृत्तमपि॥ १॥ (ष. द. स.)
वर्तत इदं न वर्तत इति कालापेक्षमेवाप्ता यत्।
सर्वे ब्रुवन्ति तस्मान्ननु सर्वेषां मतः कालः॥ २॥
ह्यः श्वोऽद्य सम्प्रति परुत्परारि नक्तं दिवैषमः प्रातः।
सायमिति कालवचनानि कथं युक्तान्यसति काले॥ ३॥

श्रुतिश्च—

स विश्वकृद् विश्वविदात्मयोनि-
र्ज्ञः कालकालो गुणी सर्वविद्यः।
प्रधान क्षेत्रज्ञपतिर्गुणेशः
संसारमोक्षस्थितिबन्धहेतुः॥ इति।

कूर्मपुराणेऽपि—

अनादिरेष भगवान् कालोऽनन्तोऽजरः परः।
सर्वगत्वात् स्वतन्त्रत्वात् सर्वात्मत्वान्महेश्वरः॥
ब्रह्माणो बहवो रुद्रा अन्ये नारायणादयः।
एको हि भगवानीशः कालः कविरिति स्मृतः॥
ब्रह्मनारायणेशानां त्रयाणां प्राकृतो लयः।
प्रोच्यते कालयोगेन पुनरेव च सम्भवः॥
परं ब्रह्म च भूतानि वासुदेवोऽपि शङ्करः।
कालेनैव च सृज्यन्ते स एव ग्रसते पुनः॥
तस्मात् कालात्मकं विश्वं स एव परमेश्वरः।

विष्णुधर्मोत्तरे च—

अनादिनिधनः कालो रुद्रः संकर्षणः स्मृतः।
कलनात् सर्वभूतानां स कालः परिकीर्तितः॥
कर्षणात् सर्वभूतानां स तु संकर्षणः स्मृतः।
सर्वभूतशमित्वाच्च स रुद्रः परिकीर्तितः॥
अनादिनिधनत्वेन स महान् परमेश्वरः।

ज्यौतिषशास्त्रे—

भूतानामन्तकृत् कालः कालोऽन्यः कलनात्मक इति।

अत एव शिष्टाः पुण्याहवाचनादावीश्वरमनुस्मरन्ति—

सर्वेषु कालेषु समस्तदेशे-
ष्वशेषकार्येषु तथेश्वरेश्वरः (महादेवः)।
सर्वैः स्वरूपैर्भगवाननादिमान्
ममास्तु माङ्गल्यविवृद्धये हरिः॥

कालभेदौ—

नित्यो जन्यश्च कालौ द्वौ तयोराद्यः परेश्वरः।
सोऽवाङ्मनसगम्योऽपि देहो भक्तानुकम्पया॥

परमेश्वरस्य चावाङ्मनसगोचरत्वे सर्वे वेदान्तास्तदनुसारिस्मृतिपुराणानि तत्त्वविदनुभवश्च प्रमाणानि। ( का० मा० उपो० )

अन्यच्च—

निश्चितं कालनानात्वमनादिनिधनं च यत्।
कीर्तितं यत् पुरस्तान्मे सूते यश्चात्ति च प्रजाः॥
( म० भा० शा० प० २३८।१९ )

एतेन कालस्य स्वरूपलक्षणे श्रुतिस्मृतिपुराणेतिहासादिप्रसिद्धे कीर्तिते।

अथेदानीं कुलक्रमदर्शनोक्तकालस्वरूपं स्थालीपुलाकन्यायेनोच्यते। क्षेपादिपञ्चलक्षणानां स्वरूपं तन्त्रालोके—

क्षेपो ज्ञानं च संख्यानं गतिर्नाद इति क्रमात्॥ १७३॥
स्वात्मनो भेदनं क्षेपो भेदितस्याविकल्पनम्।
ज्ञानं विकल्पः संख्यानमन्यतो व्यतिभेदनात्॥ १७४॥
गतिः स्वरूपारोहित्वं प्रतिबिम्बवदेव यत्।
नादः स्वात्मपरामर्शशेषता तद्विलोपनात्॥ १७५॥ इति।

अकुलस्य शिवस्य कौलिकी शक्तिर्विश्वावभासनक्रमे स्वभित्तौ स्थितस्य विश्वस्य स्वातन्त्र्यरूपया स्वेच्छया बहिरुल्लासनं करोतीत्ययं क्षेपः। क्षेपे सृष्टिरन्तर्भवति। बहिरुल्लासितस्य क्षेपात्मकविश्वस्य स्वाभेदेन परामर्शो ज्ञानम्। भेदितस्यैव प्रमातृप्रमेयादेरर्थस्य परस्परापोहनात् 'इदमिदं नानिदम्' इति प्रतिनियततयाऽवस्थापनात् संख्यानं ( गणनं विकल्पनं ) विकल्पः। गतेश्चत्वारोऽर्था गमनज्ञानप्राप्तिमोक्षाख्याः प्रसिद्धास्ततो ज्ञानप्राप्ती एवात्र गृह्यते। गतिश्चात्र गत्युपसर्जना प्राप्तिः। पूर्वोक्तानां चतुर्णामपहस्तनात् स्वात्मपरामर्शशेषता नादः। यदाऽहमिति स्वात्मपरामर्श एव शिष्यते, तदा क्षेपज्ञानसंख्यानगतीनां परित्यागोऽनिवार्यतया जायते। नदनमात्ररूपां कलनां कुर्वन् साधकश्चिदानन्दघनपूर्णाहन्तासमाविष्टः शाक्तोपायप्रतिपन्नतया परशाक्तरूपो मुक्त एव। यथोक्तं तन्त्रालोकविवेके—"संविदेव हि आश्यानीभूता नीलादिरूपतामधिशयाना प्रमाणोपारोहद्वारेण तद्रूपतां विलाप्य प्रमातरि विश्रान्तिमभ्युपगच्छन्ती स्वेन प्रमात्रेकात्मना रूपेण प्रस्फुरति" ( आ० ४ पृ० १४१ ) इति।

**कालीशक्तिः**

पूर्वोक्तक्षेपादिपञ्चविधकलनां कुर्वती स्वातन्त्र्यात्मिका कालीशक्तिर्दर्शनान्तरप्रसिद्धपरतत्त्वरूपब्रह्मनारायणादिसंज्ञावद् दर्शनेऽत्राद्या मूलभूता। अस्यास्तन्त्रागमदर्शनेऽनेके पर्यायाः। तद्यथा—कुलम्, सामर्थ्यम्, ऊर्मिः, हृदयम्, सारः, स्पन्दः, विभूतिः, चित्, चितिः, चैतन्यम्, स्वरसोदिता परावाक्, स्वातन्त्र्यम्, त्रीशिका, कर्षणी, चण्डी, वाणी, भोगः, दृक्, नित्या, कर्तृत्वम्, स्फुरत्ता, विश्रान्तिः, हृत्प्रतिभा, प्राणनाशक्तिः, उद्यमः, स्फूर्तिः, ओजः, बलम्, कला, अहन्ता, इत्यादयः।

**तस्या भेदोपभेदाः**

पूर्वोक्तविशेषणविशिष्टा सा काली शक्तिरेकाऽद्वयापि विश्वप्रकाशनसंरक्षणस्वात्मविमर्शनरूपया परा-परापरा-अपराख्यया त्रेधा भिद्यमाना विश्वनानात्वात् स्वस्या नानात्वमङ्गीकरोति। यया निर्विकल्पकसंविन्मात्रतया विश्वं भ्रियते ज्ञायते भास्यते च सा पराशक्तिः। यया च पूर्वोक्तजगतः प्रतिविम्बितवस्तुवद् भेदाभेदाभ्यां सृष्ट्यादिविषयीकरणं सा परापरा। यया च प्रत्येकं वस्तु भेदेन भास्यते न केवलं वस्त्वात्मनैवापि तु प्रमाणप्रमेयप्रमातृमित्याद्यात्मना सा अपराशक्तिः। एतासां तिसृणां स्वस्मिन् क्रोडीकारेण प्रत्येकमनुसन्धानात्मना वा यया ग्रासीकरणं सा कालकर्षिणी चतुर्थी। चतस्रोऽप्येता सृष्टिस्थितिसंहारभेदात् प्रत्येकं त्रिगुणिता द्वादशसंख्याका भवन्ति। तद्यथा—सृष्टिसृष्टिः, सृष्टिस्थितिः, सृष्टिसंहारः, सृष्टितुरीयम्, स्थितिसृष्टिरित्याद्याः क्रमेण द्वादशापि ज्ञातव्याः। द्वादशविधानां स्वरूपानुगमः कृतस्तन्त्रसारे चतुर्थाह्निके—

१ संवित् पूर्वमन्तरेव भावं कलयति।
२. ततो बहिरपि स्फुटतया कलयति।
३. तत्रैव रक्तिमयतां गृहीत्वा ततस्तमेव भावमन्तरुपसंजिहीर्षया कलयति।

४. ततश्च तदुपसंहारविघ्नभूतां शङ्कां निर्मिणोति च ग्रसते च। एवमेवान्यभेदा विशेषजिज्ञासुभिस्तन्त्रसारतोऽवलोकनीयाः। एभिरेव द्वादशभेदैः सकलोऽपि लोकव्यवहारो नितरां निर्व्यूह्यते। महार्थमञ्जरीपरिमलेऽनाख्याभासात्मकं शक्तिद्वयं नि ह्रानुग्रहस्थाने संनियोज्य सृष्ट्यादिपञ्चशक्तीनां भेदाः सलक्षणं पञ्चाशद्वा वर्णिताः। सृष्ट्यादिकृत्यानां लक्षणमपि तत्र यथा—सृष्टिर्नाम उद्योगावभासचर्वणात्मविलापननिस्तरङ्गत्वलक्षणाप्रथापञ्चकसमष्टिः, तस्याः कलाः क्रियाज्ञानेच्छोद्योगप्रतिभास्वभावसृष्टिस्थितिसंहारानाख्याभासास्वरूपाः। स्थितिर्हि नाम सृष्टानां पदार्थानां यावत्संजिहीर्षोदयमवैयाकुल्येनावस्थानम्। तदुक्तम्—"स्थितिर्हि नाम स्वरूपस्य तत्तद्रूपतया धृतिः"। तस्यां द्वाविंशतिः कलाः—शिरश्चक्रे युगनाथाश्चत्वारस्तद्देव्यश्चतस्र इत्यष्टौ। हृदयषट्कोणे साधिकारनिरधिकारविभागेन राजपुत्राणां द्विषट्कम्। मनोऽहङ्कारयुक्तानि ज्ञानेन्द्रियकर्मेन्द्रियाण्येव राजपुत्रत्वेन संभावितानि। तन्मध्ये कुलेश्वरः कुलेश्वरीति द्वाविंशतिः। संहारो नाम—बहिरुद्वान्तानां भावानां

पारमेश्वरें प्रकाशे पुनः प्रसूत्यौचित्येन वटधानादिनीत्या वासनात्मतयाऽवस्थानम्। अत्र शक्तय एकादश, ताश्च सर्वान्तःकरणसमष्टिभूतमहङ्कारं बाह्येन्द्रियदशकं च भक्षयन्त्यः स्फुरन्तीति एकादश। अन्यत्रोक्तानुग्रहस्थानीया भासा तु पञ्चमी शक्तिः। सा चिन्मयी एकैव षोडशीरूपा सप्तदशीरूपा वा। चतुर्थ्यां अनाख्यशक्तेस्त्रयोदशशक्तय इति षट्पञ्चाशत्। इत्थं संख्यातीतैर्भेदैर्भासमाना सा विभिन्नदर्शनानुयायिभिर्विभिन्नैः स्वरूपैर्भाव्यते।

येन येन स्वरूपेण भाव्यते तस्य तन्मयी।
माहेश्वराणां शक्तिः सा सांख्यानां प्रकृतिः परा॥
महाराज्ञी च सौराणां तारा सुगतवादिनाम्।
लोकायतिकमुख्यानां तदात्वा सा प्रकीर्तिता॥
शान्ता पाशुपतादीनामर्हतां श्रीश्च तद्विदाम्।
श्रद्धा हैरण्यगर्भाणां गायत्री वेदवादिनाम्॥
अज्ञानतिमिरान्धानां सर्वेषां मोहिनी स्मृता।
सैव काली महादेवी गीयते लोकवेदयोः॥
इतिहासेषु तन्त्रेषु सिद्धान्तेषु कुलेषु च।

कार्योपाधिवशात्तस्या एव पराशक्तेर्माता, देवता, दूती, कालिकेत्याद्याः संज्ञा लोके—

जन्मकाले भवेन्माता पूजाकाले च देवता।
रतिकाले भवेद् दूती मृत्युकाले च कालिका॥

( म० म० प०, पृ० १०७ )

इयमेव कालीशक्तिर्विश्वस्य योनिः। स्वतन्त्रा सा स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति। तस्याः स्वातन्त्र्यमहिम्ना स्वात्मपरात्मनावभासनं स्वात्मनः परोपाधिकतया भासनं सर्वथाऽनर्गलं स्वाच्छन्द्यम्। शिवशक्त्योर्वियोगस्य कल्पनाऽस्मिन् प्रस्थाने नोद्भावनीया, शब्दमात्रेण संज्ञया भेदः प्रतीयमानोऽपि वस्तुगत्या तयोरर्थात्मनाऽभेदात् सर्वप्रस्थानेषु दार्शनिकप्रक्रियानिर्वाहाय वर्णितः शास्त्रविस्तरप्रकारः सांसारिकप्राणिहिताभिप्रेतत्वेनैव। परतत्त्वं तु यादृक् तादृग् भवतु नाम, तत्र तस्य स्वरूपगतस्वार्थलेशाभावेन सर्वविधविरोधरहितत्वात् स्वतो निर्विकल्पत्वेन पर्यनुयोगपरिधिबहिर्भूतत्वाच्च।

### परतत्त्वात्मकं कालीतत्त्वं लिङ्गातीतम्

कालीति स्त्रीलिङ्गशब्देन कालीतत्त्वस्य स्त्रीलिङ्गत्वं लोके व्यवह्रियते, किन्तु परतत्त्वात्मके पूर्णे वस्तुनि लिङ्गप्रयुक्तव्यवहारः साधकरुच्यनुसारं कल्पित एव, न तु वास्तविकः। ब्रह्मविष्णुरुद्रसूर्यगणपतिशक्तीत्यादिशब्देषु तत्तल्लिङ्गप्रयोगो भावनाकृत एव। चिद्गगनचन्द्रिकोक्तपद्येऽपि परतत्त्वात्मककालीतत्त्वस्य त्रिलिङ्गतां निषिध्य लिङ्गत्रयप्रतिस्फोरणसामर्थ्यमपि तस्या एवेति शक्तिसंबोधनपुरःसरं प्रतिपादितम्—

न त्वमम्ब पुरुषो न चाङ्गना चित्स्वरूपिणि न षण्ढतापि ते।
नापि भर्तुरपि ते त्रिलिङ्गता त्वां विना न तदपि स्फुरेत् त्रयम् ॥ इति
( श्लो० सं० २७३ )

तन्त्रतत्त्वोद्धृतनवरत्नेश्वरतन्त्रवचने तु भङ्गिभेदेन परतत्त्वस्य त्रिलिङ्गतां निषिध्य जडत्वमसंभाव्यमपि निषिध्य कल्पवल्लीदृष्टान्तेन स्त्रीशब्दवाच्यत्वमेव निर्णीतम्। यथा—

नेयं योषिन्न च पुमान् न षण्डो न जडः स्मृतः।
तथापि कल्पवल्लीवत् स्त्रीशब्देन च युज्यते॥
( शिवचन्द्रविद्यार्णवे, भा० १ पृ ३५४ )

**काल्युपासकाः कौलाः**

कालीदेव्या उपासका एव कौलपदेनाभिधीयन्ते।
"श्रीकाल्युपासका ये च तत्कुलं परिकीर्तितम्" ( शक्तिसं० ४।३२ )

"अकुलं शिव इत्युक्तः कुलं शक्तिः प्रकीर्तिता" इति कुलार्णवात् कुलमिति शक्तेः संज्ञा, शक्तिसङ्गमवचनात्तु शक्तेरुपासनमपि कुलपदेन गृह्यत इति प्रमीयते। तन्त्रालोक एकोनत्रिंशाह्निके कुलशब्दस्यानेकेऽर्थाः प्रस्तुताः। तद्यथा—

कुलं च परमेशस्य शक्तिः सामर्थ्यमूर्ध्वता।
स्वातन्त्र्यमोजो वीर्यं च पिण्डः संविच्छरीरकम् ॥ इति।

विशदीकृतं च जयरथेन—"कुलं हि परमा शक्तिः" इति, "लयोदयश्चित्स्वरूपस्तेन तत्कुलमुच्यते" इति, 'स्वभावे बोधममलं कुलं सर्वत्र कारणम्" इति, "सर्वंकर्तृ विभु सूक्ष्मं तत्कुलं वरवर्णिनि" इति, "सर्वेशं तु कुलं देवि सर्वं सर्वव्यवस्थितम्" इति, "तत्तेजः परमं घोरम्" इति, "शक्तिगोचरणं वीर्यं तत्कुलं विद्धि सर्वगम्" इति, "कुलं स परमानन्दः" इति, "कुलमात्मस्वरूपं तु" इति, "कुलं शरीरमित्युक्तम्" इति च।

भास्कररायेणान्येऽप्यर्थाः कुलशब्दस्य ललितासहस्रनामस्तोत्रव्याख्यायां प्रस्तुताः—"कुलं सजातीयसमूहः। स चैकज्ञानविषयत्वरूपसाजात्यापन्नज्ञातृज्ञेयज्ञानत्रयात्मकः, घटमहं जानामीत्येव ज्ञानाकारात् ज्ञानभासनायानुव्यवसायापेक्षायां दीपभासनाय दीपान्तरापेक्षापत्तेः। उक्तं चाचार्यभगवत्पादैः—"जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्" (दक्षि० मू० स्तो०) इति। ततश्च सा त्रिपुटी कुलमित्युच्यते। तदुक्तं चिद्गगनचन्द्रिकायां द्वितीये विमर्शे—"मेयमानमितिलक्षणं कुलं प्रान्ततो व्रजति यत्र विश्रमम्" इति। ऊर्ध्वाधरभावेन विद्यमानेषुस्वच्छन्दसंग्रहादौ प्रपञ्चितेषु द्वात्रिंशत्पद्मेषु सर्वाधस्तनं पद्मं त्रिपुटीसम्बन्धाभावादकुलमुच्यते, तदुपरिस्थानि कुलसम्बन्धीनि। यद्वा—कुः पृथ्वीतत्त्वं लीयते यत्र तत्कुलमाधारचक्रं तत्सम्बन्धाल्लक्षणया सुषुम्णामार्गोऽपि। उपास्योपासकवस्तुजातस्य चित्त्वेन साजात्यात्तत्समुदायप्रतिपादकं

शास्त्रमपि कुलम्। तथा च कल्पसूत्रे प्रयोगः—"कुलपुस्तकानि च गोपायेत्" इति। "दर्शनानि तु सर्वाणि कुलमेव विशन्ति हि" इत्यागमे च। "न कुलं कुलमित्याहुराचारः कुलमुच्यते" इति भविष्योत्तरपुराणवचनदाचारोऽपि कुलम्। "कुलं नाम पातिव्रत्यादिगुणराशिशीलो वंशः", "कुलं जनपदे गृहे। सजातीयगणे गोत्रे देहेऽपि कथितं कुलम्", इति विश्वः। तदुक्तं भविष्योत्तरपुराणे—"पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे। गृहे गृहे शक्तिपरैर्ग्रामे ग्रामे वने वने॥" इति। अधःस्थितं रक्तं सहस्रदलकमलमपि कुलम्। तत्कर्णिकायां कुलदेवीदलेषु कुल शक्तयश्च सन्तीति स्वच्छन्दतन्त्रेऽपि विस्तरः। ईदृगर्थस्य कुलपदस्य परतः सम्बन्धसामान्यार्थे तद्धिते कौलम्। "कुलं शक्तिरिति प्रोक्तमकुलं शिव उच्यते। कुलेऽकुलस्य सम्बन्धः कौलमित्यभिधीयते॥" इति तत्रोक्तम्। बाह्याकाशावकाशे चक्रं विलिख्य तत्र पूजादिकं कौलमिति रूढ्योच्यत इति कश्चित्। दत्तात्रेयसंहितायां तु—'मूलाधारादिकं चक्रषट्कं कुलमिति स्मृतम्" इत्यादि। कौलमार्गे शरीरस्यैव सर्वतीर्थभूमित्वमामन्यते। तेनाधारचक्रस्थितकुण्डलिनीशक्तिरूपकाल्युपासना कौलोपासनारूपेण प्रसिद्धिमितेति शक्तिसङ्गमवचनं लोकप्ररूढमतसंवादित्वेन मननात्मकमेव।

### आम्नायाः

उपासकानां रुचिवैचित्र्येण मन्त्रशास्त्रे तन्त्रागमवाङ्मये आम्नायाः षट् स्वीक्रियन्ते, पूर्वपश्चिमदक्षिणोत्तरोर्ध्वानुत्तरभेदात्। सर्वा अपि कालीतारादिविद्या आम्नायक्रमे विभक्ताः। तत्र कालीमहाकाल्योस्तु उत्तराम्नाये समावेशः। उत्तराम्नायस्योर्ध्वाम्नायपदेनापि प्रसिद्धिर्लोके। दशमहाविद्यासु प्रथमा काली, तस्या भैरवो महाकाल इति प्रसिद्धिः।

चिद्गगनचन्द्रिकाग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयपरीक्षाया आगमशास्त्रिप्रथमवर्षे पाठ्यत्वेन निर्धारितः। आगमदर्शनस्य परीक्षाक्रमो राजकीयसंस्कृतमहाविद्यालयाधिकारिभिरेव सम्प्रचालितः सम्प्रति विश्वविद्यालयेऽपि सम्प्रवर्तमानः। अध्यापनप्रसङ्गे ग्रन्थस्यास्य व्याख्याया अभावं परिलक्ष्य कस्याश्चित् छात्रोपयोगिन्या व्याख्याया परमावश्यकता अन्वभूवम्।

मत्समक्षं तु स्वामित्रिविक्रमतीर्थसम्पादितपुस्तकमेव यत्र तत्र पाठभेदसन्दृब्धमासीद् यदाधारीकृत्य 'क्रमप्रकाशिका'-नाम्नी टीका प्रकृता लिखिता विद्वज्जनमनोमोदायेति स्वामिपादानां कृते हृदयेन सबहुमानं कृतज्ञतां श्रद्धाविनयादिसंयुतां ज्ञापयामि। स्वामिनामिदमभिप्रेतं यदस्य ग्रन्थस्य कर्ता मूलकालिदास एव लोके कविकुलगुरुनाम्ना प्रसिद्धः। ग्रन्थेऽस्मिन् पद्येषु ३, २७२, ३०५, ३०६ संख्यकेषु स्वस्य नाम प्रसङ्गादुद्धृतं स्वयं ग्रन्थकर्त्रा। यद्यपि स्वप्रणीतकाव्यनाटकयोश्छन्दोग्रन्थे वा कुत्रचिदनेन स्वं प्रत्यभिज्ञानं दत्तं न वर्तते न स्मर्यते, तथाप्यत्र चतुर्षु स्थलेषु नामग्राहमुल्लेखः सचेतसां कल्पनास्वातन्त्र्यमेव ददाति। कल्प्यते न केवलमहं काव्यनाटकादिप्रणयनमेवाकार्षमपि तु क्रमदर्शनात्मककालीदर्शनस्याप्यहमेव प्रणतेति

निःसंशयत्वज्ञापनार्थमेवैषा त्वरा ग्रन्थकृताऽऽसादिता। स्पृहणीयचरितैः स्वामिपादैः ग्रन्थमिमं महतोत्साहेन श्रमेण च सम्पाद्य तन्त्रागमवाङ्मयस्य महती श्लाघ्या च श्रीवृद्धिः कृतेति तान् प्रति धन्यवादज्ञापकवचनसहस्राण्यपि न पर्याप्तं प्रभवन्तीति सारस्वतप्रतिष्ठासंवर्द्धनसंरक्षणगृहीतव्रतास्ते सर्वथैव तन्त्रागमानुरागिणामभिनन्द्या एव। स्वलिखितभूमिकायां तैस्तन्त्रालोकोक्तश्रीक्रमस्तोत्रश्रीपञ्चशतिकोद्धृतकालिका-स्वरूपवर्णनपराणि पद्यानि साकल्येन तुलनात्मकदृष्टिस्फुरणाय दत्त्वा काश्मीरशैव-प्रचलितत्रिकदर्शनानुसारित्वमेव प्रस्तुतग्रन्थस्य निर्धारितम्। तन्त्रालोकनिर्दिष्टकलन-सन्दर्भस्य सम्यगध्ययनं कृत्वा तैर्भूमिकायां यथोपजोषं विनियोगः कृतः। ग्रन्थे ३१२-३१३ वा पद्यानि सन्तीति तैः सुस्पष्टं निवेदितम्। यद्यपि ग्रन्थकृता स्वयं ३०९ पद्ये नवोत्तरैः शतैस्त्रिभिरिति ब्रुवता पद्यसंख्यायां त्रिभिर्न्यूनतैव समुद्घोषिता, तथाप्यत्र ३१२ पद्यानि प्रकरणोपसंहारक्रमेण निबद्धानि प्राप्यन्ते।

## क्रमकुलदर्शनम्

"क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका" इत्यभियुक्तोक्त्या क्रियाभेदकः कालः, दिक्कालाकाशा सर्ववस्तु प्रति साधारणकारणानि। क्राम्यति क्रमते वा सर्वं स्वं प्रतीत्यर्थकः क्रमशब्दः कर्त्रर्थकाच्प्रत्ययान्तः। अथवा क्राम्यन्ति वस्तूनि जडाजडसाधा-रणानि यस्मिन् स इति क्रमः कालः, "पुंसि संज्ञायां घः प्रायेण" इत्यधिकरणे घप्रत्ययः। बहुलग्रहणानुवृत्त्याऽधिकरणेऽपि घः। बहुलग्रहणं सर्वोपाधिव्यभिचारार्थमित्यसंज्ञायामपि भवति। कालशब्दवत् क्रमशब्दोऽपि सर्वविधगतिभेदकत्वेन क्रियाभेदकः। नहि क्रिया-भेदं विना क्रमोऽवभासितुं क्षमः। क्रमावभासने क्रियाया एव साधकबाधकभावेन लोके व्यवहारदर्शनात् क्रमः कालापरपर्यायः। क्रम एव कालः काल एव क्रम इति आपामरप्राज्ञः प्रसिद्धो व्यवहारः। क्रमो हि न केवलं प्रपञ्चानुगत एवापि तु चिद्रूपतया प्रपञ्चाद् बहिरपि लब्धसत्ताक इति दृष्टिरेव सृष्टिरिति मते दृष्टिर्दर्शनं तच्च ज्ञानात्मकमिति सर्वाधारतया व्यापकतया च क्रमदर्शनमित्याख्यया शैवशाक्तसम्प्रदाये प्रथते। क्रमदर्शनाधिष्ठात्री स्वातन्त्र्यात्मिका विमर्शापरपर्याया कालीशक्तिरेव पर-प्रमात्री मेयमित्योः स्वात्मन्यन्तर्भाव्य त्रिपुट्यात्मना स्वेच्छया स्वभित्तौ विश्वोन्मीलन-निमीलने कुरुते। स्वरूपतः साऽक्रमापि स्वैश्वर्यस्वातन्त्र्यवशात् क्रमं क्रमाक्रमं च भासय-तीत्यत्र न कश्चन पर्यनुयोगः शक्यक्रियः। सृष्टौ क्रमस्तु प्रत्यक्षः। तथैव स्थितिसंहारयो-रपि। क्रमेणाऽनाक्रान्तं वस्तु लोके नावलोकयितुं शक्यते। यदीत्थं लोकात्परस्य तदवभासननिषेधे कः क्षमेत केनाधिकारेणेति विपश्चिद्विवेकसमीक्षणात्मकः प्रश्नः। सर्वाण्यपि दर्शनानि मनोरञ्जकतया लौकिकानि लोके बुद्धिविलासस्वरूपाणि हिताव-हानीत्याश्वासेन परलोकेऽपि तन्निर्दिष्टपथा शाश्वतं सुखं स्यादिति विश्वासपराण्येव।

अन्यथा मननात्मिकाया आख्याया अभावेऽहमेतद्दर्शनास्थावानिति कथन-स्य न कोऽप्यभिप्रायः। सर्वस्यापि जनस्योपास्यतया काचिद् देवता ऽस्त्येवेत् यत्र न कस्या-पि विमतिः। शरीरमात्मेति ध्यायतश्चार्वाकस्यापि शरीरसंरक्षणसुरक्षणादिकर्मणि

तथैवास्था, यथा परलोकध्यायिनामित्यत्रापि न विमतेरवकाशः। एवं चेल्लोकसत्त्वे दर्शनसत्ता, नहि लोकमुपेक्ष्य दर्शनचिन्ता भवितुमर्हतीति सृष्टिरेव दृष्टिरिति मतस्यैव यौक्तिकत्वम्। सृष्ट्यध्ययनमेव दर्शनत्वेन चिन्तयतां महात्मनां "न गृहं गृहमित्याहुर्गृहिणीगृहमुच्यते। गृहं हि गृहिणीशून्यमरण्यमितिच्यते॥" इति स्मृत्युक्तमिदं वचनं क्रमकुलमर्यादाधिकृतं वेदितव्यम्। ज्ञानकर्मेन्द्रिययोर्मनसा सह पृथक् पृथग् गणनया यत् षट्कद्वयं संपद्यते, तत्रैकैकस्य षट्कस्य राजपुत्रत्वेनोत्प्रेक्षणं स्वात्मनश्च राजत्वेनेति कुलानुगतमेव। तद्यथा—"जगतो रञ्जनाद् राजा साक्षाद् देवो महेश्वरः। तत्पुत्रा राजपुत्राः स्युः" (म० म०, पृ० ९९) एतदेव चिद्गगनचन्द्रिकाकारेण कविकुलमूर्धन्येन काव्यत्वकलागुम्फितत्वमर्यादया प्रोक्तम्—

राजनात् प्रकृतिरञ्जनाच्च मां
राजसंज्ञमनुबोधकर्मणोः।
षट् त्वया पृथगमी प्रवर्तकाः
पुत्रभावमधिरोपिताः शिवे॥

मनःसहितानि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च परार्थानि राज्ञः स्वात्मतत्त्वस्य महोत्साहेन रागेण चोपकारकारकाणीति सृष्टे जगति दार्शनिकवृत्तिपराणीति सृष्टिदृष्टिवादवैभवनिदर्शनम्। गृहारण्ययोर्दाम्पत्यमेवोक्तसंज्ञानिमित्तमिति सृष्टिचमत्कारजनकत्वं स्फुटं विशिष्टशेमुषीजुषाम्। क्रमः क्रियान्वितो विचार्यमाणः स्वत एव दार्शनिकत्वं विशिनष्टि। क्रमस्य क्रमेण क्रमज्ञानाय पर्यालोचनं न केवलं मनोरञ्जनं प्रत्युतात्मरञ्जनमपि, प्रत्येकं क्रमस्य निर्विकल्पकत्वात्। नहि क्रमः पर्यवसितः संकल्पविकल्पौ सृजति निश्चायकत्वात् क्रमस्येति फलितार्थः। स च क्रमो वर्णक्रमात् प्रारभ्यते, कुलदर्शने वर्णेभ्य एव सृष्ट्यारम्भात्। श्रुतिमार्गेऽपि "वागेव विश्वा भुवनानि जज्ञे" इति वचनाद् वाचः सकाशादेव जगदुत्पत्तिः। वाक्शब्देनात्र शैवशाक्तदर्शने प्रत्येकं वर्णा गृह्यन्ते, तेष्वेव वाक्शब्दस्वारस्यात्। न तु वर्णसमूहः पदं पद समूहो वाक्यमिति तन्त्रान्तरवत्। श्रुतिरपि समर्थयति "अकारो वै सर्वा वाक्" (ऐ० आ० ३।२।३) इति, स चाकार इच्छाशक्तेः समुद्भूतः। तत्राकारे "रौद्री वामा ज्येष्ठा अम्बा" इति चतस्रः कलाः समुद्यन्ति। तदुक्तम्—

अकारस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता।
अम्बिका बाहुरित्युक्ता ज्येष्टा चैवायुधं स्मृता॥ इति।

ताभ्यः समुत्पन्नो ज्ञानप्राक्कोटिभावी इच्छाप्रसरः। इच्छापूर्वकमेव विश्वनिर्माणम्। इच्छयैव ज्ञानक्रियाशक्तिद्वयं समुत्पद्यते। प्राक् ज्ञानक्रियाशक्ती निष्कले पश्चात् कलया युज्येते। तदेवं मूलतत्त्वादिच्छाप्रसरस्ततोऽकारस्ततो विश्वमिति। तदुक्तम्—

शून्यात् प्रसर उत्पन्नः प्रसरादः समुत्थितः।
अकाराद्विश्वमुत्पन्नं विश्वं पञ्चात्मकं जगत्॥ (म० न० प्र० २९)

तदेवं जगन्निर्माणे पूर्वोक्तेच्छामात्रमेव परिकरः। इच्छासमकाले महाभूतानि तत्कालमेवोद्यन्ति, न तु सामग्रीसंकलनस्यापेक्षाऽत्र ब्रह्मसृष्टिवत्, ऐश्वरसृष्टेर्निरुपादानत्वात्। ततो ब्राह्मी सृष्टिः। स्तत्रादिवर्णकुहराद् हृदयान्नभस्ततो वायुस्ततोऽग्निस्ततो जलपृथिव्यादिः। प्रत्येकं पञ्च महाभूतानि पञ्चधा विभज्यन्ते। तद्यथा—त्वक् मांसं दन्ता नखा अस्थीति पृथ्वीतत्त्वस्य; रसः रक्तं कफो वसा मेद इति जलतत्त्वस्य; क्रोधः, मुखगतं तेजः, कायोष्मा, नेत्राग्निः, जाठरोऽग्निः, पञ्चधा तेजस्तत्त्वम्; प्राणापानसमानोदानव्यानाः पञ्च वायवः; जठरमुखश्रोत्रहृदयनासिकागत आकाशः पञ्चधा। पञ्चानां पञ्चगुणितत्वेन पञ्चविंशतिः प्रकारा महाभूतानां जायन्ते। तैश्चतुर्दशभुवनेषु चतुर्दशप्रकारकभूतसर्गः। तत्राष्टधा देवाः, पञ्चधा तिर्यञ्चः, एकधा मानुष्यम्। भूतसर्गाद् अधिकारिशरीरा लयभोगाधिकारवन्तः प्रबोध्याश्च मनुष्याः सारभूता उपदेशपात्रम्। एतान्येव पञ्चमहाभूतानि प्रधानेन तद्गुणपञ्चकेन तन्मात्रणि, बुद्धिकर्मेन्द्रियाणि भौतिकान्येव, अन्तःकरणानि भौतिकान्येव। त्रिगुणास्तु प्राकृता भौतिका एव प्रकृतिः पुरुषस्य सहजसिद्ध आश्रयः। यथोक्तम्—"अमूर्तस्त्वीश्वरस्तत्र तिष्ठत्यानन्दलक्षणः" इति।

परतत्त्वमेवात्र आदिदेवीपदेनोच्यते, क्रमदर्शने शक्तिदशाया एव प्राधान्यात्। शैवदर्शने परतत्त्वं शिवशक्तिसामरस्यापन्नम्। अत्र पराशक्तिरेव मुख्यं तत्त्वम्। सा च परसूक्ष्मस्थूलभेदात् त्रिविधा। तदुक्तमभियुक्तैः—

स्थूला विश्वतनुर्देवी सूक्ष्मा चिन्मात्ररूपिणी।
परा नित्योदिता शान्ता ब्रह्मसत्तास्वरूपिणी॥ इति।

तदेवं विश्वरूपत्वेन, चिद्रूपत्वेन, नित्योदितशान्तब्रह्मरूपत्वेन मूलदेव्या त्रिरूपत्वं स्थितम्। यथा शिवः शक्तिचक्रप्रसाररूपो द्वैतस्फारं विध्वस्य एकोऽद्वयरूपः प्रत्यवभासते, तथैव पराशक्तिरपि स्वेतरस्वीयाभिन्नशक्तिप्रसररूपा दिग्देशकालाकारजातिव्यक्तिनिरपेक्षा व्यवच्छेदकारिण्यप्येकत्वमास्थाय व्यापकतया ऐक्यभावेनानिराश्रिताऽत एवास्यां दशायां साऽनाख्येति निगद्यते।

### चिद्गगनचन्द्रिकाग्रन्थप्रशस्तिः

ग्रन्थेऽत्र साङ्गोपाङ्गं कालीदेवता परब्रह्मस्थानापन्ना परतत्त्वस्वरूपा क्रमकुलदर्शनानुगता भावप्रवणैः प्रसन्नगम्भीरार्थप्रकाशकैः पद्यैः सादरं स्तुता। अस्य स्तोत्रग्रन्थस्य भाषाभावादिसंग्रथने यादृशी प्रतिभा ग्रन्थकृतो लक्ष्यते, तेनानुमीयते साक्षात्काल देवतायाः प्रसादप्राप्तानुभावेनैव एतादृग् वर्णनं कर्तुं शक्यते, न त्वभ्यासप्राप्तविकर्मणा। क्रमकुलदर्शनस्य क्रमस्तुतिनामकग्रन्थो यो हि प्रस्तुतग्रन्थकर्त्रा सादरं सस्पृहं संस्मृतः कियत्परिमाणक आसीदिति तस्याप्राप्तत्वादुल्लेखितुं वक्तुं वा न पार्यते, किन्तु ग्रन्थकृत्स्मरणेन तस्यापूर्वत्वविषये न कश्चन संदेहोऽवशिष्यते। यद्यसौ प्राप्येत तर्हि तस्योत्कृष्टत्वनिर्धारणानन्तरं चिद्गगनचन्द्रिकाग्रन्थ एव क्रमदर्शनग्रन्थेषु सर्वोत्कृष्ट

इति कथने न कापि विप्रतिपत्तिः। कुलदर्शनस्य एतावद् बृहत्परिमाणको ग्रन्थः सम्प्रति नोपलब्धो यत्र परदेवता काली इयता बृहदाकारेण ग्रन्थात्मना सन्दृब्धसमायोजनेन स्तुता चर्चिता वा स्यादिति। अत्र सम्पूर्णे ग्रन्थे स्तुतिव्याजेन क्रमकुलदर्शनपदार्था एव आतानवितानभङ्ग्या सूक्ष्मकौशलेन प्रौढभाषाभावादिसुगुम्फनक्रमेण संनिवेशिताः संलक्ष्यन्ते। ग्रन्थकारसदृशप्रतिभासम्पन्नेनैव व्याख्याकर्त्राऽस्य महनीयग्रन्थस्य सम्यग् व्याख्यानं शक्यक्रियमासीदिति महति कालप्रवाहे भवितुं शक्नुयादेवेत्याशया प्रतीक्षा कर्तव्यैव। कालीं संबोध्य कुलेशि ! इति·पदप्रयोगेण क्रमाक्रमयोः कण्ठरवेण सुबहुप्रयोगेण क्रमकुलयोः पर्यायता निर्भ्रान्तं निश्चीयते। काली देवताऽपि पद्येषु संबोधनपदेनाम्रेडितेत्यनेन काली कुलक्रमयोः समाराध्यदेवतेति संचेतितं भवति। महार्थमञ्जरी-महानयप्रकाशयोर्ग्रन्थयोः क्रमकुलदर्शनमेव संप्रतिष्ठापितम्। तत्र महार्थमञ्जर्यां स्वोपज्ञटीका ग्रन्थकर्तुरेव लब्धेति ग्रन्थापेक्षया टीकैव बहुमूल्या बह्वर्थसूचिका नवनवोद्भावनाप्रसारिका संजाता। उभावपि ग्रन्थौ प्राकृतपद्यमयगाथायुतौ। शुद्धसंस्कृतपरिष्कृतभावभाषादिसंवलिता दर्शनपदार्थस्फोरणदक्षा परिमाणे बृहती चिद्गगनचन्द्रिका सत्यमेवाभ्यर्हिता दर्शनधिया स्तुत्याकृतिः। अत्र ग्रन्थकृता दार्शनिकपारिभाषिकपदानां भूयान् प्रयोगः कृत इत्येतेनास्य दर्शनस्य कदाचन सार्वजनिकप्रचारोऽनुमातुं शक्यः। यादृशी व्याख्यापेक्षिता तादृशी तु न जाता, तथापि "अकरणान्मन्दकरणं श्रेयः" इति प्राचामुक्त्या यदि किञ्चिदपि साहाय्यं केषाञ्चित्कुर्याच्चेत्तदेव संतोषाय भवेदिति विरम्यते।

### श्रद्धा-स्मृतिः

क्रमप्रकाशिकालेखनेऽहं येषां येषां भाविताशयानामुपकारमादधामि, तेषां श्रद्धया स्मरणं शिष्टाचारानुगृहीतम्। चिरादेवास्य ग्रन्थस्य कश्चन पदयोजनात्मकः सन्दर्भोनिर्माय प्रस्तोतव्य इति ममैवेच्छा प्रबला आसीदिति कृत्वा येषां गुरूणां कृपया मयि सामर्थ्यमीदृक् स्फुरितं सर्वतः प्राक् तान् प्रातःस्मरणीयान् गुरून् श्रद्धया साष्टाङ्गप्रणिपातपुरःसरं प्रणमामि। व्याकरणकाव्यकोषादिप्रजृम्भितं ज्ञानमेव दर्शनशास्त्रानुशीलनादिसामर्थ्यं जनयतीति तत्तच्छास्त्रशिक्षकाणां पूर्वगुरूणापि चरणयोः श्रद्धामयं प्रणामाञ्जलिं समर्पयामि। एवं हि दृश्यते लोके कस्मिंश्चित् सामाजिकवैयक्तिकधार्मिकादिप्रसङ्ग उपनते सत्कारसभाजनसंभावनावसरे समाहूतान् श्रद्धाप्रेमादिपुरस्कारेण सुनिमन्त्रितामन्त्रितान् लक्षाधिकरूप्यकाणि व्ययीकृत्याप्यन्ते निवेदयन्ति—"अस्माभिरमुकामुकप्रकारनियोजनाधिकारेण श्रीमन्तः सम्यक् सभाजनाय सुबहुमानेन सेवितुं चिन्तिताः, किन्तु योगायोगघटनया तादृङ्नाभूत्, अत्र साहाय्यदातॄणामनुपस्थितिरनुभवहीनता सामग्रीप्रगुणनविक्लवतादिकारणजातं प्रत्यक्षबाधकतयोपस्थाय विघ्नितमित्यादि" इत्येवं बहु स्वोद्भावितकल्पितवैकल्यकार्यकारणभावमुद्घाट्य शब्देन क्षमां याचित्वा संतुष्यन्ति। एतेनेदं सिद्ध्यति सर्वोपप्लवसाधकं शब्दजातमेवान्ते महत्संतोषकरमिति शब्दसुमनाञ्जलिः सर्वानतिशेते। अत एवोच्यतेऽभियुक्तैः—"इदमन्धं तमः

सर्वं जायेत भुवनत्रयम्। यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥" इति। तदेवं श्रद्धाशब्दप्रसूनाञ्जलिना सभाजनं सर्वातिशायितया सत्क्रियाप्रकाशनोपकरणत्वेन चिरादादृतं लोके। तेनैव हार्दभावभरेण श्रद्धाभिव्यञ्जकसाधनेनोपकारककृतीन् संभावयितुं प्रयत्यते। तत्र प्रातःस्मरणीयान् सुगृहीतनामधेयान् गुरून् श्रीमद्रघुनाथशर्ममहोदयान् संस्कृतविश्वविद्यालये भूतपूर्ववेदान्तविभागाध्यक्षान्, येषां वैदुष्येणेयं क्रमप्रकाशिकाटीका सुगुम्फिता चकासमाना पुरः प्रसृता, श्रद्धया प्रणमामि स्मरामि चानुवेलं हृदि संचिताशेषजन्मपातकोपशमनाय। सर्वतन्त्रस्वतन्त्राणां लोकोत्तरसहजप्रतिभासम्पन्नानां तेषामसीमकृपयैवाहं क्रमकुलदर्शनोम्भितस्यास्य चिद्गगनचन्द्रिकाख्यग्रन्थस्य व्याख्यानाम्भोधिं समुदतरम्। अनन्तरं सदाक्रियाकलापनिरतस्य विद्योद्धारैकव्रतस्य महामनस्विनो मूर्तिमत्क्रियाशक्तिस्वरूपस्य चिरसुहृदः श्रीव्रजवल्लभद्विवेदस्य सम्पूर्णानन्द संस्कृत विश्वविद्यालये सांख्ययोगतन्त्रागमाध्यक्षस्योपकृतिं मनसा स्मरामि संख्यातीतसाधुवादैश्च सभाजयामि, यस्य प्रेरणया कार्यमिदं सुसम्पन्नम्। श्रीमतां पालिविभागाध्याणां श्री प० जगन्नाथोपाध्यायानां सहजस्नेहं न विस्मरामि येषां सत्प्रेरणया सहजानुभावेन च सदा विद्याव्यवसायसुप्रतिष्ठा संस्थानेऽस्मिन् समुल्लसति। गीर्वाणवाणीप्रणयिनां गुणैकपक्षपातिनां संस्थासम्मानप्रतिष्ठासंवर्धनैकव्रतानां तेषां सुदूरदृष्ट्या सर्वजनहितभावना परिसरे विराजत इति ते हि सर्वेषां कल्याणमित्राणि मित्राणि। तेभ्यो धन्यवादवितरणप्रथानुसरणमल्पमेव। श्रीमतां सतीर्थ्यत्वेऽपि किञ्चिद् विशिष्टव्यवहृतिसमर्थकानां नव्यप्राचीनव्याकरणविभागाध्याणां तपःपूतान्तःकरणानामास्तिकप्रतिमूर्तीनां श्रीरामप्रसादत्रिपाठिनां विद्याधर्मज्ञानवाचस्पतीनां कृतज्ञतां स्मरामि यैष्टीकाकर्मणि संशोधनपरिवर्द्धनादिभिर्महदुपकृतम्। श्रीमतो दर्शनविभागाध्यक्षान् डा० श्री महाप्रभुलालगोस्वामिचरणान् बहुज्ञान् बहुश्रुतान् स्मरामि, येषामुपकारः शब्दसीमानमतिक्रम्य वर्तते। तेऽपि चिद्गगनचन्द्रिकाकारं मूलकालिदासमेवाममन्ति। तदर्थं तैर्बहुमूल्यान् प्रस्तावान् प्रस्तुत्य यावदुपकृतं तस्य श्रद्धया स्मरणं महते श्रेयसे कल्पते कल्पिष्यते च। अनुसन्धानसहायकाः श्रीमन्तः प० उमाशङ्करत्रिपाठिनः कतिपयश्लोकव्याख्यानप्रसङ्गे स्वीयोत्प्रेक्षोद्भावनादिना यदुपकृतवन्तस्तदर्थं ते धन्यवादार्हाः।

"आद्यन्ते महती पूजा" इति नियममनुसृत्येदानीं वर्तमानकुलपतीनां स्वनामधन्यानां तत्रभवतां प्राच्यप्रतीच्योभयविद्यानिष्पातानां नीतिधर्मधुरन्धराणां संस्कृतसंस्कृतिसंपोषणपूर्वकतदुद्धारैकव्रतानां न्यायवेदान्तयोरप्रतिमप्रतिभानुषां शासनकर्मसहजनिष्णातत्वेन बाह्याभ्यन्तरशान्तिसन्दर्भसंस्थापनमेधावतां संचितपुण्यलब्धतेजसां कुशाग्रबुद्धीनामौचित्यपरम्परानिभालनैकव्रतानामुपकारातिशयं श्रद्धया मनोवचःकर्मभिः संस्मरन् संख्यातीतैः साधुवादाभिनन्दनसंदोहैस्तान् सत्कृत्य सभाजयामि, येषां सुनिपुणसतर्कजागरूकतया ग्रन्थोऽयं सटीकोऽल्पीयसा कालेन प्राकाश्यमुपगत इति। प्रशस्तिपद्यनिर्मितिप्रतिभया ग्रन्थमलङ्कृत्यापि पुष्करपलाश वन्निर्लेपानां व्याकरणन्यायवेदान्तशास्त्रार्जितनैपुण्यानां सांख्ययोगतन्त्रागमपारदृश्वनां चिरसुहृदां पुण्यैकमात्रलभ्यकाव्य-

प्रतिभाधनानां न्यायवैशेषिकविभागाध्यक्षाणां सुतीक्ष्णधीमुषीजुषां श्रीरामपाण्डेयानां श्रद्धास्मरणं चिराय हृदि शान्ति वितरति। एभिर्ग्रन्थटीकाविरचनप्रसङ्गे साधूपकृतं तदर्थं ते धन्यवादार्हाः। सम्पूर्णानन्दसंस्कृतविद्यालयीयानन्यानधिकारिणोऽपि प्रत्यक्षाप्रत्यक्षसाहाय्यदानेनोपकृतवतो धन्यवादैः साधु सभाजयामि। सरस्वतीभवनग्रन्थाध्यक्षानपि तेषामुपकारपरम्परायै साधुस्मरणपुरःसरं धन्यवादैः सत्करोमि। अन्यानपि विदुषः संस्कृतसमाराधनतत्परान् येषां मानसशुभकामनाबलमवाप्याहं प्रस्तुतकर्मणि साफल्यमधिजगाम तान् धन्यवादैः सत्कुर्वन् सभाजयामि। अन्ते विस्मृतिवशादुपकृतवतामप्यत्रानुल्लिखितान् सभ्यसज्जनान् हार्दसाधुवादेन संयोजयामि। महावीरप्रेसाधिपतिश्रीयुतबाबूलालफागुल्लस्तच्चिरजीविश्रीराजकुमारजैनौ च हृदयेन धन्यवादैः संयोजयामि, ययोः सोत्साहसहयोगेन मुद्रणकार्यं समाप्तिमगमदिति। मनोवचःकर्मणां साधनानामक्षमत्वेन सत्कारमर्यादया संस्मृतानां हृदयेन श्रद्धया समादरेण सुस्वागतं व्याहरन् विरमामि विस्तरात्।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी
८-९-१९७९ ई०

विदुषां वंशवदः
**रघुनाथमिश्रः**
आगमाध्यापकः

# विषयानुक्रमणिका


प्रकाशकीय वक्तव्य १
भूमिका ३
विषयानुक्रमणिका ३२
गणपतिवन्दनम् । १
तामसवृत्तिव्यपनयनाय शिव स्तुतिः । २
तापत्रयोपशमाय कालिकास्तुतिः । ३
महाकालिकोपासनाया उपदेशः । ३
शिवाद्वैतलाभाय शिवप्रपत्तिः । ३
षडध्वपित्रोः शक्तिशिवयोः प्रपत्त्युपदेशः । ४
शक्तिकर्तृक शिवालिङ्गनपूर्वकं शिवस्य मन्दरत्ववर्णनम्। ५
हृदयाकाशे चित्तत्त्वनमस्कारः । ५
पुरुषविशेषस्यैश्वरस्य प्रणिधानोपासना। ६
शिवशक्त्योर्हंकाराकाररूपेणावभासनम् । ६
सखण्डाखण्डरूपेण शक्तिनिरूपणम् । ८
भौतिककैलासस्याध्यात्मिकत्वेन रूपणम् । ८
कालीशक्तेः ब्रह्मसादृश्यवर्णनम् । ९
ब्रह्मणस्तत्तत्कार्यात्मकत्वे यथा स्वातन्त्र्यं तस्य शक्तिशक्तिमद्रूपत्वेनाप्य-
वस्थाने स्वातन्त्र्यमेव । १०
देशकालरूपेण व्यक्तिजातिशरीररूपेण भगवत्या विजृम्भणम् । १०
शक्तिशरीरं शुद्धसत्त्वात्मकम् । ११
तमःप्रधानं शक्तेः स्वरूपम् । ११
शिवे यदैश्वर्यं तत् शक्तेः रूपम् । १२
विद्यात्मकं शक्तिस्वरूपं सत्त्वात्मकम् । १२
पूर्णरिक्त इति दशाद्वयं शक्तिकर्तृकमेव । १३
सर्गसंहारयोः सन्धौ काल्याः क्रमो नावभासते । १४
निर्विकल्पस्वरूपमेव मोक्षः । १४
शक्तावेव क्रमाक्रमौ भासेते । १५
शिवः स्वेच्छया विभुत्वं विहायाणुत्वं गृह्णाति । १५
मायाशक्त्या धर्माधर्मौ समुत्पाद्येते । १६
शक्त्युपासनया द्वैतभावविगलने सामरस्यरूपता । १६
शक्तेः कार्यकारणपरमकारणरूपत्रैविध्यनिरूपणम् । १७
सप्तवर्गात्मि काकाली स्वभक्तान् चिदाकाशं प्रापयति । १७

| | |
|---|---|
| चतुर्विधवाक्षु परापश्यन्त्योः शक्तिप्रापकत्वम् । | १८ |
| विमर्शशक्तिः सृष्टिस्थितिसंहारधामातिक्रम्य तिष्ठति । | १९ |
| चिदाकाशद्वैविध्येनेडापिङ्गलयोर्मध्ये सुषुम्णाया धाम । | २० |
| परापरभेदेन शक्तेर्द्वैविध्यम् । | २१ |
| पञ्चप्राणात्मिका सृष्टिः सर्वतः प्राग् भवति । | २२ |
| पराशक्त्यात्मिका काली वर्णमालारूपा । | २२ |
| परा, परापरा, अपरा, कालकर्षिणीति चतसृणां द्वादशभेदवर्णनम् । | २३ |
| अथ पराशक्तेस्त्रीणि नेत्राणि सूर्यसोमाग्नयः मानमेयमितिरूपाः। | २३ |
| मूलाधार एवाद्वैतचक्रम् । | २४ |
| आहतानाहतभेदभिन्नः शब्दः । | २५ |
| वर्णमालोपादानिका क्रियाशक्तिः पारमेश्वरी शक्तिरेव । | २५ |
| पराशक्तेर्बिन्दुस्तेन नादबिन्दुबीजानि । | २६ |
| प्रथममिच्छाशक्तिस्ततो ज्ञानशक्तिस्ततः क्रियाशक्तिः। | २७ |
| एषणापरपर्यायेच्छाशक्तेरेव ज्ञानक्रियाशक्तिक्रमेण वाग्व्यवहारत्वम् । | २८ |
| सांशनिरंशभेदेन खेचर्यादिशक्तिचतुष्टयस्य बाह्यान्तरत्वनिरूपणम् । | २९ |
| शिवशक्त्योरकुलकुलसंज्ञानिरूपणम् । | २९ |
| वृत्तेः पञ्चकमेव पञ्चभूतगुणवृत्तित्वं लभते । | ३० |
| एकादशप्रकारकपराशक्तिस्मरणेन परासिद्धिः । | ३१ |
| चिद्रूपस्य विश्वस्य धर्मिरूपत्वमचिद्रूपस्य धर्मरूपत्वम् । | ३१ |
| प्रलये निर्विषयचिद्रूपं महाकाल्याः स्वरूपम् । | ३२ |
| चितिशक्तिरेव बाह्याभ्यन्तरोभयवस्तुप्रसूरिति वर्णनम् । | ३२ |
| सप्तमी भूमिः शान्ताख्या । | ३३ |
| नित्यविभाता चितिशक्तिरेव परमं स्वरूपम् । | ३४ |
| जगतो जडत्वं स्वाभाविकं न तु कारणादागतम् । | ३४ |
| शक्तिः स्वप्रकाशरूपस्येश्वरस्य शक्तिरूपो धर्मः । | ३५ |
| जगति स्वरूपेणानिर्वचनीयत्वजडत्वभास्यत्वानि । | ३५ |
| सिद्धपञ्चकार्थनिकरयोर्भास्यभासकभावः शक्तिकृतः । | ३६ |
| अनुग्रहोऽपि शिवकर्तृकः शक्तिदत्त एव । | ३७ |
| वस्तुसमूह-इन्द्रियत्रयोदशकमित्युभयमपि शिवाहन्तायाः स्वरूपम् । | ३८ |
| शिवस्यानन्दसम्पादिका शक्तिरेव । | ३८ |
| पुर्यष्टकस्वरूपा पुरीसमवभासिका शक्तिः । | ३९ |
| भक्ष्यभक्षकपदस्थयोः सर्गसंवृत्योरन्तःशक्तिप्रत्तशरीरो जीवः । | ४० |
| जीवस्य बोधकर्मणोः प्रवृत्तये षड्राजपुत्राः । | ४० |
| ऊर्ध्वाम्नायस्थगुरुक्रमस्थसिद्धमण्डलगता शक्तिः जीवस्योपकर्त्री । | ४१ |
| अपानसोमस्यानन्दात्मकषोडशकलाकर्त्री शक्तिरेव । | ४२ |

द्विविधयोर्दिवसोदयक्षपोदययोः कर्त्री शक्तिरेव । ४२
प्राणापानयोः समरसा स्थितिरन्तर्गता मातृमूर्तिरेव । ४३
प्रथमादिचतुर्थान्तावरणेषु ध्यातुराश्रितगुरुक्रमा मूर्तयः । ४३
निर्बीजसमाधौ सुषुप्तिस्वप्नजागरणेति धामत्रयवर्णनम् । ४४
पुनरपि प्रकारान्तरेण निर्बीजसमाधिवर्णनम् । ४४
चार-राव-चरु-मुद्राभिः चतुर्भिः क्रमभेदेनाकृतिः स्फुटा भवति । ४५
प्रकाशानन्दचक्रत्रयगता नादविन्दुलिपिमूर्तीनां मानसेज्या । ४६
शक्तिलयाधिष्ठानभूतशिवोपासनाक्रमेण शक्तिस्तुतिः । ४६
नीरक्षीरवत् शिवशक्तिसामरस्यरूप-बिमर्शः । ४७
तन्त्रागमसम्मतसृष्टिप्रक्रियानिरूपणम् । ४८
पीठचक्ररहिताशक्तिः सविकल्पकसमाधौ लक्ष्यते । ४८
अक्षरगणस्य वीरत्वव्युत्पत्तिप्रदर्शनपूर्वकं बिन्दुनादयोः प्रतिलयक्रमः । ४९
अनलार्कशशिविग्रहायाः शक्ते. साधनक्रमोद्देशः । ४९
अकारादिषोडशबीजाक्षराणां मन्त्ररूपत्वमातृकाशक्तित्वेन लयहेतुत्वनिरूपणम् । ५०
इन्द्रियवृत्तेः स्वविषयीभूतभावसंहारः श्मशानमिति तन्निरूपणक्रमः । ५०
क्षेत्रपालादि-अनाख्यक्रमनिरूपणं युग्मश्लोकेन । ५२
सनिकेतनिर्निकेतभेदेन शक्तिस्वरूपनिर्वचनम् । ५२
निर्विकल्पसमाधिप्राणायामसाध्याध्वरोत्सवनिरूपणम् । ५३
"प्राक् शक्तिः प्राणे परिणता" इति नीत्या व्यष्टिसमष्टिविधारकत्वम् । ५४
इच्छाशक्तिमनुसृता क्रियाशक्तिर्नादमधिष्ठाय जगद्रूपेण विजृम्भते । ५५
पञ्चवाहशरीरत्ववर्णनम् । ५५
पञ्चवाहेषु भूचरीशब्दव्यपदेश्यं मातृस्वरूपम् । ५६
दिक्चरीशक्तेः स्वरूपम् । ५६
गोचरीशक्तेर्निरूपणम् । ५७
ब्रह्मतदाश्रितसिद्धमण्डलनिर्देशः । ५७
ध्याननिश्चलसाधकानां कालवश्यताभावनिरूपणम् । ५८
प्रणवरूपता शक्तेरिति सविस्तरं वर्णनम् । ५९
सोऽहं हंस इति शब्दे लोपपूर्वकरूपसन्धिभ्यां प्रणवसिद्धिः । ५९
ऊँकारस्य मातृविग्रहत्ववर्णनम् । ६०
अन्तरध्यात्मं बहिश्चाधिभूतमिति युग्मेन निरूपणम् । ६१
मुण्डदण्डक्रमनिरूपणम् । ६२
प्राणापानादिरूपपञ्चवाहक्रमनिरूपणम् । ६३
पञ्चवर्गमयपिण्डगामिनी निष्क्रमा शक्तिरिति निर्वचनम् । ६३
नानाविधविद्यौघजननी शक्तिः । ६३
चिदाकाशोर्ध्वगता शक्तिश्चित्तरूपशिवे निलीयते । ६४

क्रमलक्षणस्पन्दसृष्टौ खेचरीं निरूप्याक्रमसृष्टौ भूचरीनिरूपणम् । ६४
संहारकर्तृत्वेन दिक्चरीस्तवः । ६५
संहारक्रमसंहारहेतुं गोचरीपदाभिधेयां मातरं स्तौति । ६५
प्रकारान्तरेण खेचर्या एव पुनः स्तवः । ६६
सर्गकाले संहारशक्तेर्दिक्चर्या आक्रान्ततया सृष्टौ न कापि बाधा । ६६
भूचर्या धामक्रमसर्जनानन्तरं वर्णक्रमसृष्टिः । ६७
दिक्चरी निर्विभागबिन्दुं सृष्ट्वा तत्कारणभूतां भूचरीमपि निर्विभक्तां करोति । ६७
दिक्चरी मूर्तिचक्रमधिरुह्य बिन्दुमपि ग्रसित्वा परावाचं विशति । ६८
परास्वरूपं तत्प्रवेशप्रकारं चाभिदधन् मङ्गलास्वरूपं निर्वक्ति । ६८
अनन्तरं संहारकाल्याः स्तुतिः । ६८
अम्बरस्य सस्वरास्वररूपेण द्वैविध्यमुक्त्वा तत्स्वरूपां कालीं स्तौति । ६९
परावाक् सदोदिता ज्ञानरश्मिसमूहं विस्तारयन्ती तिष्ठति । ७०
करङ्किणी शक्तिः मुद्रा वेति विचार्य नवेन्द्रियाणां शक्तितनुत्वनिर्वचनम् । ७०
कालिकायाः क्रोधनीरूपतावर्णनम् । ७१
प्रकारान्तरेण क्रोधनीमेव पुनर्वर्णयति । ७१
विश्वसंहारे विश्ववासनाधारिणी भैरवी क्रियाशक्त्यात्मना परिणमते । ७२
अष्टपुरीनिषण्णा जगद्बीजवासनानामपि संहारकर्त्री । ७२
जगद्बीजवासनाधारिणीं भैरवीं निरूप्य खेचरीस्तुतिः । ७३
शक्तेः समाधिमार्गोपन्यासमुखेन वृत्तिविशेषरूपखेचरीमुद्रारूपत्वम् । ७३
शक्तेः निर्विकल्पकसविकल्पकसमाधिगोचरतावर्णमम् । ७४
कादिहादिमतद्वयेन मन्त्रस्वरूपनिष्पत्तिज्ञानम् । ७४
मूर्तिबिन्दुचक्रशशिकुण्डली शिखारूपा प्रसिद्धा, तासां निर्वचनम् । ७५
चतुष्षष्टिवर्णरूपाणां शक्तीनां सृष्टिप्रलयोपादानत्वेन मङ्गलायाः स्तवः । ७५
परापश्यन्त्यादीनां वाचां प्रसङ्गवर्णनम् । ७६
चिदाकाशे चित्सामरस्यापन्ना चितिशक्तिरेकैव । ७७
चितिशक्तेर्नित्यत्ववर्णनमुखेन विज्ञानवादिमतप्रतिक्षेपः । ७७
विमर्शद्वितयं शक्तितनुत्वेन वर्णयति । ७८
पूर्वं मानसः सविकल्पो विमर्शः । ७८
समष्टिरूपशिवशक्तिसामरस्यमेव व्यष्टौ भोग इति कथनम् । ७९
निर्बीजसमाधौ वासनारहितज्ञप्तिमात्रनिर्विकल्पचित्तवृत्त्यधिष्ठानं सामरस्योत्पादकम् । ७९
निर्विकल्पसमाधौ शिवशक्त्योः सामरस्यम् । ८०
शिवाश्रितशक्तिपरिणामभूतं ज्ञानं लहरीत्युच्यते । ८०
प्रकाशमयी शक्तिरेव चिदात्मकविश्वावभासिका । ८१
वृत्तिरूपप्रत्ययस्य वर्णपदाद्यनुविद्धत्वम् । ८१

षट्चक्रेषु पञ्चसु मनसः स्थितौ सविकल्पः समाधिः । ८२
ब्रह्मविष्णुरुद्रेश्वरसदाशिवाः पञ्चचक्राधिष्ठातारः । ८२
अम्बरेश्वरीत्यादिशक्तिचतुष्टयवर्णनम् । ८३
गोचरीशक्तिरिन्द्रियवृत्तिरूपज्ञाने स्फुरति । ८३
सर्वशक्तीः संहृत्य महाशक्तिः सामरस्यापन्ना भासते । ८४
निर्विकल्पसमाधौ निद्रायां च शिवशक्त्योर्निरन्तरं सामरस्यम् । ८४
सर्गे प्रलये च कारणात्मना शक्तितत्त्वं स्थितमेव । ८५
अणुभावाक्रान्ताऽर्णभावाक्रान्ता वा शक्तिकला वृन्दचक्रान्तर्गता । ८५
शक्तिरूपान्नादादकारः, स वर्णाग्र्यः, उपादानाच्च बीजम् । ८६
ग्रन्थिपञ्चकविभेदिनी वासनापञ्चकविलापिनी शक्तिरेव । ८७
कालीशक्तेः सृष्टिसंहारकर्तृत्वम् । ८७
सर्गः शक्तिनिष्ठत्वादक्रम एव, तथापि तस्य सक्रमत्वम् । ८८
भूतपञ्चकं सक्रममेव । ८८
रुद्रस्य संहारकत्वं ब्रह्मणः सृष्टिकरत्वं समर्थयति । ८९
संहारः शक्तिस्वभावः, सर्गस्तु न, यस्तु पर उदयः स निःस्वभावः । ८९
पञ्चसूक्ष्ममहाभूतानि पञ्चयोनयः, तत्र प्रमाणं सिद्धानुभव एव । ८९
शिवशक्त्योः सामरस्यं प्रलये सर्गे तु वैषम्यमिति वर्णनम् । ९०
हृदयं कुण्डलितीशक्तिपरिवृतं तत्रस्थं मनोऽपि तया परिवृतम् । ९१
प्राणस्य त्रयः पन्थानः—अपानो मुखं नासिका च । प्राणोऽपि हंसः । ९२
शक्तेः प्रथमकार्यमिच्छैव, सा च शुद्धाध्वनि न किमपि कर्तुं क्षमते । ९२
संस्कृते मनसि मेषत्वारोपः, अज्ञाने मलिनया इभत्वारोपः । ९३
संस्कृतं मनः पदं सिद्धिं वा नाभिलष्यति । ९३
मीनः कामः संहारेच्छारूपः, तमपि महाकाली ग्रसति । ९४
शक्तेरव भासनक्रमो निरधिष्ठानो भूमरूपश्च । ९४
अक्षरचक्रमध्ये खण्डचक्रं भवति । ९५
खण्डचक्रस्य प्रकारान्तरेण पुनर्वर्णनम् । ९५
अन्वयक्रमस्थितिक्रमसंहृतिक्रमादीनां वर्णनम् । ९६
श्रावणप्रत्यक्षगोचरीभूतौ शब्दौ व्यङ्ग्यव्यञ्जकरूपौ । ९६
इन्द्रियदशकनिरोधेन विषयपञ्चकभूतपञ्चकयोर्लयः । ९७
अक्षचक्रनिवहेन विषयोपसेवी जीवः शिवपदं न याति । ९७
अभ्यासवैराग्याभ्यां विषयनिवर्तितचित्तवृत्त्या तुर्यधामप्राप्तिः । ९८
रुचिचक्रस्याधिष्ठात्री कालो शक्तिरेव । ९८
चिदाकाशस्थचिन्मरीचयः शक्तिस्फारिताः पूर्णत्वमधुः । ९९
शक्तिनित्यत्वप्रसाधनपूर्वकं तस्याः स्वात्मरूपत्वम् । ९९
निष्कलाऽपि शक्तिः सृष्ट्यनुरोधेन सकला भवति । १००

विविधकालीप्राकट्यप्रसङ्गे सृष्टिकाल्या वर्णनम् । १०१
चित्प्रकाशसमूहो द्विविधः क्रमाक्रमरूपत्वात् । १०३
शिवनिष्ठभैरवत्वं शक्तिकारणकं तस्याख्यापनम् । १०४
सक्रमाशक्तिः सर्वोत्कृष्टगुणा । १०७
प्रणवमाहात्म्यं शब्दतत्त्वस्वरूपशक्तिवर्णनं च । १०८
अज्ञाननाशादेव जीवत्वनाशः । ११०
वाच्यवाचकभेदेन प्रसृतस्य षडध्वनः स्वरूपवर्णनम् । १११
भङ्गिभेदेन शक्तिवैभववर्णनक्रमः । ११२
स्वीयचिदानन्दात्मके धाम्नि साधकं नीत्वा शक्तिकर्तृकं शोधनम् । ११३
चिदाकाशप्राप्त्यधिकारी कः ? कथं च तत्प्राप्तिः ? ११५
शक्तिनिष्ठचण्डित्वं समालोचयति । ११६
अक्षराङ्कमययन्त्रप्रशस्तिः । ११७
शक्तिपञ्चकं भूतषट्कं च विमर्शतेजसि संशोध्य शिवत्वाप्तिः । ११८
चिद्रूपदर्पणे चिद्रूपं जगत्प्रतिबिम्बति । १२०
प्रतिबिम्बनविषयेऽपूर्वविज्ञप्तिः । १२२
बाह्यबिम्बसत्त्वे प्रतिबिम्बसत्तेति मतं निर्मूलम् । १२३
मातृमेयमितिलक्षणत्रिपुट्या अनुपालनं व्यर्थम् । १२३
शक्तिः स्वमाययाभ्यन्तरस्थितविश्वं बहिः प्रकाशयति । १२५
शिवं निखिलप्राणिचक्रनगरीत्वेन रूपयन् शक्ति गुहारूपेणोपमिमीते । १२७
सर्वस्यापि प्रमातुर्बाह्यमानसभेदेन द्विविधं भासनम् । १२९
बिम्बप्रतिनियतप्रतिबिम्बसमर्पणनियमोपेक्षा कल्याणी । १२९
स्वप्नसंकल्पादौ बिम्बं विनापि प्रतिबिम्बज्ञानम् । १३०
कल्पनामृषात्वमपनुदन् गारुडमन्त्रजापेन विषनाशः । १३१
अर्थप्रकाशकः शिव एव । २३२
पुरुषं विना सर्वविधमपि ज्ञानं नार्थक्रियाकारि । १३३
कल्पनाधारणादीनां स्वरूपवैगुण्यं महतेऽनर्थाय । १३३
चित्सकाशात् सर्वं जगदुत्पन्नमिति तथ्याभिधानम् । १३४
भूतकालिकक्रमातिक्रमस्य विस्मरणपूर्वकं वर्तमानादिना संतोष एव वरम् । १३५
चिदाकाशेऽक्षरस्वरूपायां चिति सर्वपर्यवसानम् । १३६
प्राप्ताधिकारमहत्त्वान् ग्रहनक्षत्रेशदेवान् वर्णयति । १३६
स्मृतिस्वरूपनिरूपणपूर्वकं दृक्-स्मृति-अपोहनरूपाणां वर्णनम् । १३७
सृष्टिप्रलययोर्भोक्तृस्थितिमाह । १४२
सृष्टेः प्रलयक्रमवर्णनम् । १४२
शक्तेर्गमकं बिन्दुं प्रतिपादयन् मुद्रादेरनावश्यकत्वम् । १४३
शक्तेर्मन्त्ररूपप्रसिद्धौ हेतुमाह । १४४

प्रकाशप्रसारे शक्तिरेव प्रभुरित्याह । १४५
इदानीं सकलप्रमाता चिन्दानन्दभूमौ लयाय प्रार्थयते । १४६
अथेदानीं कालकाल्याः स्तुतिमाह । १४६
काल्या रूपद्वयं महाजनेभ्य आश्चर्यावहम् । १४७
इदानीं कलितकल्पनां परां कालीमाह । १४८
प्रकाशार्णवशिवस्य तरङ्गभूता शक्तिरित्याह । १४९
सृज्यमानसंह्रियमाणरूपं द्विविधं विश्वमुदरे निदधतीं शक्तिं प्रशंसति । १५०
शत्रुसत्त्वे कुतः सुखमित्याह । १५१
निरंशसांशभेदेन काल्या रूपद्वयं निर्दिश्य सृष्टिकालीमाह । १५१
मध्यस्थितवायोः प्राणस्य हरणात्तव कालेति नाम निर्वक्ति । १५२
अमृतसहोदरसोमरसपानमाह । १५३
उन्मनीशक्तिं निर्वक्ति । १५४
संहारस्वरूपवर्णनम् । १५५
शक्तिसकलप्रमात्रोः को भेद इति निर्वर्णयन् प्रकाशविमर्शस्थापनम् । १५६
संहृतविश्वस्य स्मृतिमहालयसंस्मरणस्तुतिः । १५६
साध्यकाली विश्वभक्षिका । १५७
यमरूपेण काल्या भयजनकत्वम् । १५९
द्विविधप्रतिबन्धापसारणेन कालीस्मरणम् । १५९
मृत्योरभिषेकः काल्याः स्वभावः । १६०
भद्रकालीवर्णनपूर्वकं चिच्छक्तिर्ज्वालया महीयसी । १६१
रुद्रकाल्याः स्मरणम् । १६२
क्रियात्मककुटिलभ्रुकुट्या सृष्टिविचित्रताविलोपः । १६३
अग्नेरपि कालीशक्तेर्भक्षकत्वम् । १६३
सूर्यरश्मयोऽपि शक्तिशरणमागत्य सुखमासते । १६४
प्राणिनामन्तर्हृदि स्फुरदर्थपञ्चकं स्वातन्त्र्याद् बहिरायाति । १६५
कालीशक्तेरधिकाधिकतेजस्त्वलाभाय संहारः । १६५
समरीचिः सूर्यः शक्तौ लीयते । १६६
प्राणोऽपि शक्तौ लीयते । ९६७
प्रलयाग्निमरीचयोऽपि शक्त्या स्वात्मनि विलापिताः । १६७
श्रीभगवत्या मरीचयोऽपि त्रिपुटीं भक्षयित्वा शक्तिं शुश्रूषन्ते । १६८
श्मशानेश्वरं महाकालमपि प्राणाग्निभक्षिणी काली ग्रसति । १६९
दिक्चरीखेचर्योः संहारक्रमवर्णनम् । १६९
संवित्स्वभावा शक्तिरेव काली । १७०
भीमकाल्याः स्वरूपमाह । १७०
चिदाकाशसंश्रिताऽनाख्या । १७२

चिदाकाशस्य सप्रयोजननिर्देशं महत्त्वम् । १७२
शक्तिदशाप्रवाहप्रक्रमे नाद एव शक्तिसङ्केतग्राहकः । १७२
शक्तिस्वरूपज्ञानादृते जीवनं विगुणम् । १७३
ग्रन्थस्य निर्दिष्टं प्रयोजनम् । १७४
प्रकाशविमर्शसंघट्टस्वरूपा शक्तिः पृथिवीस्वरूपा । १७५
मायाशक्त्या सङ्कोचमञ्चितः पुरुषः शुद्धविद्योदये मुक्तः । १७६
देहस्य प्रफुल्लकमलवत् संवित्पीठरूपता । १७६
कालीनयप्रकाशनमेव शाक्ततत्त्वप्रकाशनम् । १७७
स्थितिविशेषसमासक्ता काली शक्तिः । १७७
चन्द्रापेक्षया शक्तौ सातिशयाह्लादकत्वम् । १७८
साधनामर्मज्ञानाय श्रद्धापेक्षिता । १७९
मानसाज्ञाननाशाय शक्तिरेकैव प्रभुः । १८०
शक्तेः प्रकाशः सर्वातिशायी । १८१
उपासकस्य शक्तिशरणागतिवर्णनम् । १८१
संवित्प्राप्त्युपाये सर्वजनाभिलाषेण शाक्तदर्शनं सर्वजनीनम् । १८२
त्रिविधतापापहाराय शक्तिराश्रयणीया । १८३
कालीमतपरिपोषणाय कृष्णावतारस्य प्रशस्तिः । १८३
अकारोत्पादितजगत्स्वात्मसात्कारिणी शक्तिः सर्वातिशायिनी । १८४
प्रकाशतमसो रञ्जकत्वेन शक्तेः सत्तानुमितिः । १८५
शिवशक्त्योरनुस्मरणेनैव जीवनयात्रासाफल्यम् । १८६
कालिकानुग्रहप्राप्तये ग्रन्थकर्तृकृतः प्रयासः । १८६
लिङ्गानां पात्रत्वमभजमानापि सा तत्स्फारिका । १८७
शिवस्यानाद्यन्तत्वे महामनस्त्वे शक्तिः कारणम् । १८७
स्वयमभिद्यमाना साऽन्यस्य भेदिका । १८८
स्वातन्त्र्यवैभववर्णनम् । १८९
यामलत्वसाधने शक्तेः प्रकर्षः । १८९
कालीशक्ते रक्तकृष्णगौररूपस्य हेतुत्ववर्णनम् । १९०
तत्तत्कार्यसाधनाय सौम्यघोरशान्तादिरूपधारणम् । १९१
प्रकाशपञ्जरे सर्वं भासते । १९१
परमार्थिकरूपेण केवलं चिन्मयरूपतैव तिष्ठति । १९२
मानसबौद्धोभयरूपेण स्त्रीति नाम्नो निष्पत्तिकारणम् । १९२
द्वितीयचतुर्थयोः पदयोः शक्तिः, तृतीयपञ्चमयोः शिवः । १९३
शक्तेः प्रथमादितृतीयान्तपदाक्रमणं क्रमप्राप्तम् । १९३
शक्तेर्निराकारत्वसाकारत्वनिरूपणम् । १९४
खण्डवस्तुनिर्देशका आगमा न शाक्तं धाम विवृण्वन्ति । १९४

| | |
|---|---|
| योगदर्शनोक्तविधिरपि गुरुमन्तरा शक्तिप्रापको नास्ति । | १९५ |
| शक्तिकर्तृकौदार्यस्य वर्णनम् । | १९५ |
| पञ्चशक्तीनां रागकालनियतीनां च परिचयविवरणम् । | १९६ |
| पञ्चकृत्यकारित्वे देवसङ्घस्य प्रसादानुभवः । | १९७ |
| वृत्तिपञ्जककार्यक्रमविभागो नानुसन्धेयः । | १९८ |
| देवताक्रमोदयजननी शक्तिरेव । | १९९ |
| दिव्यवाहविभवात्मकः शाश्वतः संहारः । | २०० |
| संहारिकाऽपि शक्तिः सर्वशक्तिपरिपूर्णैव । | २०० |
| हंसः सोऽहमिति मन्त्राध्वसङ्केतवर्णनम् । | २०१ |
| शक्तेः स्पन्दनिःस्पन्दरूपत्वनिरूपणम् । | २०२ |
| नरशक्तिशिवात्मकत्रिकवर्णनम् । | २०३ |
| चक्रनवकं नवोद्भासितं स्वात्मकल्याणाय प्रभवति । | २०४ |
| सप्तदशभेदभिन्ना शक्तिर्भावनामयी । | २०५ |
| शाम्भवशाक्तगुरुक्रमपरिचयः । | २०५ |
| क्रमप्रसरस्य प्रकर्षभासकत्वेऽपि शक्तिरक्रमैव । | २०७ |
| ज्योतिःस्वरूपोऽकारः । | २०७ |
| पौरुषमलविध्वंसानन्तरं पञ्चकञ्चुकनिवृत्तौ सिद्धत्वम् । | २०८ |
| शक्त्यनुग्रहलब्धतेजसा शाक्तक्रमवर्णनसामर्थ्यलाभः । | २०९ |
| स्वरचनासमर्पणपूर्वकं स्वानुग्राह्यतानिवेदनम् । | २१० |
| पूर्णपीठज्ञानं मोहनाशाय परमावश्यकम् । | २११ |
| ग्रन्थफलश्रुतिः । | २११ |
| प्रतिदिनपाठेन ध्यानस्मरणाभ्यां च शिवत्वलाभः । | २१२ |
| शिवसमावेशप्राप्तये शक्तिप्रार्थनम् । | २१३ |
| सर्वजनहिताय स्तोत्रम् । | २१४ |
| व्याख्याकरकृतानि प्रशस्तिपद्यानि | २१५ |
| श्लोकानुक्रमणिका | २१७ |

# चिद्गगनचन्द्रिका

क्रमप्रकाशिकासंवलिता

क्षीरोदं पौर्णमासीशशधर इव यः प्रस्फुरन्निस्तरङ्गं
चिद्व्योम स्फारनादं रुचिविसरलसद्बिन्दुवक्रोर्मिमालम् ।
आद्यस्पन्दस्वरूपः प्रथयति सकृदोङ्कारशुण्डः क्रियादृग्
दन्त्यास्योऽयं हठाद्वः शमयतु दुरितं शक्तिजन्मा गणेशः ॥१॥

या कालं कलयन्तिका वपुरदः संकर्षयन्ती स्थिता
या सृष्टिस्थितिसंहृतीतिपदकैः पूर्वस्थितैः संस्तुता ।
याद्यस्पन्दवशात् सृजत्यविरतं ज्ञानक्रियासंयुता
सा काली कलनामतीतचरिता शक्तिः परा दीव्यतु ॥

परमशाक्तः श्रीकालिदास आद्यायाः सरहस्यनिर्देशां स्तुतिमारचयिष्यन् विघ्नविघाताय तस्याः प्रियसुतं गणेशमाद्यस्पन्दस्वरूपारोपरूपकेण ध्यात्वा दुरितप्रशमं प्रार्थयते—क्षीरोदमिति । स शक्तिजन्मा देवीपुत्रो गणेशः प्रसिद्धो देवः, किञ्च शक्तिजन्मा आद्यस्पन्दरूपेच्छाशक्तिजन्मा । गणेशोगणस्य करणचक्रस्येशः पतिरहङ्काररूपः प्रभुः । स्पष्टं चेदं षष्ठपद्यस्य व्याख्यावसरे तन्त्रालोके प्रथमाह्निके । आद्यस्पन्दस्वरूप आद्यस्पन्दकार्यत्वात्तत्स्वरूपः । ॐकारशुण्डः ॐकार एव कुण्डलीकृता शुण्डा यस्य स तथाभूतः । क्रियादृक् क्रियाज्ञानशक्तिसम्पन्नः । दन्त्यास्यो दन्त्या वर्णा आस्यं यस्य सः । आस्यभवदन्तस्थानकत्वेन दन्त्यवर्णानामास्यसम्बन्धित्वेनास्यत्वारोपः । देवपक्षे हस्तिमुखः । यः निस्तरङ्गं क्षीरोदं प्रस्फुरन् पौर्णमासीशशधर इव । रुचिविसरलसद्बिन्दुवक्रोर्मिमालं रुचीनां कान्तीनां विसरेण प्रसरेण लसन्तो ये बिन्दवस्त एव वक्रा ऊर्मयस्तासां मालायुतम् । स्फारनादं प्रवृद्धघोषम् । सकृत्प्रथयति समुच्छलयति । अत्र निस्तरङ्गमिति स्फारनादमिति रुचिविसरेत्यादिरूपेण समुद्रसाधारणविशेषणत्रयेण चिद्व्योम्नः समुद्रत्वं व्यज्यते । सोऽयं गणेशो हठाद् व युष्माकं वक्तॄणां प्रतिपत्तॄणां च दुरितं पापं शमयत्वित्यर्थः । अत्र संक्षेपेणेयमागमिकी प्रक्रियाऽनुसंधेया—चिद्रूपायाः परस्याः संविद आद्यः स्पन्द इच्छाशक्तिरूपः । तस्याश्च कार्यमहङ्कारो जगत्स्रष्टा, स एव ब्रह्मत्वेन पुराणादौ प्रसिद्धः । मनो मतिर्महान् ब्रह्मेति च दर्शनेषु । स च ज्ञानशक्तिक्रियाशक्तिरूपशक्तिद्वयसंपन्नः । एतच्छक्तिद्वयाभावे स्रष्टृत्वासंभवात् । ततश्च समुत्पन्न ॐकारो यतः शब्दार्थोभयसृष्टिः । ॐकारस्य सर्वबीजत्वञ्च श्रुत्यादिसंमतमेव । सोऽपि च कार्यस्य कारण-

जातीयत्वाज्ज्ञानक्रियाशक्तिसम्पन्न एव। ततश्चास्ये दन्त्या वर्णाः प्रागुत्पन्नाः पश्चादोष्ठ्यादयः। कण्ठ्यास्तु वर्णाः प्रागुत्पन्ना अपि नास्यभवा इति न दोषः। अहङ्काररूपस्य गणेशस्य चिद्व्योम्नि ॐकारसमुत्पादक्रमेण शब्दार्थोभयात्मकजगत्सर्जनमेव च चिद्व्योम्नो निस्तरङ्गस्य समुच्छलयितृत्वमिति विविधशब्दोत्पादनेन च स्फारनादत्वसम्पादनमिति ॥ १ ॥

अथेदानीं सर्वदेवेषु शास्त्रानुसारं प्रथमवन्द्यं गणेशं रूपध्यानपुरःसरं विघ्नविघाताय सम्प्रार्थ्य प्रवक्तृप्रतिपत्तॄणां सन्मार्गालोकनाय तामसीं चित्तवृत्तिं व्यपनेतुं शिवं प्रार्थयते—

**स्थूलं सूक्ष्मं परं च त्रिविधमिह जगद् यत्प्रथावेशसिद्धया**
**युक्तं सत्ता यदीया स्फुरति च परतः स्वप्रथैकस्वभावा।**
**भामूर्तिं यं विमर्शक्रियमनुपतिता लक्ष्यते लोकवृत्तिः**
**सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥२॥**

इह स्थूलं भूगिरिसमुद्रादिकं सूक्ष्मं तन्मात्ररूपं परं च आभ्यामुत्कृष्टमव्याकृतमित्येवं त्रिविधं जगत् यत्प्रथावेशसिद्धया युक्तं यस्य शिवस्य प्रथा प्रकाशस्तस्या आवेशस्त्रिविधे जगति सम्बन्धस्तेन सिद्धया युक्तं सिद्धमित्यर्थः। तथा च श्रुतिः— "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति। किञ्च स्वप्रथैकस्वभावा स्वेन स्वस्य प्रथा स्वप्रथा तन्मात्रस्वभावा स्वयंप्रकाशज्ञानस्वरूपेति यावत्। एवंभूताऽपि यदीया यस्य शिवस्येयं सत्ता परतः शास्त्रानुमानादिप्रमाणतः स्फुरति। भामूर्तिं ज्ञानस्वरूपम्। विमर्शक्रियं विमर्शः अहमित्यात्मानुसन्धानं सैव क्रिया यस्य तं तथाभूतम्। यं शिवमनुपतिता अनुगता सर्वाऽपि लोकवृत्तिर्लक्ष्यते। सर्वोऽपि लोकव्यवहारो ज्ञानपूर्वकोऽहमित्यनुसन्धानपूर्वकश्चेति भावः। स ईशः सन्मार्गालोकनाय सन्मार्गस्यागमोक्तस्य कल्याणमार्गस्य कुलमार्गस्य वाऽऽलोकनाय वः प्रत्यासत्त्या प्रवक्तॄणां प्रतिपत्तॄणां च तामसीं तमोबहुलाम्। वृत्तिं चित्तवृत्तिम्। व्यपनयतु एतद्ग्रन्थाध्ययनजन्यज्ञानप्रकाशे सन्मार्गावरकमज्ञानं तमः दूरीकरोतु इति।

कुलमार्गस्य प्रशंसा च तन्त्रालोके प्रथमाह्निक उद्धृतया सार्धपद्यरूपयैतयोक्त्याऽवसीयते—

नभःस्थिता यथा तारा न भ्राजन्ते रवौ स्थिते।
एवं सिद्धान्ततन्त्राणि न विभान्ति कुलागमे ॥
तस्मात् कुलादृते नान्यत् संसारोद्धरणं प्रति ॥ इति।

अथाधुनाऽऽगमार्थप्रतिपादकचिद्गगनचन्द्रिकानामकग्रन्थव्याजेन मया मातुः पराम्बायाः कालिकायाः स्तुतिरेव प्रवक्तृश्रोतॄणां संसारकान्तारदावाग्निदह्यमानानां तापत्रयोपशमाय कृतेति तृतीयेन पद्येनाह—

इह कालिदासचन्द्र-
प्रसूतिरानन्दिनी स्तुतिर्व्याजात् ।
चिद्गगनचन्द्रिकाब्धेः
शमयतु संसारदावदवथुं वः ॥३॥

इह ग्रन्थे। चिद्गगनचन्द्रिकाब्धेः चिद्गगनचन्द्रिकारूपो ग्रन्थ एवाब्धिस्तस्य व्याजात् कालिदासचन्द्रप्रसूतिः कालिदास एव चन्द्रः तस्मात् प्रसूतिः प्रसवो यस्याः सा। आनन्दिनी श्रोतृलोकस्येति शेषः। स्तुतिः कालिकाया इति शेषः। वः युष्माकं प्रवक्तृश्रोतॄणाम्। संसारदावदवथुं संसारवनाग्निसंतापम्। शमयतु दुरितापनयनेन दूरीकरोत्विति योजना। चिद्गगनस्य प्रकाशकेऽस्मिन् ग्रन्थे चन्द्रिकात्वमारोपयितुं कालिदासे चन्द्रत्वारोपः ॥ ३ ॥

अथ महाकालिकोपासनायाः फलं शाक्तागमसिद्धान्तप्रदर्शनमुखेन प्रदर्शयितुमादौ तदुपासनामेव सर्वाभीष्टसिद्धये विधत्ते—

चिल्लोचनेन सततं
शिवमीक्षितुमन्वये च सद्भावम् ।
लब्धुं च पूर्णभावं
यदि चेतः समुपाध्वमिमाम् ॥४॥

यदि चिल्लोचनेन स्वप्रकाशानन्दसंविद्रूपेण लोचनेन शिवमीक्षितुं स्वतादात्म्येन द्रष्टुम्। शिवस्यान्वये सद्भावे एव च जगतः सद्भावमीक्षितुमात्मनश्च शिवतादात्म्येन वीक्षितस्य जगति पूर्णभावं पूर्णत्वं व्यापकत्वञ्च लब्धुं युष्माकं श्रोतॄणां चेतो वर्तते तर्हि इमां बुद्धौ संनिहितां महाकालिकां समुपाध्वं सम्यक् तस्या उपासनां कुरुध्वमित्यर्थः। वस्तुतस्तु इमामित्यस्य स्थाने उमामिति पाठो युक्तः। उपास्यदेवतायाः प्रागनिर्देशेन इदमा परामर्शायोगात्।

त्वल्लोचनेनेति क्वाचित्कः पाठस्तु अपपाठ एव, जगन्मातुः प्रागत्र वा संबोध्यत्वेनानिर्देशात्। अनेन पद्येन जीवशिवयोस्तादात्म्यं शिवसत्तया जगतः सत्त्वं शिवतादाम्येन जीवस्य पूर्णत्वमित्यागमसिद्धान्तत्रिकमुपासनायाः फलभूतं प्रदर्शितम् ॥ ४ ॥

अथ हृद्गुहाश्रिताऽविद्याकार्यपूर्णाहन्तारूपग्रन्थेः सर्वानर्थमूलभूतायाश्छेदाय स्वतादात्म्येन शिवाद्वैतदृष्टिरूपां शिवप्रपत्तिमाश्रयते—

हृद्गुहामभिलषन्नहन्तया
दृक्क्रियावपुरदृक्क्रियापदम् ।
सन्तमेमि समभावदं शिवं
सख्यहानिरमुना हि सूयते ॥५॥

अहन्तया हृद्गुहायां संविद्रूपात्मतादात्म्यविभ्रममूलकेन अहंशब्दप्रत्ययगोचरत्वेन हृद्गुहां हृदयमेवाविद्यारूपतमश्छन्नत्वेन संविद्रूपात्मावरकत्वेन च गुहा, ताम्। अभिलषन् परप्रेमास्पदत्वेन कामयमानः। अत एव हृद्गुहातादात्म्याद् दृक्क्रियावपुः स्वभावतो दृग्वपुः क्रियावपुश्चाहम्, शिवस्य सर्वदा चिदानन्देच्छाज्ञानक्रियारूपत्वात्। अदृक्क्रियापदं दृशो ज्ञानस्य क्रियायाश्च पदं विषयो न भवतीति तथाभूतम्। स्वयंप्रकाशसंविद्रूपत्वेनावेद्यं क्रियाकर्मत्वाभावेन चाकार्यं सन्तं कालत्रयाबाध्यत्वेन सद्रूपम्। स्वाद्वैतदृष्ट्या स्वद्रष्टुः समभावदं स्वसाम्यप्रदम्। शिवं मलत्रयशून्यत्वेन शुद्धसंविद्रूपमात्मानमेमि स्वात्मत्वेन नित्यसंनिहितमपि अज्ञातत्वेन दूरस्थितमिव स्वतादात्म्यदृष्ट्या प्रपद्ये। हि यतः। अमुना सद्रूपशिवाद्वैतदर्शनेन पूर्णाहन्तारूपेण। सख्यहानिः हृद्गुहायां संविद्रूपात्मतादात्म्यविभ्रमरूपस्यात्मसख्यस्य हानिरुच्छेदः, सूयते उत्पाद्यते इति। अत्र प्रागुक्तमहन्ताद्वयं रहस्यागमेऽपि प्रदर्शितम्। तद्यथा—

पूर्णाहन्तात्मभावेन कृत्रिमाहन्तया विना।
आत्मानमात्मना साक्षाद् यः पश्यति स पश्यति ॥ इति ॥ ५ ॥

अथ साम्प्रतं वाग्विज्ञानयोः शक्तिशिवयोर्विमर्शप्रकाशात्मनोर्मिथः संयुक्तयोरागमोक्तषडध्वनामभिन्ननिमित्तोपादानत्वं वर्णयन् तौ अभीष्टसिद्धयर्थं ध्यानसचिवया बुद्ध्या प्रपद्यते—

**याऽहमित्युदितवाक् परा च सा**
**यः प्रकाशलुलितात्मविग्रहः।**
**यौ मिथः समुदिताविहोन्मुखौ**
**तौ षडध्वपितरौ श्रये शिवौ ॥६॥**

या विमर्शरूपा शिवा। अहमित्युदिता अहंशब्दाभिलप्याऽहमितिप्रत्ययेन विमृश्यमाना च वाग्रूपा। सा च सैव। एवकारार्थे चशब्दः। परा पराशक्तिरिति परावागिति चागमेषु व्यवह्रियते। यश्च प्रकाशलुलितात्मविग्रहः प्रकाशेन लुलितो विच्छुरितो व्याप्त आत्मविग्रहो निजं स्वरूपं यस्य स तथाभूतः प्रकाशात्मकः शिवः। एवमिह जगति सर्गात् प्राक् यौ पूर्वोक्तौ शक्तिशिवौ उन्मुखौ सर्गोन्मुखौ सन्तौ मिथः समुदितौ तौ षडध्वपितरौ षडध्वनामभिन्ननिमित्तोपादानत्वेन पितरौ मातापितरौ, जनकौ इति यावत्। शिवौ शिवा च शिवश्च शिवौ स्त्रीपुंवच्चेत्येकशेषः। सर्वाभीष्टसिद्धयेऽहं बुद्ध्या समाहितया श्रये प्रपद्ये इति। षडध्वानश्च निरूपिता आगमेषु। तद्यथा—

वर्णः कला पदं तत्त्वं मन्त्रो भुवनमेव च।
इत्यध्वषट्कं देवेशि भाति त्वयि चिदात्मनि ॥ इति सौभाग्यहृदये ॥ ६ ॥

अथ सर्गादौ शक्त्या समालिङ्गितः शिवः स्वाश्रितया सुधाकलया शक्तिं तर्पयन् सर्वत्र परिपूर्णं भारूपं पयोधिं जगत्सर्गाय विक्षोभयन् मन्दरायत इति आगमोक्तमर्थं

विशदीकरोति रुद्रमन्दरकर्मकस्वकर्तृकभजनोपन्यासमुखेन—

शक्तिनेत्रपरिणद्धमास्थितं पूर्णभामयपयोधिमन्थताम् ।
देवि तर्पणसुधाकलाश्रयं रुद्रमन्दरमहं स्फुटं भजे ॥७॥

हे देवि, शक्तिनेत्रपरिणद्धं शक्तिरूपेण नेत्रेण मन्थानरज्ज्वा परिणद्धं समालिङ्गितम् । पूर्णभामयपयोधिमन्थतां सर्वत्र पूर्णो यो भामयः स्वप्रकाशसंविद्रूपः पयोधिः तस्य मन्थतां जगत्सर्गाय विक्षोभहेतुमन्थानदण्डतामास्थितं प्राप्तम् । तर्पणसुधाकलाश्रयं शक्तेः तर्पणीया सुधाकला तदाश्रयं स्वाश्रितया सुधाकलया स्वपरिणद्ध्रीं शक्तिं डाकिन्यादिनवात्मना भावयन् तर्पयन्निति यावत् । रुद्रमन्दर रुद्र एव मन्दरस्तन्नामा पर्वतः, तमहं स्फुटं ध्यानेन स्वहृदये प्रादुर्भूतं भजे समाविशामीत्यर्थः । अत्र सुधाकलया शक्तेस्तर्पणं चोक्तं योगिनीहृदये पूजासङ्केतनिरूपणप्रकरणे—

विधृते तु पुनर्द्रव्ये षोडशेन्दुकला यजेत् ।
अमृतेशीं च तन्मध्ये भावयेच्च नवात्मना ॥
नवात्मना ततो देवि ! तर्पयेद्धातुदेवताः ।
आनन्दभैरवं वौषडन्तेनैव च तर्पयेत् ॥

व्याख्यातं चैतदमृतानन्दनाथेन—"षोडशेन्दुकला यजेदिति क्रमादकारादिषोडशस्वरादिका अमृतादिकाः षोडश कला यजेत् । तदुक्तं स्वच्छन्दसंग्रहे—

आदिकाद्यन्तिकाः सौम्याः कलाः षोडश कीर्तिताः ।
तासां नामानि वक्ष्यामि शृणु सर्वाङ्गसुन्दरि ॥
अमृता मानदा पूषा पुष्टिः प्रीतिर्महेश्वरि ।
रेवती ह्रीमती चैव श्रीः कान्तिश्च सुधा ततः ॥
ज्योत्स्ना हैमवती चैव छाया सम्पूरिता तथा ।
रामा श्यामा कलानां च नामान्येतानि वल्लभे ॥" इति ।

लौकिक्या लोकलोचनतर्पणहेतुभूतायाः सुधाप्रधानायाश्चन्द्रकलाया आश्रयो रुद्र इत्यपि पुराणाद्युक्तं न विस्मर्तव्यम् ॥ ७ ॥

साम्प्रतं सर्वात्मकं चित्तत्वं हार्दाकाशे बुद्ध्या परिच्छिद्य नमति—

योऽभवद् भवति यस्तथेतरो यो भविष्यति पृथक्क्रियो जनः ।
तत्र योऽधरमहन्तयैकया सन्तमस्मि हृदिरन्ध्र आनतः ॥८॥

यो जनोऽभवत् तथा तदितरो यो जनो भवति यश्च ताभ्यां पृथक्क्रियो भिन्नक्रियो भिन्नरूपो जनो भविष्यति। अत्र पृथक्क्रिय इत्यस्य योग्यतया पूर्वस्मिन् वाक्यद्वयेऽपि संबन्धः। तत्र एषु त्रिषु पुरुषेषु यः स्थितः, यत्र च एकयाऽहन्तयाऽहं स्वचित्तम् अधरम् अदधाम्, तं हृदिरन्ध्रे आकाशे सन्तं तत्राभिव्यक्तं पुरुषविशेषम् आनतः प्रणतः, अस्मि इति। अत्र परपुरुषस्य सर्वपुरुषैकत्वं हार्दाकाशे स्वाभेदेन ध्येयत्वं च सर्वागमसम्मतमुक्तम्। स्तुत्यदेवतायाश्च स्त्रीपुरुषोभयरूपत्वेनानुभयरूपत्वेन च पुंरूपतया ध्यात्वा प्रणतिः कृता इति ध्येयम्। अत्र च व्याख्यायां समागतानि पदानि पद्येऽदृष्टान्यध्याहारलभ्यानीति विज्ञेयम्। तत्राम्बायाः स्त्रीपुरुषोभयरूपत्वे मानम्—
"त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी" (४।३) इति श्वेताश्वतरोपनिषद् अनुभयरूपत्वे च—

न त्वमम्ब पुरुषश्च नाङ्गना चित्स्वरूपिणि न षण्डतापि ते।
नापि भर्तुरपि ते त्रिरूपता त्वां विना तदपि न स्फुरेत् त्रयम्॥ इति॥८॥

इदानीं विश्वकल्पनाधिष्ठानभूते स्वयं सद्रूपे स्वकल्पितस्य विश्वस्य स्वीयरूपाभ्यां सत्तास्फूर्तिभ्यां पूरणात् पुरुषविशेषे ईश्वरे मनः प्रणिधानरूपः पातञ्जलो योगमार्गं आगमानुयायिभिरप्यादर्तव्य इत्येतद्वक्तुं पतञ्जल्यादीन् योगशास्त्रप्रवर्तकान् क्रियामुखेन स्तुत्या उपास्ते—

**विश्वसद्मनि सदात्मनीश्वरे पूरणात् पुरुषतामुपेयुषि।**
**ये मनः प्रणिदधुर्महर्षयस्तान् पतञ्जलिमुखानुपास्महे॥९॥**

ये महर्षयो विश्वसद्मनि सद्रूपे विश्वस्य पूरणात् पुरुषतामुपेयुषि ईश्वरे विषयेभ्यो व्यावर्त्य मनः प्रणिदधुस्तान् पतञ्जलिमुखानुपास्महे इति योजना। तथा च "पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते", "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्", "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्याद्याः श्रुतयोऽत्र प्रमाणम्॥ ९॥

अथेदानीं खेचरीप्रभृतिशक्तीनां व्योमात्मकहकाररूपे विमर्शशक्तिरूपत्वमकारस्य च प्रकाशात्मकशम्भुरूपत्वं तदेवमहमित्यस्य पूर्णाहन्तारूपस्य शिवशक्तिसामरस्यरूपत्वं तस्यावभासया च विश्वस्यानुभासनमागमसिद्धान्तसिद्धमनुवदन् शक्तिरूपां स्वाभीष्टदेवतां प्राधान्येन परामृशति—

**खेचरीमुखमरीचिजालकं**
**व्योमशक्तितनु संश्रये सदा।**
**शम्भुदक्षतनुजावभासया**
**यत्र विश्वमनुकर्तुमीहते॥१०॥**

अत्र पद्ये चतुर्थपादे यत्रेतिदर्शनेन पूर्वार्धरूपे पूर्ववाक्ये तदित्यध्याहार्यम्। एवं च तद् व्योमशक्तितनु व्योमात्मको हकार एव विमर्शशक्तिस्तनुः स्वरूपं यस्य तत्तथाभूतम्। खेचरीमुखमरीचिजालकं खेचर्यादिशक्तिसमूहम्। अहं सदा संश्रये। यत्र प्रागुक्तशक्तिसमूहे शम्भुदक्षतनुजावभासया शिवशक्त्योरवभासेन। अत्रावभासापदे "गुरोश्च हलः" इत्यप्रत्ययान्ताट्टाप्। विश्वमनुकर्तुमवभासितुमीहते वाञ्छति। अचेतनेऽपि विश्वस्मिन् चिच्छक्तिसम्बन्धात् चेतनवदुपचारः, यथा नद्याः कूलं पिपतिषतीति। यद्वा "कृभ्वस्तयः क्रियासामान्यवचनाः" इति अनुकर्तुमित्यत्र भासनं कृधात्वर्थ इति योजना। शक्तयश्चतस्रः, खेचरीगोचरीदिक्चरीभूचरीभेदात्। तासामंशरूपा मरीचयस्तु अनन्ताः। तदुक्तं योगिनीहृदये मन्त्रसङ्केतभेदनिरूपणे—

पारम्पर्यविहीना ये ज्ञानमात्रेण गर्विताः।
तेषां समयलोपेन विकुर्वन्ति मरीचयः॥ इति।

अत्र व्याख्यायां सर्वरहस्यार्थनिरूपणे समुद्धृतं प्रामाणिकमिदं वचनम्—

सर्वपीठनिवासिन्यः सर्वगाश्चिन्मरीचयः।
भैरव्यो भरिताकारा रक्षन्तु कुलमातरः॥ इति।

तत्र पशुभूमिकायां खेचरीप्रमातृरूपेण, गोचरी अन्तःकरणरूपेण, दिक्चरी बाह्यकरणचक्षुरादिरूपेण, भूचरी विषयरूपेण परिस्फुरन्ती चितिरेव। पतिभूमिकायां तु सर्वकर्तृत्वादिशक्त्यात्मकचिद्गगनचरीत्वेन परिस्फुरन्ती चितिरेव खेचरी, चिदचिद्भेदनिश्चयात्मना परिस्फुरन्ती सैव गोचरी, अभेदालोचनात्मना परिस्फुरन्ती दिक्चरी, विश्वं स्वाङ्गकल्पवदभेदेन गोचरयन्ती चितिरेव भूचरी (प्रत्यभिज्ञाहृदये १२)। हकारस्य व्योमरूपत्वं च कार्यकारणभावप्रयुक्ताभेदेन। तदुक्तं योगिनीहृदये सम्प्रदायार्थनिरूपणप्रकरणे—"हकाराद् व्योम सम्भूतम्" इति। (२।२९)। हकारस्यान्त्यकलारूपस्य विमर्शशक्तिरूपत्वम्, प्रकाशरूपस्याकारस्य शिवरूपत्वं च सङ्केतपद्धतावुक्तम्। तद्यथा—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः॥ इति।

एतच्च योगिनीहृदयदीपिकायामुद्धृतम्। शिवशक्त्योरवभासेन विश्वावभासनं च योगिनीहृदये नवचक्रनिरूपणप्रकरणे प्रोक्तम्—

शिवशक्तिसमाश्लेषस्फुरद्व्योमान्तरे पुनः।
प्रकाशयति बिम्बं सा सूक्ष्मरूपस्थितं सदा॥ (१।७९) इति॥ १०॥

अथाधुना सृज्यमानपरस्परविलक्षणसकलभावगर्भया शक्त्या दर्शितं शिवतत्त्वं तादृशशक्तिसंबन्धात् सखण्डम्, स्फुरद्विपूर्णसत्तारूपेण नु केवलेन अखण्डम्, तदेव च शक्तितत्त्वमपि, शक्तेः शिवानतिरेकात्। सा च शक्तिः स्रष्टृत्वेन भासकत्वेन च अखिल-

तत्त्वानां नायिका इति आगमसिद्धान्तं सूचयन् स्वाभीष्ट देवतामम्बिकां प्रणमति—

**खण्डसत्प्रसरगर्भया यया लक्षितं स्फुरद्विपूर्णसत्तया ।**
**तत्त्वमैश्वरमखण्डमम्बिकां त्वां प्रणौम्यखिलतत्त्वनायिकाम् ॥११॥**

खण्डाः परस्परं भिन्ना दिग्देशकालवस्तुपरिच्छिन्ना ये सन्तो भावाः, ते गर्भभूता यस्यां सा तथोक्ता, तया तथाभूतया। यया शक्त्या उपाधिभूतया, लक्षितं ज्ञापितम् ऐश्वरं तत्त्वं सखण्डम् । स्फुरन्ती स्वयं प्रकाशसंविद्रूपा जगति विशेषेण पूर्णा सत्ता तया तेन रूपेण यद् अखण्डम् ऐश्वरं तत्त्वं सद्रूपामखिलतत्त्वानाम् उपादानत्वेन भासकत्वेन च नायिकामन्तर्यामितया प्रेरयित्रीम् अम्बिकाम् एतदाख्यां शक्तिं त्वां प्रणौमि, इति योजना । अत्रागमशास्त्रे तत्त्वानि च शिवशक्तिसदाशिवेश्वरशुद्धविद्यामायाकलाविद्यारागकालनियतिरूपाणि एकादश, शेषाणि तु सांख्यसम्मतानि पञ्चविंशतिः । शक्तयस्तु यद्यपि चतस्रः प्रधानीभूताः—अम्बिका, रौद्री, ज्येष्ठा, वामा चेति, तथापि तासु अम्बिका तत्त्वातीता तत्त्वानां नेत्री, शेषास्तु तिस्रस्तत्त्वानुगताः । अम्बिकाशक्तिलक्षणं च—

आत्मनः स्फुरणं पश्येद्यदा सा परमाकला ।

अम्बिकारूपमापन्ना परावाक् समुदीरिता ॥ ( १।३२ )

इति योगिनीहृदयये नवचक्रनिरूपणप्रकरणे ॥ ११ ॥

साम्प्रतं सत्त्वरजस्तमोगुणात्मकत्वेऽपि सत्त्वप्रधानामीश्वरशक्तिं कालीमाधिभौतिकेश्वराधिष्ठितकैलाससाम्येन आध्यात्मिककैलासरूपतया वर्णयन् स्तौति—

**यः किलास स किलास ईश्वरः**
**ख्यातसत्त्वलुलितोर्ध्वमूर्धनि ।**
**प्रत्यहं जननि यत्र तिष्ठति**
**त्वं स सत्त्ववपुरद्रिरस्य यः ॥१२॥**

यः ईश्वरो जगत्सर्गात्प्राग् एकोऽद्वितीय एव आस आसीत् किल । किलेति श्रुत्यादिप्रसिद्धौ । स ईश्वरः किलासः किलासपदवाच्यः । तथा च किलासस्यायं निवासः कैलास इति लोके कैलासपदप्रसिद्धिः । हे जननि ! यत्र यस्मिन् शक्तिरूपस्य कैलासस्य ख्यातसत्त्वलुलितोर्ध्वमूर्धनि ख्यातं शक्तिरूपे तत्त्वे शास्त्रप्रसिद्धं यत्प्रधानीभूतं हिमस्थानापन्नं शुभ्रं सत्त्वं तेन लुलितो विच्छुरितो व्याप्तो यः सत्त्वप्राधान्येन ऊर्ध्व उन्नतः मूर्धा शृङ्गं तस्मिन् प्रत्यहं नित्यं तिष्ठति स ईश्वराधिष्ठितः सत्त्ववपुः सत्त्वप्रधानस्त्वमेव अस्य ईश्वरस्य यः अद्रिः कैलासाख्यपर्वतः, तद्रूपा इत्यर्थः ।

योऽस्य अद्रिः, स सत्त्ववपुस्त्वमेवेति योजना। ईश्वरशक्तेस्त्रिगुणात्मकत्वे ईश्वराधिष्ठितत्वे सत्त्वप्रधानत्वे च इमानि वचनानि—"ज्ञानं वैराग्यमैश्वर्यं तपस्सत्यं क्षमा धृतिः। स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च॥ अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे॥" (श्रीकण्ठभाष्ये पृष्ठसं० ३४५; अ० १ पाद० २ सूत्र० ९)

"दैवी ह्येषा गुणमयी" गीता,
"अजामेकां लोहितशुक्लकृष्णाम्" श्रुतिः,
"मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्" गीता,
"प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया" गीता,
"सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते" पञ्चदशी॥ १२॥

साम्प्रतं यत्सद् ब्रह्म अकल्पितमतीन्द्रियं बाह्यदृश्यप्रपञ्चसंबन्धशून्यत्वासङ्गत्वश्रवणात् सत्त्वासत्त्वरूपधर्मशून्यत्वेऽपि सद्रूपत्वेन भावाभावयोर्मध्यगतं सर्वोपाधिराहित्येन निराकारं च तद्रूपां कालीं प्रणत्याऽनुकूलयति—

कल्पनातिगमतीन्द्रियं च य-
ल्लक्ष्यमुज्झति बहिर्मुखं तथा।
अन्तरालगमभावभावयो-
स्तन्नतोऽस्मि सदहं निराकृति॥१३॥

परमशिवस्य शक्तिकार्यत्वाभावेन कल्पनातिगत्वम्, शब्दस्पर्शरूपरसगन्धवत्त्वाभावेन तद्रूपत्वाभावेन सुखदुःखादिरूपत्वाभावेन च इन्द्रियागोचरत्वम्, बाह्यदृश्यप्रपञ्चसंबन्धशून्यत्वं च "असङ्गो नहि सज्जते", "स एष आदेशो नेति नेति" इत्यादिश्रुतिसिद्धम्। भावाभावयोरन्तरालगतत्वं च निर्धर्मकत्वेन सत्त्वासत्त्वरूपधर्मशून्यत्वेऽपि सद्रूपत्वेन। निराकारत्वं चोपाधिकृतपरिच्छेदराहित्येन। उपाधिकृतपरिच्छेदराहित्ये प्रमाणं च—"सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतावनन्तपदस्य सर्वविधपरिच्छेदराहित्यार्थकत्वेनेति ध्येयम्॥ १३॥

अथ "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्, तदैक्षत बहु स्यां प्रजायेय, तदिदं सर्वमसृजत, यदिदं किञ्च, तत्सत्यं स आत्मा, तत्त्वमसि श्वेतकेतो" इत्यादिश्रुतिप्रसिद्धं ब्रह्मणस्तत्तत्कार्यात्मना भवने स्वातन्त्र्यं सर्गादौ अद्वयत्वं सत्यत्वं च "तद्विष्णोः परमं पदं परिपश्यन्ति सूरयः" इति श्रुतिप्रसिद्धं शक्तिशक्तिमतोरभेदेन शक्तिपदरूपत्वं च वर्णयन् ध्यानेन तत्सेवां प्रतिजानीते—

अम्ब यद्भवति तत्तदात्मना
स्वैरितामजहदद्वयोदयम्।

तावकं पदमपाकृतक्रमं
ब्रह्म तत्सदिति वा श्रुतं भजे ॥१४॥

हे अम्ब ! निजां स्वैरितां स्वातन्त्र्यशक्तिम्, अजहत् अत्यजत्, अद्वयोदयम् अद्वयं द्वयाभाव उदये सर्गादौ यत्र तथाभूतम्, यत् तत्तदात्मना चराचरजगद्रूपेण भवति, तद् अपाकृतक्रमम् अपाकृतो निरस्तः क्रमः पौर्वापर्यरूपः सर्गादिक्रमो वा यत्र तथाभूतम्। तावकं पदं धाम। सदिति श्रुतम् तत्सत्यमिति श्रुत्या सत्यत्वेन प्रसिद्धं ब्रह्म वा ब्रह्मैव। अत्र वाशब्द एवकारार्थः। तथा च कोशः—"वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये" इति। अहं भजे ध्यानयोगेन समाविशामि ॥ १४ ॥

अथाधुना शिवस्य देशकालाभ्यामपरिच्छिन्नस्य तत्तदात्मना बहूनि रूपाणि आश्रयता या देशकालाभ्यां विशेषतो दिनपक्षमासादिभेदेन काशीप्रयागादिदेशभेदेन च कलना शास्त्रविहिता शास्त्रेषु निगद्यते तज्जातिव्यक्तिभेदेन भिन्ने जगति संश्रितक्रमं लोकानां जन्मस्थितिहेतुत्वेन हितं तव बहिर्विजृम्भणं शिवस्वरूपाद् बहिर्व्यापार इत्यागमोक्तशक्तिप्रकर्षस्तुतिमुखेन महाकालीं स्तौति—

देशकालकलना विशेषतो
यद् भवानि विहितं निगद्यते।
व्यक्तिजातितनुसंश्रितक्रमं
तद्धितं तव बहिर्विजृम्भणम् ॥१५॥

हे भवानि ! शिवस्य सर्वथाऽपरिच्छेद्यस्य चराचरजगद्रूपाकारपरिग्रहेण विशेषतो देशकालाभ्यां कलनं यत् शास्त्रविहितं शिष्टैर्निगद्यते तद् व्यक्तिजातितनुसंश्रितक्रमं व्यक्तिजातितन्वोर्व्यक्तिजातिस्वरूपयोः संश्रितः पौर्वापर्यरूपः क्रमो यस्य तत् तथाभूतम्। लोकानां जन्मस्थितिहेतुत्वेन हितं तव शिवस्वरूपाद् बहिर्विजृम्भणं व्यापारविशेष इति योजना। कलनास्वरूपं च द्वादशधा विभक्तं श्रीतन्त्रालोके चतुर्थाह्निके श्लोकचतुष्टयेनोक्तम् तद्यथा—

क्षेपो ज्ञानं च संख्यानं गतिर्नाद इति क्रमात् ॥ १७३ ॥
स्वात्मनो भेदनं क्षेपो भेदितस्याविकल्पनम्।
ज्ञानं विकल्पः संख्यानमन्यतो व्यतिभेदनात् ॥ १७४ ॥
गतिः स्वरूपारोहित्वं प्रतिबिम्बवदेव यत्।
नादः स्वात्मपरामर्शशेषता तद्विलोपनात् ॥ १७५ ॥
इति पञ्चविधामेनां कलनां कुर्वती परा
देवी काली तथा कालकर्षिणी चेति कथ्यते ॥ १७६ ॥

इमाश्च कलना विजृम्भापदेनोच्यन्ते। तदुक्तं तत्रैव—

इमाः प्रागुक्तकलनास्तद्विजृम्भोच्यते यतः ॥ १७२ ॥ इति।

विजृम्भा च द्वादशभेदेति तत्र श्रीतन्त्रालोके चतुर्थाह्निके टीकायां श्रीजयरथेन समुद्धृतं क्वाचित्कं वाक्यम् । तद्यथा—

एकं स्वरूपरूपं प्रसरस्थितिविलयभेदतस्त्रिविधम् ।
प्रत्येकमुदयसंस्थितिलयविश्रमतश्चतुर्विधं तदपि ॥
इति वसुपञ्चकसंख्यं विधाय सहजस्वरूपमात्मीयम् ।
विश्वविवर्तावर्तप्रवर्तकं जयति ते रूपम् इति ॥ १५ ॥

अथेदानीं प्रकृतेस्त्रिगुणात्मकत्वेऽपि सत्त्वगुणस्य विहितकर्मानुष्ठानहेतो विहित-कर्मानुष्ठानसम्प्रापितदयोदयहेतोश्च कालिकाशक्तिवपूरूपत्वं तमसश्च निषिध्यमान-कर्महेतोस्तेन रूपेण निषिध्यमानत्वं रजसश्च यथायथं सदसद्रूपाभ्यां सत्त्वतमोभ्यां भिन्नरूपस्य सत्त्वतमोद्वयरूपत्वं च प्रदर्शयितुकामः सत्त्ववपुष्ट्वेन निरतिशयदयोदयवतीं महाकालिकां वस्तुवृत्तमालम्ब्य स्तौति—

**सत्त्वमम्ब ! विहितस्य वस्तुन-**
**स्तत्प्रसादितदयोदयं वपुः ।**
**स्यात् तमश्च यदिदं निषिद्धयते**
**द्वे रजो सदसदन्यरूपतः ॥१६॥**

हे अम्ब ! विहितस्य श्रुतिस्मृतिविहितस्य यागहोमदानादिकर्मरूपस्य वस्तुनो हेतुभूतं तत्प्रसादितदयोदयं तेन विहितेन कर्मणा प्रसादिता प्रापिता उपस्थापिता या दया तस्या उदयो यस्मात् तत्तथाभूतम् । सत्त्वं विशुद्धसत्त्वप्रधानं तव वपुः । यच्चेदं ब्रह्महत्यासुरापानादिकं श्रुतिस्मृतिभ्यां निषिद्धयते तत्तु तेन रूपेण तमः स्यात् । एते सत्त्वतमसी द्वे मिलिते रजः, तस्य सदसद्रूपाभ्यां सत्त्वतमोभ्यामन्यरूपत्वात् श्री । अत्राम्बाया विशुद्धसत्त्वविग्रहवत्त्वम् तथैवोक्तं भागवते—

सत्त्वं विशुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेय उपायनं वपुः ।
वेदक्रियायोगतपःसमाधिभिस्तवार्हणं येन जनः समीहते ॥ (१०।२।३४)
सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः । (४।३।२३)

इति पद्याभ्याम् ॥ १६ ॥

अथेदानीं रजस्तमोभ्यामस्पृष्टं विशुद्धं सत्त्वं परामबायाः वपुः, तत्समुत्थं च यद् गुणत्रयं तत्र तमः स्वविकारभूतायाः क्षितेः स्वस्मादुद्भूतायाः कारणात्मनाऽन्यद् वपुः, सत्त्वमपि च स्वविकारभूतस्य तेजसः कारणात्मनाऽन्यद् वपुः, तयोः सत्त्वतमसो-र्मिश्रणोत्थं रजः । इतरेषां भूतानां स्वविकाराणां वाय्वाकाशजलानां यथाक्रमं स्पर्श-शब्दरसाश्रयाणां कारणात्मनाऽन्यद् वपुः । तत्र वायो रजःकार्यत्वं क्रियाशीलत्वेन राग-जनकस्पर्शाश्रयत्वेन च । आकाशस्य तु रागजनकशब्दगुणवत्त्वेन । जलस्य तु रागजनक-

मधुरादिरसाश्रयत्वेन च। क्षितेस्तमःकार्यत्वं च जाड्यकाठिन्याभ्याम्, तेजसः सत्त्वं-कार्यत्वं च प्रकाशलाघवाभ्यामित्यत एवंक्रमेण हे शिवे! त्वदीयविशुद्धसत्त्वसमुत्थं भूतानां भौतिकानां चाशेषाणां कारणीभूतं गुणत्रयमिति सांख्यमतानुगतमागममतं मनसिकृत्य कार्यकारणगुणोपन्यासमुखेन पराम्बां स्तौति—

**यत् तमोऽन्यदिह तत् क्षितेर्वपुः**
**सत्त्वमन्यदिह तेजसः शिवे।**
**मिश्रणोत्थमितरद्रजस्तयो-**
**स्त्वत्कमत्त्वजमतो गुणत्रयम् ॥ १७ ॥**

इदं पद्यमवतरणिकायामेव व्याख्यातप्रायमिति पिष्टपेषणप्रसङ्गभयेन न व्याख्यायते ॥ १७ ॥

अथाधुना ईश्वरशक्तिरूपाया अम्बिकाया ईश्वरस्य यदक्षयमैश्वर्यं तन्निदान-त्वेन तद्रूपत्वम्, यच्चेश्वरस्य त्रैकालिकवस्तुविषयकविशुद्धविज्ञानरूपं फलं यदपि चास्य सृष्टिस्थितिसंहाररूपं निग्रहानुग्रहरूपं वा कर्म ते उभे अपि ईश्वरशक्तेर्विरागप्रचुरायाः पूर्णतायाः फले, नहीश्वरस्यासङ्गस्याक्रियस्य केवलसंविद्रूपस्य नित्यशक्तिसंबन्धं विना-ऽक्षयमैश्वर्यं विशुद्धं विज्ञानं सृष्ट्यादिकर्म च संभवतीत्यागमसंमतार्थोपन्यासमुखेन अम्बिकां प्रणुवति—

**ईश्वरस्य तव भर्त्तुरक्षयै-**
**श्वर्यरूपमसि तत्त्वमम्बिके।**
**ज्ञानमस्य शुचि कर्म वा फलं**
**ते विरागमयपूर्णताफले ॥ १८ ॥**

हे अम्बिके! तव भर्त्तुः पत्युरीश्वरस्य यदक्षयैश्वर्यरूपं तत्त्वं तत् त्वमेवासि। यच्चास्य ईश्वरस्य शुचि विशुद्धं ज्ञानं सृष्ट्यादिरूपं कर्म वा, वाशब्दश्चार्थे, फलं ते उभे अपि ते तव विरागमयपूर्णताफले विरागप्रचुरायाः पूर्णताया ईश्वरे पूर्णतायाः फले कार्ये इति योजना। अत्र विरागमयशब्दे प्राचुर्यार्थे मयट्। शक्तेः पूर्णताया विरागविकारत्वा-संभवादित्यर्थः ॥ १८ ॥

द्वादशेन पद्येन सप्तदशस्य चतुर्थपादेन च कालिकाशक्तेर्विशुद्धसत्त्वरूपत्वमुप-वर्णितम्, इदानीं तु तस्या एव सत्त्वतमःसंवलितं रूपान्तरमुपवर्णयति—

**ज्योतिरम्ब हृदि विद्ययेक्षितं**
**यल्लघु प्रसृतमर्घमण्डपे।**
**धूमलक्ष्मगुरु यच्च तच्च्युतं**
**ते तु सत्त्वतमसी वपुस्तव ॥ १९ ॥**

हे अम्ब ! भक्तानां हृदि ध्याते तव अर्धमण्डपे निवासमण्डपे, विद्यया तन्त्रागमजन्यज्ञानेन ईक्षितं दृष्टं यल्लघु प्रसृतं विसृत्वरं ज्योतिः सत्त्वरूपम्, यच्च तच्युतम् तस्माज्ज्योतिषो निर्गतम्, धूमलक्ष्म धूमाकारम्, गुरु गौरवयुक्तं च तमः, ते तु सत्त्वतमसी तव वपुः स्त इति योजना। सत्त्वतमसोर्लक्षणं तु "सत्त्वं लघु प्रकाशकम्", "गुरु वरणकमेव तमः" इत्यादिसांख्यकारिकायां स्पष्टं तत एवावधार्यम् ॥ १९ ॥

अथ साम्प्रतं शिवसंकल्पमनुसृत्य सृष्टिसंहारयोर्व्याप्रियमाणा चण्डिकाशक्तिर्जायमानं जगदवलोक्य सप्रकाशं तत् स्वात्मनि मज्जयन्ती तत्पूर्णतया पूर्णिमा भवति। स्वात्मनि पूर्णं च तद्रूपं बहिः कुर्वती सप्रकाशजगद्रहितत्वेन सादृश्येन कुहूर्भवति। यथा सांख्ययोगपथयोः परस्परं भिन्नयोरपि देशिकद्वयं समाधौ जातसंमतिकं स्वसमाधौ सप्रकाशं जगत् स्वात्मनि मज्जयत् पूर्णं भवति, व्युत्थाने बहिः कुर्वच्च रिक्तं भवतीति समाधौ व्युत्थाने च विद्वदनुभवसिद्धसृष्टिसंहारदृष्टान्तोपन्यासेन प्राकृतौ सर्गसंहारौ प्रसाधयन् तत्कर्तृत्वेन माहात्म्यमुद्भाव्य चण्डिकाशक्तिं स्तौति द्वाभ्याम्—

> त्वं हि रुद्रजकटाक्षवर्तिनी
> जायमानमवलोक्य चण्डिके।
> सांख्ययोगपथदेशिकद्वयं
> जातसंमतिसमाधिकं यथा ॥ २० ॥
>
> सप्रकाशकृतमज्जनं जगत्
> कुर्वती भवसि पूर्णिमा शिवे।
> पूर्णमेव तव रूपमन्यथा-
> कुर्वती किल कुहूः प्रतीयसे ॥ २१ ॥

हे चण्डिके ! रुद्रजकटाक्षवर्तिनी रुद्रजः कटाक्षः शिवस्य त्वत्प्रेरणात्मकः संकल्पः, तेन वर्तिनी सर्गादिव्यापारं कुर्वती। अत्र शिवस्य संकल्पे सर्गादौ शक्तिप्रेरकत्वेन कटाक्षत्वारोपः। एवंभूता त्वं जायमानं जगदवलोक्य जातसंमतिसमाधिकं सिद्धान्तभेदेऽपि जाता संमतिः समाधौ यस्य तत्तथाभूतम्, सांख्ययोगपथदेशिकद्वयं सांख्ययोगपथयोर्देशिकद्वयम् आचार्यद्वयम्। यथा इव। सप्रकाशकृतमज्जनं प्रकाशेनालोकेन सहितं सप्रकाशं कृतं मज्जनं स्वात्मनि प्रविलापनं यस्य तत्तथाभूतं जगत् कुर्वती त्वं हे शिवे ! पूर्णिमा जगत्पूर्णत्वाद् भवसि हि। अत्र हिशब्दः प्रसिद्धौ। किञ्च प्रागुक्तरीत्या पूर्णमेव तव रूपं सर्गसंपादनेनान्यथाकुर्वती रिक्तं कुर्वती तमोमात्रस्वरूपा सप्रकाशजगद्रहिता त्वमनेनैव सादृश्येन कुहूरमा विद्वद्भिः प्रतीयसे किल। किलेति प्रसिद्धौ निपात इति योजना ॥ २०–२१ ॥

अथ साम्प्रतं प्रलयसर्गयोर्यदन्तरं सन्धिकालस्तत्र वस्तूनां स्रक्ष्यमाणानां प्रलेष्य-माणानां वा कालक्रमो नास्ति । तत्र तादृशेषु वस्तुषु क्रमविभागं दिदर्शयिषन्तं ब्रह्मणो दिवसस्याद्यतनं कालं काली शक्तिरूपाऽत्तुं प्रयतत इति न तत्र कालकृतो वस्तुषु क्रम इति शाक्तागमपरमसिद्धान्तोपन्यासमुखेन कालीं तदवदानेन स्तौति—

**पूर्णताकृशतयोर्यदन्तरं**
**तत्र कालि विजहत्क्रमे स्थिता ।**
**दर्शितक्रमविभागसंभ्रमं**
**कालमद्यतनमत्तुमीहसे ॥ २२ ॥**

इति आदि(सूत्र)विमर्शः ॥

हे कालि ! पूर्णताकृशतयोः पूर्णतारिक्ततयोः, प्रलयसर्गयोरिति यावत् । यदन्तरं सन्धिकालः, तत्र विजहत्क्रमे तं कालं विजहद् वस्तूनां क्रमो यत्र तस्मिन् तथाभूते काले स्थिता त्वं दर्शितक्रमविभागसंभ्रमं दर्शितो वस्तूनां क्रमविभागविषयकः संभ्रमस्त्वरावान् प्रयत्नो येन तं तथाभूतम्, ब्रह्मणो दिवसस्याद्यतनं कालमत्तुं ग्रसितुम्, ईहसे, प्रयतसे । तत्र ब्रह्मणो दिवसरूपः कालविभागो नास्तीति भावः । एतदेव शक्ति-गतमत्तृत्वं ब्रह्मण्यारोप्य "अत्ता चराचरग्रहणात्" इति भिक्षुसूत्रं प्रवृत्तमिति ध्येयम् ॥ २२ ॥

अथेदानीं मातृमेयमितिमानात्मिका सर्वाऽपि विकल्परूपा मिथ्याबुद्धिश्चिति-शक्तिकृता तां मातृमेयादिसमारोपेण कलुषयन्ती उन्मिषति, तया विकल्पधियाऽ-कलुषीकृतं तु चितिशक्तिस्वरूपं स्वात्मत्वेन ज्ञातवतः पुरुषस्य मोक्षः इतीमं तन्त्रागम-संमतमर्थमुपन्यस्यन् चितिशक्तिरूपामम्बां स्तौति—

**मातृमेयमितिसाधनात्मिका**
**त्वत्कृतोन्मिषति या विकल्पधीः ।**
**त्वत्स्वरूपमकलङ्कितं तया**
**कस्य देवि विदुषो न मुक्तता ॥ २३ ॥**

हे देवि ! मातृमेयमितिसाधनात्मिका या त्वत्कृता विकल्पधीर् उन्मिषति, तयाऽकलङ्कितं त्वत्स्वरूपं स्वात्मत्वेन विदुषो जानतः कस्य पुरुषस्य न मुक्तताऽपि तु सर्वस्यापीति योजना । यद्यपि सर्वत्राऽपि ज्ञाने प्रमाता प्रमितिः प्रमेयमिति त्रिपुटी भासते, प्रमाणं तु न भासते, तथापि प्रमातृप्रमेयप्रमाप्रमाणमिति चतुष्टयात्मिका सर्वाऽपि विकल्पधीः, चितिशक्तिस्तु निर्विकल्पेति हृदयम् ॥ २३ ॥

अथ साम्प्रतं क्रमवत्त्वात् क्रमः सर्गः क्रमसंहारवत्त्वाच्च अक्रमः प्रलयः, तौ च दृष्टिसृष्टिवादानुसरेण विमर्शात्मकावेव, तयोश्च अधिष्ठानत्वात् परा प्रकृतिः शक्ति-

रूपा क्रमाक्रममयी, तस्याश्च शिवोपाधित्वेन तन्मध्यगः शिवः, यथा घटादिमध्यगमाकाशमिति। तं च निमित्तकारणत्वेनावेक्ष्य, आश्रित्येति यावत्, स्वयमुपादानकारणरूपा शक्तिः कालभेदेन क्रममक्रमं च सृजति विदधाति। तां च शक्तिं निमित्तत्वेनावेक्ष्य तस्या आननं स्वानुरूपकार्यकरणाय इतरगुणौ अभिभूय प्राधान्येन उद्रिक्तं गुणरूपं कर्तृ इदं मातृमेयमितिमानरूपैः सदवस्थितं कुलं विश्वं सृजतीति तन्त्रागमसिद्धान्तमनुवदन् माहात्म्यप्रख्यापनेन शक्तिं स्तौति—

**अक्रमक्रमविमर्शलक्षणं**
**या क्रमाक्रममयी क्रमाक्रमम्।**
**अक्रमं शिवमवेक्ष्य मध्यगं**
**त्वां च सत्कुलमिदं तवाननम्॥ २४॥**

या क्रमाक्रममयी पराशक्तिर् अक्रमक्रमविमर्शलक्षणं क्रमाक्रमम् अक्रमं स्वमध्यगं शिवं निमित्तत्वेनावेक्ष्य सृजति तां त्वामवेक्ष्य च तवाननमिदं मातृमेयमितिमानरूपैः सत्कुलं सृजतीति योजना। अत्राननशब्दस्य उद्रिक्ते गुणे प्राधान्येन आननत्वोपचारात् प्रयोगः॥ २४॥

साम्प्रतं शिवतत्त्वमेव संविद्रूपमेकं वेदकम्, तस्यैव तु अनादिभावरूपया मायया विवर्तभूतानि कल्पितानि वेद्यानि, एवं वेद्यवेदकयोर्वस्तुगत्या ऐक्यमिति वेद्यवेदकविभेदकल्पनादक्षया मायया देशकालगतक्रमभेदेन क्रमवत्कार्यकरणसंघातोपहितत्वेन सर्वगस्यापि शिवस्य याऽणुता मयि स्थिता या च अन्यानपेक्षसर्वविभासकस्यापि शिवस्याणुभावे बहिरर्थप्रकाशने चक्षुरादीन्द्रियसापेक्षाऽणुता मयि स्थिता, तां सर्वगचितिशक्तिरूपस्वरूपस्य मयि मदभेदेन आविर्भावनया जहीति प्रार्थयते—

**वेद्यवेद्यकविभेददक्षया**
**मायया क्रमवदङ्गगामिनी।**
**या स्थिताम्ब बहिरक्षकाङ्क्षिणी**
**तां जहि त्वमणुतां मयि स्थिताम्॥ २५॥**

हे अम्ब! वेद्यवेदकविभेदकल्पनायां दक्षया मायया सम्पादिता या क्रमवदङ्गगामिनी देशकालकृतक्रमवत्कार्यकरणसंघातोपहिताऽणुता सर्वगतशिवरूपे मयि स्थिता, या च अन्यानपेक्षसर्वार्थविभासकशिवरूपे मयि बहिरर्थप्रकाशने अक्षकाङ्क्षिणी परिच्छिन्नत्वेन चक्षुरादिकरणसापेक्षा अणुता मयि स्थिता, तां व्यापकत्वरूपैश्वर्यस्य यत्किञ्चिद् देशव्यापकत्वरूपां सर्वार्थविभासकस्य मम परिच्छिन्नचक्षुरादिकरणसापेक्षरूपामित्युभयविधामपि मयि स्थितामणुतां सर्वगचितिशक्तिरूपस्वस्वरूपस्य मयि अभेदेन आविर्भावनया जहि इति योजना॥ २५॥

अथाधुना धर्माधर्मरूपं वासनात्मकं कर्म माया च जीवस्याणोः कर्तृत्वभोक्तृत्वरूपे संसारे हेतुः, परसंविद्रूपा या चितिशक्तिस्तदाकारायास्तत्त्वमस्यादिमहावाक्यजन्याया अखण्डधीवृत्तेस्तन्निवर्तकत्वमिति

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥

इति श्रुतिसिद्धमर्थं दृष्टान्तमुखेनोपवर्णयन् तादृशवृत्तिविषयीभूतां पराम्बां स्तौति—

**कर्म यद् विविधवासनात्मकं**
**मायया सह कृताणुभावया।**
**वृत्तिभिस्तव विलाप्यते हि तद्**
**देवि ! भानुरुचिभिर्यथा तमः॥ २६॥**

भिद्यते हृदयग्रन्थिरित्यत्र ग्रन्थिपदेनाविद्यारूपा माया गृह्यते। हे देवि ! कृताणुभावया कृतः सर्वगस्यात्मनोऽणुभावो यया सा तथाभूता तया, मायया सह यद् विविधवासनात्मकं धर्माधर्मरूपम्, कर्म यागादिकं हिंसादिकं च, अर्थानर्थहेतुः, तत् तव वृत्तिभिस्त्वदाकाराभिर्महावाक्यजन्याभिर्अखण्डवृत्तिभिस्त्वदनुध्यानजाभिर्वा, विलाप्यते विनाश्यते, हि इति शास्त्रप्रसिद्धं विद्वदनुभवसिद्धं च। यथाभानुरुचिभिः सूर्यकिरणैः, शार्वरं तमो विलाप्यते, तद्वदिति योजना॥ २६॥

अथ सर्मनन्तरपद्योक्तं मायया सह विविधवासनात्मकस्य कर्मणश्चितिशक्तिविषयकवृत्तिविलाप्यत्वं कथमिति इतिकर्त्तव्यताकाङ्क्षायां सप्तविंशेन पद्येन इतिकर्त्तव्यतामेव दर्शयति—

**चिन्मयीकृतमतोक्षदृश्यया**
**गुह्ययाऽम्ब विपरीतचर्यया।**
**लभ्यते समरसीकृताखिल-**
**द्वैतवृत्ति तव घस्मरं वपुः॥ २७॥**

हे अम्ब ! अतस्तव वृत्तिभिर्मायया सहितस्य कर्मणो विलाप्यत्वाद् अक्षदृश्यया चाक्षुषप्रत्यक्षगोचरया, गुह्यया फलापरिज्ञानाद् गुप्तया। विपरीतचर्यया लोकविपरीताचरणेन आगमग्रन्थेषु वाममार्गपदव्यपदेश्येन "न काञ्चन परिहरेत् तद्व्रतम्, तदेतद्वामदेवीयम्" (छान्दोग्य० २।१३ खण्डे) इति छान्दोग्यश्रुतिविहितेन, चिन्मयीकृतं केवलचिद्रूपतया ज्ञातम्, कृभ्वस्तयः क्रियासामान्यवचना इत्यभ्युपगमेन कृधातोरत्र ज्ञानमर्थः, समरसीकृताखिलद्वैतवृत्ति समरसीकृता शक्तिशिवयोः समरसत्वमापादिता तयोरेकीकृता अखिला द्वैतवृत्ति सर्वो द्वैतव्यापारो यस्मिन् तत्तथाभूतम्, घस्मरं स्वस्मिन् सर्वभावप्रविलापकम्, तव वपुः स्वरूपं लभ्यत इति योजना॥ २७॥

शास्त्रे चितिशक्तेर्विश्वोपादानभूताया रूपत्रयं निर्दिष्टम्—कार्यरूपम्, करणरूपम् परमकारणरूपं चेति । तत्र कार्यरूपस्थूलविग्रहोपेताः शक्तयो दुर्गाकालीताराबगलाप्रभृतयस्तत्कार्यार्थमवतीर्णाः । करणलक्षणास्तु सूक्ष्मशरीरोपहिताः स्वेच्छाविहारिण्यश्चिदाकाशसञ्क्रमा अतीन्द्रिया वाङ्मनसमात्रगोचराः । परमकारणरूपा तु वाङ्मनसयोरप्यगोचरा इति । तत्रापि कार्योपहिताः शक्तयो ब्रह्माण्डमध्यवर्तिन्यः । करणलक्षणास्तु ब्रह्माण्डादुपरि चिदाकाशे समवस्थिताः । परमकारणरूपास्तु तासामपि ऊर्ध्वगे पथि समवस्थिताः । तथाहि—करणलक्षणशक्तिसमाश्रयचिदाकाशादुपरि अण्डत्रयं वर्तते—प्रकृत्यण्डः, मायाण्डः, शक्त्यण्ड इति। एतच्च अण्डत्रयमूर्ध्वाधरभावेन समवस्थितम् । तत्र च कार्यकरणाभ्यामनुपहितैव शक्तिः प्रकृतिरूपेण, मायारूपेण, शक्तिरूपेण च यथायथं तिष्ठतीत्यागमशास्त्रसिद्धान्तं विवृण्वन् पराशक्तिं स्तौति—

> याश्चरन्ति तव खे चिदात्मके
> शक्तयः करणलक्षणाः शिवे ।
> मुक्तबाह्यपदजृम्भणोद्यमाः
> त्वं हि तिष्ठसि तदूर्ध्वगे पथि ॥ २८ ॥

हे शिवे ! यास्तव करणलक्षणाः सूक्ष्मशरीरोपहिताः शक्तयः, मुक्तबाह्यपदजृम्भणोद्यमाः मुक्तः त्यक्तः करणलक्षणशक्तिसमाश्रयचिदाकाशापेक्षया बाह्ये पदे ब्रह्माण्डान्तर्वर्तिनि जृम्भणस्य उल्लासस्य उद्यमः प्रयत्नो याभिस्तास्तथोक्ताः, चिदात्मके चिद्रूपे, खे आकाशे चरन्ति । तदूर्ध्वगे तासामपि ऊर्ध्वगे, पथि अण्डत्रये प्रकृतिमायाशक्तिरूपैस्त्वं तिष्ठसि हि । यद्वा अण्डत्रयादप्यूर्ध्वं परमशक्तिरूपेण त्वं तिष्ठसीति योजना । अत्र हिशब्दस्तन्त्रागमशास्त्रप्रसिद्धिं द्योतयति ॥ २८ ॥

अथ साम्प्रतम् "अकचटतपयाद्यैः सप्तभिर्वर्णवर्गैर्विरचितमुखबाहापादमध्याख्यहृत्का" इति रीत्या अकारादिवर्गसप्तकविरचितविग्रहा शारदा समस्तं पदवाक्यात्मकं वाङ्मयं सप्तधा वमन्ती वान्तया तया शब्दार्थोभयरूपया वाचा स्वाश्रितान् स्वभक्तान् तादृशवाक्प्रयोक्तॄन् परं शिवं शान्तमुखं चिद्व्योमात्मकं प्रापयति, न त्वपरं शिवम् । स्वयं तु सा शारदारूपा शक्तिर्वस्तुतोऽद्वयपदातिलङ्घिनी द्वैताद्वैतविवर्जिता। तदुक्तम्—"अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे। मम तत्त्वं न जानन्ति द्वैताद्वैतविवर्जितम् ॥" इत्येतमागमसिद्धान्तमुपन्यस्यन् महाकालीं शारदारूपतया स्तौति—

> सप्तधा वमसि या त्वमीश्वरि
> व्योमशान्तमुखचिद्गुणास्पदम् ।
> आश्रितान् नयसि नापरं शिव
> द्वन्द्वयाऽद्वयपदातिलङ्घिनी ॥ २९ ॥

हे ईश्वरि ! या त्वं वस्तुगत्याऽद्वयपदातिलङ्घिन्यपि द्वैताद्वैतविवर्जितापि अवर्गादियवर्गान्तवर्गसप्तकविग्रहा समस्तं वाङ्मयं सप्तधा वमसि, सा त्वं आश्रितान् स्वभक्तान् शान्तमुखं द्वैतक्षोभविवर्जितं चिद्गुणास्पदं—चिद्गुणाश्रयीभूतं व्योम अद्वयं परमशिवाख्यं द्वन्द्वया शब्दार्थोभयरूपया वाचा प्रयुक्तया संस्कृतया प्रयोक्तॄन् नयसि। अपरं शिवं न नयसीति योजना ॥ २९ ॥

अथेदानीं "परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता । हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥" इति चतुर्विधाया वाचोऽभिधेयत्वं महाकालिका शक्तेः, पराख्याया वाचश्च प्रमातृनिष्ठाया विमर्शविग्रहत्वं प्रतिपादयितुमाह—

या प्रमातरि निषेदुषी परा
प्रत्यगात्मनि विमर्शविग्रहा ।
वागियं त्रिविधभावभासिता
त्वां स वक्ति किमुताम्ब वैखरी ॥ ३० ॥

तत्र चतुर्विधासु वाक्षु परापश्यन्त्योर्विमर्शविग्रहयोः परशक्त्यवभासकरूपं तदभिधायकत्वम्, मध्यमावैखर्योस्तु वाच्यवाचकभावेन तदभिधायकत्वम् । मध्यमाया अपि स्फोटरूपाया वाच्यवाचकभावेन अभिधायकत्वादिति रीत्या परशक्तेः सर्वशब्दाभिधेयत्वम् । किञ्च, चिद्रूपायाः परशक्तेः सर्वकारणत्वेन सर्वात्मकत्वादपि सर्वशब्दाभिधेयत्वम् । परावाचो ज्ञानरूपत्वं तु—

"वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" इति,
"अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः ।
वृत्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ।" इति,
"ज्ञानस्य परिणामोऽयमित्याम्नायविदो विदुः"

इति च वाक्यपदीये उपपादितमिति ततो द्रष्टव्यम् ।

हे अम्ब ! या प्रत्यगात्मनि प्रमातरि निषेदुषी स्थिता, प्रमारूपविमर्शविग्रहा परावाग् इयं परापश्यन्तीमध्यमारूपैस्त्रिविधैर्भावैर्भासिता ज्ञाता सती त्वां चितिशक्तिरूपाम्, स वैखरीरूपः शब्दस्त्वां वक्तीति किमुत वक्तव्यम् । लोकेऽप्रसिद्धानामगृहीतसङ्केतानां परापश्यन्तीमध्यमारूपाणां वाच्यवाचकरूपसम्बन्धग्रहाभावेऽपि यदि त्वदभिधायकत्वम्, तदा किमुत वक्तव्यं लोके प्रसिद्धाया गृहीतसङ्केताया गृहीतवाच्यवाचकभावरूपसम्बन्धवत्या वैखर्या वाचस्त्वदभिधायकत्वमिति भावः ॥ ३० ॥

साम्प्रतं नादबिन्दुलिपिरूपैस्त्रिधा भिन्नानां गिरां सृष्टिस्थितिसंहृतिधामस्य ऊर्ध्वगविमर्शोद्भूतत्वेन ऊर्ध्वगविमर्शसागरशीकरत्वम्, सृष्टिस्थितिसंहृतिधामसु स्थितानां तासां तिसृणामपि गिरां विमर्शशक्त्यधःस्थितत्वं चार्थादायातं सुखप्रतिपत्तये शब्दतोऽनुवदन् ईशशक्तिं महाकालिकां स्तौति—

नादबिन्दुलिपिविग्रहा गिर-
स्तिस्र ऊर्ध्वगविमर्शशीकराः ।
संहृतिस्थितिविसृष्टिधामसु
व्याहृतास्त्वदध ईशवल्लभे ॥ ३१ ॥

तत्र बिन्दुनादयोः स्वरूपं प्रपञ्चसारे प्रथमे पटले—

सा तत्त्वसंज्ञा चिन्मात्रा ज्योतिषः सन्निधेस्तदा ।
विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम् ॥ ४१ ॥
कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा ।
स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते ॥ ४२ ॥
स बिन्दुनादबीजत्वभेदेन च निगद्यते ।
तद्विस्तारप्रकारोऽयं यथा वक्ष्यामि साम्प्रतम् ॥ ४३ ॥

एतदुक्तं भवति—ज्योतीरूपपरशिवसन्निधानाच्चिन्मात्रा शक्तिरूपा प्रकृतिर्विकृता घनीभूता बिन्दुः । बिन्दोश्च बिन्दुनादबीजभेदेन कालभेदेन अवस्थाभेदेन च रूपत्रयम् । तत्र बिन्दुरीश्वरः, नादश्चिन्मात्रशक्तेश्चिन्मिश्रं रूपं पुरुषाख्यम् । बीजमचिदंशो भूतवर्ग इति ।

शारदातिलके प्रथमे पटले तु—

सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः ॥ ७ ॥
परशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः ।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः ॥ ८ ॥ इत्युक्तम् ।

तत्रायं क्रमः—सकलात् परमेश्वरात् शक्तिः, शक्तेर्नादः, नादाद्बिन्दुः, बिन्दोश्च तस्माद् बिन्दुर्नादो बीजमिति त्रयम् । तत्र प्रथमस्य बिन्दोर्नादबिन्दुबीजरूपाणि त्रीणि कार्याणीति । तत्र प्रथमस्य बिन्दोः कारणे यद्यपि पूर्वोक्तग्रन्थद्वये मतभेदः तथापि कार्ये नादबिन्दुबीजरूपे मतैक्यमेव । यद्यप्यत्र 'नादबिन्दुलिपिविग्रहा' इत्युक्तम् बीजं तु नोक्तमत्रेति प्रतिभाति, तथाप्यत्र लिपिपदेन वर्णमालारूपाणि अक्षराणि अभिप्रेतानि । भूतवर्गस्य जडस्य बीजपदाभिधेयस्य जडस्य मातृकाकार्यत्वेनात्र लिपिपदेनाभिधानम्, कार्यकारणयोस्तादात्म्याभ्युपगमात् । इदमत्रापरमवधेयम्—'नादबिन्दुलिपिविग्रहा' इत्यत्र येन क्रमेण त्रयाणामुपन्यासस्तेनैव क्रमेण 'संहृतिस्थितिविसृष्टिधामसु' इत्यत्र न तेषां सम्बन्धः, समासे यथासंख्यमन्वयस्य लोकेऽदृष्टत्वात् । तदुक्तं व्याकरणमहाभाष्ये आद्यन्तसूत्रे—"अजाविधनौ देवदत्तयज्ञदत्तौ, न ज्ञायते कस्याजाधनं कस्यावयः" इति । तथा चात्र योग्यताबलान्नादस्य स्थितिधाम्ना संबन्धः,

न तु विसृष्टिधाम्ना, विसृष्ट्युत्तरं स्थितिकाले चितिशक्तेस्तत्र जीवरूपेण प्रवेशस्य उपनिषत्सु वर्णितत्वात् । तदुक्तम्—"तत्सृष्ट्वा तदेवानुप्राविशत्" इति बृहदारण्यके । नापि संहृतिधाम्ना नादस्य संबन्धः, तदानीं बिन्दुरूपेण ईश्वरस्यैव सत्ताया उपनिषत्सु स्वीकारात् । तदानीं कार्यकारणयोरभावेन तदुपहितस्य जीवस्याप्यभावात् । अत एव बिन्दुरूपस्येश्वरस्य संहृतिधाम्नैव संबन्ध, न स्थितिविसृष्टिधामभ्याम्, शक्तिसामरस्योपेतस्य ईश्वरस्य संहृतिकाले एव संभवात्, स्थितिविसृष्ट्योस्तु शक्तेरुद्रिक्तत्वाद् विकृतत्वाच्च । पारिशेष्याच्च लिपिरूपस्य बीजस्य विसृष्टिधाम्ना साकं संबन्धः, भूतानामेव जगदुपादानत्वेन विसृष्टिकाले स्थितिसंभवात् । न तु संहृतिस्थितिधाम्नोस्तेषां सम्बन्धः संभवति, संहृतिकालेऽसत्त्वात्, विसृष्टिकाले कार्याकारेण विकृतत्वादिति । एवं चायं श्लोकार्थः—हे ईशवल्लभे ! या नादबिन्दुलिपिविग्रहा नादबिन्दुबीजरूपाः । संहृतिस्थितिविसृष्टिधामसु यथाक्रमं स्थितिसंहृतिविसृष्टिधामसु स्थिताः । ऊर्ध्वगविमर्शशीकराः—एभ्यो धामभ्य ऊर्ध्वगो यो विमर्शः शक्तिरूपस्तत्कार्यत्वेन तस्य शीकरा जलकणा इव तिस्रो गिरः सन्ति, तास्त्वदधःस्थिता इति शास्त्रेषु व्याहृता वर्णिताः । न च नादस्य जीवरूपस्य कथं शब्दरूपतेति वाच्यम्, जीवस्य ज्ञानात्मकत्वाज्ज्ञानस्य च शब्दरूपत्वात् । तदुक्तम्—"वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" इति । एवमेवेश्वरस्यापि चिद्रूपत्वेन शब्दरूपत्वमवसेयम् । न चैवमपि बीजरूपस्य भूतवर्गस्य जडस्य कथं शब्दरूपत्वमितिवाच्यम् तत्रापि प्रथमबिन्दुकार्यत्वेन चिद्रूपत्वानुगमात्, प्रत्येकं भूतेषु शब्दस्य विभिन्नरूपस्यानुभूयमानत्वाच्च । तत्र व्योम्नि शब्दसत्त्वोपवर्णनं तु प्रसिद्धत्वान्नोपयुज्यते । वायौ तु सनसनेति शब्दः, वीसीति शब्दो वा श्रुतिगोचर एव । एवं वह्नौ भुग्भुगध्वनिः, जले बुद्बुदेति शब्दः, पृथिव्यां तु चटचटाशब्द इति ॥ ३१ ॥

अथ बाह्ये आकाशे यथा शशिमण्डलभानुमण्डलयोर्मध्यगोऽनलश्चरति तथाऽध्यात्ममपि चिदाकाशे दृक्शक्तिरूपशशिमण्डलव्याप्ताया इडायाः क्रियाशक्तिरूपभानुमण्डलव्याप्तायाः पिङ्गलायाश्च मध्ये सुषुम्णान्तर्यदनलवत् सुधाम चरति, तदेव शिवतत्त्वम्, तदूर्ध्वशिखरे यत्परं नभस्तत्र परमशिवो द्रष्टव्य इत्यध्यात्मं चिदाकाशभागद्वयकल्पनया प्रवृत्तमागमसिद्धान्तं मातृकर्तृकस्वप्रयोज्यकपरमशिवकर्मकदर्शनाप्रार्थनामिषेणाम्बिकां संबोध्य उपन्यस्यति—

**दृक्क्रियात्मशशिभानुमध्यगं**
**खे चरत्यनलवत् सुधाम यत् ।**
**यत्तदूर्ध्वशिखरे परं नभ-**
**स्तत्र दर्शय शिवं त्वमम्बिके ॥ ३२ ॥**

अत्र यद्यपि खे चरत्यनिलवदिति पाठः साधुरिव समुपलभ्यते, तथापि स न युक्तः किन्तु अनलवदित्येव पाठो युक्तः, तत्रास्ति हेतुचतुष्टयम् । तथाहि—अनिलस्या

प्रकाशरूपस्य न सुधामसादृश्यमित्येको हेतुः, अनिलवदित्यस्य सन्निहितेन सुधामपदेन सम्बन्धमनादृत्य चरतीति व्यवहितेन सम्बन्धस्यानौचित्यमिति द्वितीयो हेतुः। अनिलानलयोर्न चरणसाम्यमिति तृतीयो हेतुः। सर्वत्रैवागमग्रन्थेषु वह्निसूर्यशशिमण्डलानां सहैव नियत उपन्यास उपलभ्यत इत्यत्रापि स एवोचित इति चतुर्थो हेतुः।

अथ पद्यार्थः—हे अम्बिके ! खे चिदाकाशे दृक्क्रियात्मशशिभानुमध्यगं यथाक्रमं दृक्क्रियात्मनोः शशिभान्वोर्मध्यगं यद् अनलवत्, अत्र मतुप्प्रत्ययो न तु वतिः, सुषुम्णायामनलस्यैवोपवर्णनात् तदुक्तं, तन्त्रचूडामणौ—

मेरोर्वामे स्थिता नाडी इडा चन्द्रामृता शिवे।
दक्षिणे सूर्यसंयुक्ता पिङ्गलानाम नामतः॥
तद्बाह्ये तु तयोर्मध्ये सुषुम्णा वह्निसंयुता॥ इति।

सुधाम चरति शिवाख्यम्, तदूर्ध्वशिखरे तस्य चिदाकाशस्य ऊर्ध्वशिखरे ऊर्ध्वभागे यत्परं नभश्चिदाकाशम्, तत्र त्वं शिवं परमशिवं मां दर्शय॥ ३२॥

अथाधुना शक्तितत्त्वस्य परमपरं चेति द्वैविध्यं परिकल्प्य परं तत्त्वं परमशिवसामरस्यापन्नमविकारि अव्यवहार्यं वाङ्मनसागोचरमतद्व्यावृत्त्या उपनिषत्प्रतिपाद्यम् इदंतदितिव्यपदेशशून्यम्। अपरं तु शब्दार्थोभयात्मके जगति वैखरीमध्यमापश्यन्तीरूपं शब्दात्मकम्, मेयमानमितिमातृरूपमर्थलक्षणम्। उद्भवस्थितिलयात्मकं तु अर्थानामवस्थारूपमित्येवं भूरिभेदं शक्तिकार्यत्वात् शक्तेः स्वरूपमित्यागमेषु स्मर्यमाणं मातुर्माहात्म्योपबृंहकतया स्तुत्यै निबध्नाति—

**वैखरीप्रभृतिवाक्त्रयं परे**
**मेयमानमिति कर्तृलक्षणम्।**
**उद्भवस्थितिलयात्मकं वपु-**
**र्भूरिभेदमपरं स्मरन्ति ते॥ ३३॥**

हे परे ! पराशक्तिरूपे परावाग्रूपे च अनुत्तरात्मके वैखरीप्रभृतिवाक्त्रयं वैखरीमध्यमापश्यन्ती रूपं वाक्त्रयम्, मेयमानमितिकर्तृलक्षणं मेयं विषयः, मानं मितिसाधनम् मितिरविसंवादिज्ञानरूपा कर्ता, मितिपदसमभिव्याहारान्माता, एतच्चतुष्टयरूपमर्थजातम्, उद्भवस्थितिलयात्मकमर्थाख्यमवस्थारूपमेवं भूरिभेदं ते अपरं वपुरागमेषु स्मरन्ति आगमाचार्या इति योजना॥३३॥

अथैश्वरं वपुर्द्विविधम् शक्तेरुदयेन सविशेषं विश्वमूर्तीत्येकम्, शक्तेः प्रशान्त्या च निर्विशेषमदृष्टस्वरूपमिति द्वितीयम्। तत्राद्ये शक्तेरुदयेन पञ्चप्राणसृष्टिरेव सर्वतः प्रागिति तन्त्रागममार्गमाश्रित्य मातुर्माहात्म्यं वर्णयति—

विश्वमूर्ति यददृष्टविग्रहं
त्वत्प्रशान्तिपदमैश्वरं वपुः ।
तत्र ते य उदयः कुलेशि ! तं
सृष्टिराश्रयति पञ्चवाहता ॥ ३४ ॥

हे कुलेशि ! मातृमेयमितिलक्षणं कुलमिति लक्षितस्य कुलस्य ईशः शिवः कुलेशः, तस्य पत्नी कुलेशी शक्तिरूपा तत्सबोधनं हे कुलेशि ! तव सामरस्यापन्नं यदैश्वरं वपुस्तव उदयेन सविशेषं विश्वमूर्त्ति विश्वात्मकम् । त्वत्प्रशान्तिपदं त्वत्प्रशान्तेराधारभूतं सद् यन्निर्विशेषमदृष्टविग्रहम् अज्ञातस्वरूपम्, तत्राद्ये विग्रहे यस्ते उदयस्तं पञ्चवाहता पञ्चप्राणतारूपा आद्या सृष्टिः स्वनिमित्तत्वेन आश्रयतीति योजना । तत्र शक्तेरुदयेन पञ्चप्राणरूपतयैव सर्वतः प्राक् संवित् परिणमतीत्यत्र मानं तु प्रत्यभिज्ञाहृदये सप्तदशसूत्रे—"प्राक् संवित् प्राणे परिणता" इति आप्तवचनोद्धार एव ॥३४॥

अथ साम्प्रतं यत् पराशक्तिरूपं महाकालीस्वरूपं तस्य विवर्तभूता विकाराः शिञ्जिकाख्या वर्णमातृकाः पयोधेर्विकारभूता वीचय इव । ताभिश्च वर्णमातृकाभिरवयवभूतैरारब्धमर्थपञ्चकं पृथिव्यप्तेजोवाय्वाकाशरूपं भूतसूक्ष्मं तन्मात्रपदव्यपदेश्यम् । ततश्च महाभूतोत्पादक्रमेण विविधानि सूक्ष्माणि स्थूलानि च शरीराणि भौतिकानि, अन्यानि कार्याणि चेत्यागमकृतान्तं पुरस्कृत्य महाकालीमम्बिकां स्तौति—

या परा स्फुरति शक्तिरम्बिके
तत्र हि त्वयि पयोधिवीचिवत् ।
शिञ्जिकावयवकार्थपञ्चकं
वर्तते विविधसूक्ष्मविग्रहम् ॥ ३५ ॥

अत्र पद्ये शिञ्जिकाशब्दः 'शिजि अव्यक्ते शब्दे; इति धातोः "गुरोश्च हलः" इत्यप्रत्यये तदन्ताट्टापि शिञ्जाशब्दात् स्वार्थे कनि शब्दार्थको निष्पन्नः। विविधसूक्ष्मविग्रहमित्यत्र सूक्ष्मपदं स्थूलविग्रहाणामपि विग्रहत्वेनोपलक्षणम्। विग्रहपदं चान्येषामपि भूतकार्याणां भौतिकत्वेनोपलक्षणमिति ध्येयम् । पयोधिवीचिवदित्यत्र पयोधौ वीचिभिस्तुल्यमिति सप्तमीतत्पुरुषात्तुल्यार्थे वतिः क्रियातुल्यत्वं च वर्तत इत्येतत् क्रियापदमुपादाय उपपाद्यम्। शिञ्जिकावयवकार्थपञ्चकमित्यत्र शिञ्जिका वर्णमातृका अवयवा यस्य इत्यर्थपञ्चकमन्यपदार्थमादाय षष्ठचर्थे बहुव्रीहिः कप्, तदन्तस्यार्थपञ्चकेन साकं कर्मधारयः । विविधसूक्ष्मविग्रहमित्यत्र विविधाः सूक्ष्मा विग्रहा यस्मादित्यर्थपञ्चकमन्यपदार्थमादाय पञ्चम्यर्थे बहुव्रीहिः । तत्रैवं सति एषा पदयोजना भवति—

हे अम्बिके ! या पराशक्तिरपरशक्तेस्तद्विकाराणां च भूतभौतिकानामुपादानत्वेन सर्वत्र अनुगता स्फुरति, तत्र पराशक्तिरूपायां त्वयि पयोधौ वीचिवद् विविधसूक्ष्म-

विग्रहं शिञ्जिकावयवकार्थपञ्चकं वर्तते हि। अत्र हिशब्दः शास्त्रप्रसिद्धिं विद्वदनुभवप्रसिद्धिं चावद्योतयति इति। ३५॥

अथ साम्प्रतं परा, परापरा, अपरा, कालकर्षिणीत्येता भगवतः शक्तयश्चतस्रः प्रधानीभूताः, ताश्च प्रत्येकं त्रिधैव वर्तन्ते सृष्टौ स्थितौ संहारे चेति द्वादश भवन्ति। एतासामेव च षडध्वभिर्वर्णपदमन्त्रकलातत्त्वभुवनात्मकैर्जृम्भणम्। प्रागुक्ताश्चतस्रः शक्तयो नित्यत्वविभुत्वाभ्यां देशकालापरिच्छेद्यतयाऽक्रमा अपि षडध्वरूपैर्जृम्भिताः क्रमपदं भवन्ति। किञ्चैताः संविद्रूपाः, शक्तिशक्तिमतोरनतिरेकादित्यागमसिद्धान्तं सूचयन् मातरं स्तौति—

त्वन्मुखं त्रिपथनेत्रि! भात्मकं
शक्तिवृन्दमिह तुर्यथागमम् (यद् यथागमम्)।
द्वादश क्रमपदं पदादिभि-
र्जृम्भितं जगति तच्चतुस्त्रिकैः॥ ३६॥

हे त्रिपथनेत्रि! त्रयाणां पथां समाहारस्त्रिपथं मानमेयमितिलक्षणं नेत्रं यस्याः सा तथाभूता, तत्संबोधनम्। मानमेयमितीनां नेत्रत्वं च सप्तत्रिंशे श्लोकेऽनुपदमेव वक्ष्यते। यद् यथागममागमशास्त्रानुसारेण वर्णितम्। इह जगति त्वन्मुखं त्वदादिकम् (पराप्रभृतिकम्), भात्मकं संविद्रूपम्। शक्तिवृन्दं परादिकालकर्षिण्यन्तशक्तिचतुष्टयमस्ति। तत् स्वयं नित्यत्वविभुत्वाभ्यामक्रममपि क्रमपदं कालकृतस्य देशकृतस्य च क्रमस्य परापरत्वलक्षणस्य पदमाश्रयो भवति। किञ्च जगति चतुस्त्रिकैः चतसृणां शक्तीनां प्रागुक्तानां सृष्टिस्थितिसंहारभेदेन प्रत्येकं भेदत्रिकैर्जृम्भितं सद् द्वादश भवन्ति। परादिशक्तिचतुष्टयस्य प्रत्येकं भेदत्रयेण द्वादशविधत्वं च सनामग्राहं प्रपञ्चितं तन्त्रसारे चतुर्थे आह्निके शाक्तोपायप्रकरण इति तत एव द्रष्टव्यमिति॥ ३६॥

अथ साम्प्रतं इडापिङ्गलासुषुम्णानाडीरूपधामत्रयगताः सोमसूर्यदहना मानमेयमितिरूपाः पराशक्तेस्त्रीणि नेत्राणि भवन्ति। किञ्चैते आगमोक्तेन द्वादशराशिराजिचक्रविधानेन भेदितैः षोडशभिः स्वरैः शिवरूपैर्यथास्थानं संसृष्टैर्लक्षिता उपलक्षिताः, सहिता इति यावत्, ये व्यञ्जनरूपाः पयोधिकल्पायाः शक्तेर्विप्रुषः तद्रूपा मानमेयमितिरूपस्य सोमसूर्यदहनात्मकस्य विश्वस्य स्वरव्यञ्जनरूपसामरस्यापन्नशिवशक्तियोगप्रभवत्वादित्यागमसंप्रदायमनुसृत्याम्बिकां स्तौति—

मानमेयमितिनेत्रलक्षणाः
सोमसूर्यदहनास्त्रिधामगाः।
राशिराजिविधिभञ्जितैः स्वरै-
र्लक्षितास्तव हि विप्रुषोऽम्बिके॥ ३७॥

हे अम्बिके ! मानमेयमितिनेत्रलक्षणा मानमेयमितिरूपाणि नेत्राणि लक्षणं येषां ते तथाभूताः, त्रिधामगा इडापिङ्गलासुषुम्णारूपधामत्रयगताः, सोमसूर्यदहना राशिराजिविधिभञ्जितैःद्वादशराशीनां या राजिः पङ्क्तिः, तत्सम्बन्धी यश्चक्रविधिः, तेन भञ्जितैः भेदितैः शिवरूपैः षोडशभिः स्वरैर्लक्षिता उपलक्षिताः सहिता इति यावत्, ये तव पयोधिकल्पाया व्यञ्जनरूपा विप्रुषस्तद्रूपा हि । अत्र हिशब्द आगमशास्त्रप्रसिद्धौ । विभक्तैः स्वरैर्व्यञ्जनैश्च राशिचक्रविधानं प्रपञ्चसारे चतुर्थपटले प्रपञ्चितम् । तद्यथा—

अन्तर्बहिर्विभागेन रचयेद् राशिमण्डलम् ।
भूचक्र एष मेषादिः प्रविज्ञेयोऽथ मानुषः ॥३३॥
आद्यैर्मेषाह्वयो राशिरीकारान्तैः प्रजायते ।
ऋकारान्तैरुकाराद्यैर्वृषो युग्मं ततस्त्रिभिः ॥३४॥
एदैतोः कर्कटो राशिरोदौतोः सिंहसम्भवः ।
अमः शवर्गलेभ्यश्च सञ्जाता कन्यका मता ॥३५॥
षड्भ्यः कचटतेभ्यश्च पयाभ्याञ्च प्रजज्ञिरे ।
वणिगाद्याश्च मीनान्ता राशयः शक्तिजृम्भणात् ॥३६॥
चतुर्भिर्यादिभिः सार्धं स्यात् क्षकारस्तु मीनगः । इति ॥३७॥

इदानीं शरीरेऽद्वयतत्त्वोपलब्ध्याधाराद् मूलाधारचक्राद् उदयमानोऽपि स्वरो दुर्भेदमनाहतचक्रं प्राप्य तत्र विषयबोधोभयरूपतयोपलभ्यते, यतो दृग्रूपायाः संविदो मूलाधारस्थाया विमर्शो वेदान्तिभिर्विवर्त इति व्यवह्रियते । संविद्रूपशिवाद्वैतात्मकशक्तितत्त्वविमर्शरूपत्वम्, अतः स्वरस्य वाचकस्य विश्वमूलस्य यथागमं ब्रुवाणः शिवात्मिकां शिवशक्तिं महाकालिकां स्तौति—

**आहतेतरदुरुत्तराश्रय-**
**स्त्वत्पदादुदयते शिवात्मिके ।**
**अद्वयाद्विषयचित्प्रथातनु-**
**र्दृग्विमर्श इह वाचकः स्वरः ॥३८॥**

हे शिवात्मिके ! इह शरीरे, य आहतेतरदुरुत्तराश्रय आहतेतरद् अनाहतचक्रं दुरुत्तरं दुर्भेदम् आश्रय उपलब्धिस्थानं यस्य स तथाभूतः, दृग्विमर्शो दृशः शिवरूपायाः संविदो विमर्शः, अत एव विषयचित्प्रथातनुः प्रथमानविषयबोधोभयरूपः, अद्वयात् शिवशक्तिसामरस्यरूपाद्वयतत्त्वोपलब्ध्याधारात्, त्वत्पदाद् मूलाधारचक्राद् उदयते । स एव वाचकोऽर्थावभासक इति योजना ॥ ३८ ॥

शब्दो द्विविधः; आहतानाहतभेदात् । तत्राद्यस्तत्तत्स्थानेषु करणानां जिह्वाग्रोपाग्रमध्यमूलानामभिघातानुकूलेनप्रयत्नेन जन्यो वैखर्या वाचो व्यञ्जको वैखरः,

यद्वा वै निश्चयेन स्पष्टतरत्वात् खं कर्णविवरवर्तिनभोरूपश्रोत्रेन्द्रियं राति गच्छति तज्जन्यज्ञानविषयो भवतीति व्युत्पत्तेर्वैखरः, स च श्रोत्रेण गृह्यते। उत्तरस्तु अनाहतः संविद्रूपपरावाग्विमर्शरूपत्वात् संविदुपलक्ष्यः संविन्मयः प्राक्तनशब्दानुभवजन्यवासनावासितो मनसा गृह्यत, इत्याहतशब्दाभिव्यङ्ग्यत्वेन आहतशब्दरूपत्वेन वा वैखरीरूपतयाऽनाहतशब्दविमर्शोपादानत्वेन च परावाग्रूपतया स्फुरन्तीं परसंविद्रूपामम्बां साम्प्रतं स्तौति—

अम्ब ! धामकरणप्रयत्नजो
वैखरः स्फुरति शब्द आहतः।
मानसः पुनरसावनाहतो
वासितस्त्वदुपलक्ष्य उत्तरः ॥ ३९ ॥

हे अम्ब ! धामकरणप्रयत्नजो धामसु ताल्वादिस्थानेषु तत्तत्करणप्रयत्नजन्यः, अत एव आहताख्यो वैखरः श्रोत्रेण स्फुटं गृह्यमाणो यः शब्दः स्फुरति स त्वदुपलक्ष्यः त्वं परावाग्रूपा परमकारणतया उपलक्ष्या यस्य स तथाभूतः। यः पुन उत्तरो द्वितीयः प्राक्तनशब्दानुभवजन्यवासनावासितोऽनाहतो मानसः शब्दः स्फुरति, असावपि त्वदुपलक्ष्यः। तस्यापि विमर्शरूपस्य उपादानभूता परावाग्रूपा त्वमेव उपलक्ष्या ज्ञापयितव्येति भावः ॥ ३९ ॥

अथ वर्णमातृकाभिर्विनिर्मिता या क्रियामयी मातृरूपा शक्तिः, सा पारमेश्वरी शक्तिरेव न तु ततो विभक्तेति युग्मेनाह—

षष्ठवर्जमहिमद्युतेः कलाः
सर्गबिन्दुरहिताश्च ये शुभे।
सर्व एव शशिनः कलाः शिवे
योनयो विधृतबीजतत्स्वराः ॥ ४० ॥
बीजयोनिविधिभेदभेदिता
मातृकासुकृतमातृलक्षणा।
शक्तिरम्ब भवति क्रियामयी
त्वत्तनुर्जयति पारमेश्वरी ॥ ४१ ॥

हे शुभे शिवे ! षण्ढवर्जम् ऋ ॠ ऌ ॡ इति चतुरः क्लीबस्वरान् विहाय। या अहिमद्युतेः सूर्यस्य कलाः सौराः स्वराः, अ इ उ इति ह्रस्वास्त्रयः, ए ओ इति च द्वौ, तयोरपि ह्रस्वत्वाभ्युपगमात्। किञ्च, ये सर्गबिन्दुरहिताः सर्गो विसर्गसहितः

स्वरः अः इति, बिन्दुश्च बिन्दुसहितः स्वरः अं इति, तद्रहिताः सर्वे एव शशिनः कलाः चान्द्राः स्वराः, आ ई ऊ इति त्रयो दीर्घाः, ऐ औ इति च द्वौ, तयोरपि द्विमात्रत्वेन दीर्घत्वाभ्युपगमात्। किञ्च, ये विधृतबीजतत्स्वरा विधृता मातृलक्षण-क्रियामयशक्तिनिर्माणे सहायत्वेन स्वीकृताः स्वबीजभूतास्ते प्रागुक्ता षण्ढरहिताः सर्गबिन्दुरहिताश्च स्वरा यैस्ते तथोक्ताः। योनयो भूतयोनयो व्यञ्जनानि तेषां बीजानां स्वराणां योनीनां च व्यञ्जनानां विधिभेदेन क्रियाभेदेन भेदिता या मातृका वर्णमातृका सा सुकृतमातृलक्षणा सुष्ठु कृता मातृलक्षणा मातृरूपा शक्तिर्यया सा तथोक्ता, क्रियामयी शक्तिर्भवति या सा, हे अम्ब! पारमेश्वरी परमेश्वरशक्तिरूपा परमैश्वर्य-सम्पन्ना त्वत्तनुस्त्वद्रूपा जयतीति योजना। अत्र ऋ ॠ ऌ ॡ इति वर्णचतुष्टयस्य षण्ढत्वमुक्तं तन्त्रसारे तृतीयाह्निके—"तदेतद्वर्णचतुष्टयमुभयच्छायाधारित्वान्नपुंसकम्, ऋ ॠ ऌ ॡ इति" इति। अ इ उ इति ह्रस्वस्य स्वरत्रयस्य सूर्यात्मकत्वम्, आ ई ऊ इति दीर्घस्य स्वरत्रयस्य सोमात्मकत्वं चोक्तं तत्रैव—"अत्र च प्राच्यं परामर्शत्रयं प्रकाश-भागसारत्वात् सूर्यात्मकं चरमं परामर्शत्रयं विश्रान्तिस्वभावाह्लादप्राधान्यात् सोमात्मक-मिति"। अत्र प्राच्यं परामर्शत्रयमित्यनेन अ इ उ इति ह्रस्वात्मकं स्वरत्रयं चरमं परामर्शत्रयमित्यनेन आ ई ऊ इति दीर्घात्मकं स्वरत्रयं गृह्यत इत्यवधेयम्। ए ओ इत्यनयोर्ह्रस्वात्मकत्वम् ऐ औ इत्यनयोस्तु दीर्घात्मकत्वमुक्तं शारदातिलकटीकायां राघवभट्टकृतायां पदार्थादर्शाख्यायां द्वितीयपटले पञ्चमश्लोकव्याख्यावसरे—"ह्रस्वा अ इ उ ऋ ऌ ए ओ एते शिवमयाः पुंरूपाश्चेत्यर्थः, दीर्घाः आ ई ऊ ॠ ॡ ऐ औ एते शक्तिमयाः स्त्रीरूपाश्चेत्यर्थः" इति। सर्गो बिन्दुश्च अं अः इति यथाक्रममुक्तौ तन्त्रसारे तृतीयाह्निके—"ततः पुनः क्रियाशक्त्यन्ते सर्वं कार्यभूतं यावद् अनुत्तरे प्रवेक्ष्यति, तावदेव पूर्वं संवेदनसारतया प्रकाशमात्रत्वेन बिन्दुतया आस्ते अमिति। ततस्तत्रैव अनुत्तरस्य विसर्गो जायते अः इति" इति॥ ४०-४१॥

अथाधुना पराशक्तिसमुत्थबिन्दुरूपाया अम्बायाः स्वकार्यनादबिन्दुबीजरूप-पराभेदेन त्रैविध्यं श्रवणागोचरस्य च बुद्धिलक्षणस्य नादस्य कारणत्वेन शब्दार्थोभया-त्मकजगन्नियामकत्वं नादबिन्दुबीजानां च पूर्वपूर्वं प्रति उत्तरोत्तरस्य कारणत्वं पूर्व-पूर्वापेक्षया उत्तरोत्तरस्य सूक्ष्मत्वं चागमोक्तमनुवदन् पराम्बां महाकालिकां स्तौति—

**बिन्दुरक्षरमयं क्रियामयं**
**यो नियन्त्रयति बुद्धिलक्षणः।**
**नाद इष्टतनुरस्य कारणं**
**त्वं परे! त्रितयधर्मरूपिणी॥ ४२॥**

हे परे! बीजरूपे परावाग्रूपे च शिवे! यस्तव इष्टतनुरिष्टा तनुर्यस्य स तथोक्तो। नादो बुद्धिलक्षणो बुद्ध्यैव लक्ष्यमाणः, न तु श्रोत्रेण। अक्षरमयं शब्दात्मकम्,

क्रियामयं क्रियाशक्त्या समुत्पाद्यमर्थात्मकं च जगत् कारणत्वेन नियन्त्रयति नियच्छति नियामको भवति, यश्च अस्य नादस्य कारणं बिन्दुः, तौ द्वौ संकलय्य परारूपा त्वं त्रितयधर्मरूपिणी नादबिन्दुपरारूपस्य त्रितयस्य यद्धर्मं रूपं नादत्वं बिन्दुत्वं परात्वंचेति, तद्वती नादबिन्दुपरारूपा त्वमेवासीति। अत्र बिन्दोः पराशक्तिजन्यत्वे नादबिन्दुबीजरूपस्वकार्यभेदेन स्थूलसूक्ष्मपराभेदेन वा त्रैविध्ये बिन्दोश्च नादकारणत्वे प्रपञ्चसारः प्रमाणम्। तथाहि—

सा तत्त्वसंज्ञा चिन्मात्रा ज्योतिषः सन्निधेस्तथा।
विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम्॥
कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा।
स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते॥
सबिन्दुनादबीजत्वभेदेन च निगद्यते इति॥ ४२॥

अथ साम्प्रतं निस्तरङ्गशिवचित्पयोनिधेराद्यः स्पन्द इच्छाशक्तिरूपः प्रथम ऊर्मिः, द्वितीयस्तु ज्ञानशक्तिरूपः क्रियाशक्तेः प्राग् जायमानः, क्रियाशक्तिरूपस्तु तृतीयोऽचिद्विश्वस्य कारणम्। एतदूर्मित्रयं शक्तिरूपायाः शिवसमवायिन्या अम्बाया एव वपुर्न तु शिवस्य निस्पन्दस्य निर्विकारस्येत्येतमर्थनिकरमागमसम्मतं दिदर्शयिषुः शिवशक्तिमीश्वरीं स्तुत्या प्रवणीकरोति—'

**उद्यमः प्रथम ऊर्मिरुत्तरो**
**निस्तरङ्गशिवचित्पयोनिधेः।**
**प्रागचित्पदपरिग्रहात्तव**
**व्योमनीश्वरि तनुर्महोदयः॥ ४३॥**

हे ईश्वरि! निस्तरङ्गशिवचित्पयोनिधेर्निस्तरङ्गः प्रशान्तः शिवचिद्रूपो यः पयोनिधिस्तस्य यः प्रथम उद्यम आद्य स्पन्द इच्छाशक्तिरूपः, स प्रथम ऊर्मिस्तरङ्गः। इच्छायाः प्रथमस्पन्दत्वमुक्तं मालिनीविजयोत्तरतन्त्रे तृतीयाधिकारे—

या सा शक्तिर्जगद्धातुः कथिता समवायिनी।
इच्छात्वं तस्य सा देवि सिसृक्षोः प्रतिपद्यते॥५॥

ज्ञानशक्तिक्रियाशक्त्योः स्वरूपमपि तत्रैव—

सैकापि सत्यनेकत्वं यथा गच्छति तच्छृणु।
एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चतम्॥६॥
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते।
एवंभूतमिदं वस्तु भवत्विति यदा पुनः॥७॥
जाता तदैव तत्तद्वत्कुर्वत्यत्र क्रियोच्यते। इति।

अत्र प्रथमपदं काकाक्षिन्यायेनोभयत्रापि संबद्धयते । अचित्पदपरिग्रहाद् अचितो जडजातस्य यत्पदं कारणत्वेनाश्रयः क्रियाशक्तिरूपस्तत्परिग्रहात् प्राग् या तव ज्ञान-शक्तिरूपा तनुः सा महोदयो महान् उदीयमानो व्योमनि चिदाकाशे, उत्तरो द्वितीय ऊर्मिरिति ॥४३॥

अथेदानीं या चिद् गगनचरी आद्यस्पन्दरूपा एषणाशक्तिः, सा ज्ञानशक्ति-समुत्पादानन्तरं क्रियाशक्त्या तत्तदर्थाकारेण प्रसारिता सती इन्द्रियगोचरत्वमापन्ना वाग्व्यवहारगोचरा भवतीतीममर्थमागमसम्मतं प्रदर्शयन्, एवमर्थाकारेण विवृत्तमातृ-शक्तेः स्वयं स्वरूपज्ञापनाय मातरं कार्योपन्यासमुखेन स्तुतया प्रगुणयति—

**स्फारिता जनति सेयमेषणा**
**खेचरत्वसमुपाश्रिता दिशि ।**
**अक्षचक्रमनुजग्मुषी गवि**
**प्राप्तगोचरपदा भव स्वयम् ॥ ४४ ॥**

हे जननि ! खेचरत्वसमुपाश्रिता चिद्गगनचरत्वं प्राप्ता, सेयंया पूर्वं शिवचित्पयोनिधेः प्रथमोर्मित्वेनोक्ता सेयमेषणा इच्छाशक्तिः, दिशि दिशि ज्ञान-शक्तिसमुत्पादानन्तरं क्रियाशक्त्या तत्तदर्थाकारेण स्फारिता प्रवर्द्धिता सती अक्षचक्रं चक्षुरादीन्द्रियसमूहम्, रूपरसाद्याकारेण अनुजग्मुषी अनुप्राप्ता सती गवि वाचि, प्राप्तगोचरपदा वाग्व्यवहारविषयत्वं प्राप्ता भवति । एवं सर्वार्थाकारेण विवृत्तैषणारूपा त्वं स्वयं ज्ञाताऽवगता भव, एवंरूपतया त्वत्परिज्ञानस्योपायान्तरैरशक्यत्वात् ।

यद्वा इच्छाशक्तिरेव पशुभूमिकायां खेचरी-गोचरी-दिक्चरी-भूचरीरूपैरशेषैः प्रमातृ-अन्तःकरण-बहिष्करण-भावस्वभावैस्तत्तद्रूपाणि पारमार्थिकानि यथाक्रमं चिद्ग-गनचरीत्व-अभेदनिश्चयाद्यात्मकपारमार्थिकस्वरूप-अभेदप्रथात्मकपारमार्थिकस्वरूपसा-र्वात्म्यस्वरूपात्मकानि गोपयन्ती परिस्फुरतीत्यागमोक्तमर्थमुपन्यस्य तत्तच्चक्रैर्गोपितं स्वकीयं पारमार्थिकं रूपं स्वयमाविर्भाव्य ज्ञापयितुं खेचर्यादिशक्तिरूपामम्बां प्रार्थयते—स्फारितेति । सेयमेषणा इच्छाशक्तिः खेचरत्वसमुपाश्रिता पशुभूमिकायां किञ्चित्कर्तृत्वा-द्यात्मककलादिशक्त्यात्मना गोपितपारमार्थिकचिद्गगनचरीत्वरूपा खेचरीचक्रभावं प्राप्ता, दिशि स्फारिता भेदालोचनादिप्रधानबहिष्करणदेवतात्मना गोपिताभेद-प्रथात्मकपारमार्थिकस्वरूपा दिक्चरीचक्ररूपतां प्राप्ता, अक्षचक्रमनुजग्मुषी अक्षगो-चरतां प्राप्ता सर्वतो व्यवच्छिन्नाभासस्वभावप्रमेयात्मना गोपितसार्वात्म्यस्वरूपा पशुहृदयव्यामोहिनी भूचरी चक्ररूपतां प्राप्ता । गवि प्राप्तगोचरपदा वाग्व्यवहार-गोचरत्वं प्राप्ता भेदनिश्चयाभिमान-विकल्पन-प्रधानान्तःकरणदेवीरूपेण गोपिताभेद-निश्चयाद्यात्मकपारमार्थिकस्वरूपा गोचरीचक्ररूपेति तत्तच्चक्रैर्गोपितपारमार्थिकस्वरूपा त्वं हे जननि ! स्वयमात्मानमाविर्भाव्य ज्ञाताऽवगता भवेत्यदृष्टानि पदान्यध्याहृत्य व्याख्येयम् ॥४४॥

अथाधुना पतिभूमिकायां सर्वकर्तृत्वादिशक्त्यात्मकचिद्गगनचरीत्वेन, अभेदनिश्चयाद्यात्मना गोचरीत्वेन, अभेदालोचनाद्यात्मना दिक्चरीत्वेन, स्वाङ्गकल्पाद्वयप्रथासारप्रमेयात्मना च भूचरीत्वेन पतिहृदयविकासिना स्फुरदपि खेचर्यादिशक्तिचतुष्टयं सांशं शिवतत्त्वाद् बहिर्भूतं च। यत्तु द्वैताद्वैतविभागशून्यं शिवतत्त्वसामरस्यापन्नं चितिरूपं शक्तितत्त्वं तन्निरंशं शिवतत्त्वादबहिर्भूतं च, तत्तु न वाग्व्यवहारगोचरीभूतमितीममागमसंप्रदायसिद्धमर्थं मातुः परापरविग्रहोपन्यासमुखेन प्रबोधयन् मातरं नुत्याऽभिमुखीकरोति—

खेचरीप्रभृति यच्चतुष्टयं
सांशमम्ब ! तव तद् बहिर्वपुः ।
यद् द्वयाद्वयविभागघस्मरं
तन्निरंशमबहिर्न वाक्पदम् ॥ ४५ ॥

पद्यमिदं निगदव्याख्यातम् ॥ ४५ ॥

अथ साम्प्रतं चिद्रूपं शिवतत्त्वमकुलम्, ततो निर्गता चिद्रूपा पञ्चवृत्तितनुः शक्तिरखिलं कुलं विश्वं प्रभासयति, वृत्तयश्च पञ्च प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपाः योगसूत्रोक्तलक्षणस्वरूपाः। कुलप्रभासनमेव च तस्याः शक्तेः श्रमः। समाधौ निद्रायां वा निरोधरूपेण यत्नेन स्वतो वा विश्रमाय शिवतत्त्वाभिमुखी अकुलेन शिवेन संगता कुलप्रभासनरूपव्यापाराद् विनिवृत्ता शिवे एव पुनर्विश्रममुपैतीतीममागमवादं मातृस्वरूपोपन्यासमुखेन मातृस्तुतिपरतयोपन्यस्यति—

पञ्चवृत्तितनुरम्ब ! निर्गता
शक्तिरर्पितकुलप्रभासना ।
त्वं शिवादकुलतः समेयुषी
तेन तत्र पुनरेषि विश्रमम् ॥ ४६ ॥

हे अम्ब ! अकुलतो विश्वप्रपञ्चरहितात् शिवाद् निर्गता पञ्चवृत्तितनुः शक्तिस्त्वम् अर्पितकुलप्रभासना अर्पितं शिवाय द्रष्ट्रे समर्पितं कुलस्य प्रभासनं यया सा तथोक्ता भवसि। निद्रादौ तु कुलप्रभासनव्यापाराद् विनिवृत्ता सती त्वं तेन शिवेन समेयुषी सङ्गता सती पुनरपि तत्र शिवे विश्रमं श्रमपरिहारमेसि प्राप्नोसीति ॥४६॥

अथेदानीं प्रमाणादिवृत्तिपञ्चकं जडं पञ्चभूतजातं प्रकाशयति, तस्यैव गुणभूतं चित्तवृत्तिनिरोधरूपेण योगेन लक्ष्यते। तथाहि—यदा वृत्तयः समुदाचरन्ति, तदा सकार्याणि पञ्चभूतानि कुलाख्यान्यवभासन्ते। वृत्तिनिरोधे तु अकुलं शिवतत्त्वं चिद्रूपं

स्वप्रकाशं प्रकाशत इति कुलस्यैव गुणभूतं वृत्तिपञ्चकं जडस्य, न तु अकुलस्य शिवस्य, स्वप्रकाशचिद्रूपत्वेन वृत्त्यनपेक्षणात् । यदा तु तदेव वृत्तिपञ्चकं सिद्धिसम्पन्नं धर्मिणं सविकल्पं जीवं गोचरयति, तदा सिद्धनामकं संपद्यते । यदा तु तस्यैव सिद्धस्य धर्मिणो धर्मभूताः सिद्धीर्गोचरयति, तदा शक्तिनाम लभते । सिद्धयो हि सिद्धस्य शक्तय इत्यागमसम्मतमर्थं विवृण्वन् पञ्चवृत्तितनुं शक्तिरूपामम्बामज्ञातनामरूपमहिमप्रकाशनेन स्तौति—

**युक्तितोऽम्ब ! तव वृत्तिपञ्चकं**
**पञ्चभूतगुणवृत्ति लक्ष्यते ।**
**धर्मिवृत्तिकृतसिद्धनामकं**
**धर्मवृत्तिकृतशक्तिनाम ते ।। ४७ ।।**

हे अम्ब ! तव स्वरूपभूतं वृत्तिपञ्चकं युक्तितः पञ्चवृत्तिनिरोधरूपेण योगेन । आद्यादित्वात् सार्वविभक्तिकस्तसिः । पञ्चभूतगुणवृत्ति पञ्चानां भूतानां गुणभूता अङ्गभूता वृत्तिर्व्यापारो यस्य तत्तथा लक्ष्यते प्रतीयते । किञ्च, तदेव वृत्तिपञ्चकं ते तव धर्मिवृत्तिकृतसिद्धनामकं धर्मिणि सिद्धिसम्पन्ने जीवे या वृत्तिपञ्चकस्य वृत्तिर्व्यापारस्तया कृतं स्वस्य सिद्धनाम सिद्धेति येन कर्तृभूतेन वृत्तिपञ्चकेन तत्तथाभूतम् । किञ्च, धर्मवृत्तिकृतशक्तिनाम धर्मे सिद्धौ या वृत्तिपञ्चकस्य वृत्तिः समवभासनरूपो व्यापारस्तया कृतं स्वस्य शक्तिनाम येन कर्तृभूतेन तत्तादृशं च ते वृत्तिपञ्चकरूपं वपुर्लक्ष्यत इति ।।४७।।

पराशक्तिरेव ब्रह्मा, विष्णुः, रुद्रः, ईश्वरः, सदाशिव इति सिद्धपञ्चकरूपेणावस्थिता । इदमेव सिद्धपञ्चकमागमेषु ब्रह्मपञ्चकपदेनाप्युच्यते । ललितासहस्रनाम्नि चतुर्थ्यां कलायाम्—

पञ्चप्रेतासनासीना पञ्चब्रह्मस्वरूपिणी ।
चिन्मयी परमानन्दा विज्ञानघनरूपिणी ।।११२।।

इति पद्यव्याख्यावसरे सौभाग्यभास्करव्याख्यायामुक्तम्—"ब्रह्मादिसदाशिवान्तानां पञ्चानामपि ब्रह्मकोटावन्तर्भावात् पञ्चब्रह्मणां स्वरूपत्वमस्याः । तदुक्तं त्रिपुरासिद्धान्ते—

निर्विशेषमपि ब्रह्म स्वस्मिन् माया विलासतः ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।।
इत्याख्यावशतः पञ्चब्रह्मरूपेण संस्थितम् ।। इति ।

किञ्च, ब्रह्मपञ्चकस्य भारतीप्रभृतिशक्तिपञ्चकमपि पराशक्तेरेव विकसितं रूपम् । तच्च शक्तिपञ्चकं ब्रह्मणो भारती शक्तिः, विष्णोर्विश्वम्भरा, रुद्रस्य रौद्री, ईश्वरस्य ईश्वरी, सदाशिवस्य सदाशिवेति । तदुक्तं योगिनीहृदये भावार्थस्वरूपनिरूपणप्रकरणे सप्तदशश्लोकव्याख्यावसरेऽमृतानन्दयोगिकृतदीपिकाख्यटीकायाम्—"ब्रह्माऽत्र

सृष्टावधिपतिरेतस्य भारती शक्तिः" इति। तत्रैवाग्रेऽनुपदम्—"सृष्टिस्थितौ तु विष्णुः कर्ता विश्वम्भराऽस्य शक्तिः स्यात्" इति। ततोऽग्रे—"रुद्रोऽधिपतिः शक्ती रौद्री स्यात्तत्र सृष्टिसंहारे" इति। ललितासहस्रनाम्नि च तृतीयशतके चतुर्थ्यां कलायाम्

संहारिणी रुद्ररूपा तिरोधानकरीश्वरी।
सदाशिवाऽनुग्रहदा पञ्चकृत्यपरायणा ॥ ११५ ॥

इत्युक्तम्। अत्रेश्वरस्य शक्तिरीश्वरी सदाशिवस्य शक्तिः सदाशिवेति कण्ठोक्तमेव। किञ्च, उन्मन्यवस्थाऽपि पराशक्तेः परमं रूपं गुरुवक्त्राख्यं तदुक्तं स्वच्छन्दतन्त्रे दशमपटलस्योत्तरार्द्धे—"सुनिर्वाणं परं शुद्धं गुरुवक्त्रं तदुच्यते" इति (श्लो० १२७७) ॥ अस्यामवस्थायां मननं न क्रमते, अत एवोन्मनी। अत एवोक्तं स्वच्छन्दतन्त्रे तत्रैव—"न च कालः कलाश्चारो न तत्त्वं न च देवता" इति (श्लो० १२७६) ॥ ४७ ॥

अस्य चैकादशकस्य पराशक्तिस्वरूपस्य स्मरणेन परा सिद्धिः समवाप्यत इति दर्शयन् मातृस्वरूप माहात्म्यप्रकाशनमुखेन मातरं स्तौति—

**ब्रह्मणः प्रभृति सिद्धपञ्चकं**
**भारतीप्रभृति शक्तिपञ्चकम्।**
**उन्मनीं स्मरति यस्तवाकृतिं**
**सिद्धवर्त्मनि जयत्यसौ जनः ॥ ४८ ॥**

ब्रह्मणः प्रभृति सिद्धपञ्चकं यत्र, यच्चभारतीप्रभृतिशक्तिपञ्चकं या चोन्मनीरूपा परा दशा, एतदेकादशकं तवाकृतिं यः स्मरति, असौ जनः सिद्धवर्त्मनि सिद्धानां सिद्धपञ्चकस्य वर्त्मनि मार्गे स्थितस्तद्रूपत्वमनुप्राप्य सर्वप्राकृतसंसारधर्मातीतो जयति सर्वोत्कर्षेण वर्तत इति पदयोजना ॥४८॥

अथेदानीं चिदचिद्रूपं द्विविधं विश्वम्, तत्र यच्चिद्रूपं विश्वं तद्धर्मिरूपम्, धर्मिपदेन च सिद्धपञ्चकं प्रागुक्तं न विस्मर्तव्यम्। अचिद्रूपं तु धर्मरूपम् धर्मपदेन च शक्तिपञ्चकं प्रागुक्तमेव। सोऽयं द्विविधोऽप्यर्थश्चितिशक्त्या प्रकाश्यमानस्तत्तदाकृतीरुपगच्छन् ईश्वरे चिद्रूपे तत्त्वे सृज्यते, सोऽयं तन्त्रान्तरप्रसिद्धो दृष्टिसृष्टिवाद एवात्राप्यभिप्रेतः। तमिममर्थं प्रदर्शयिष्यन् मातुस्तत्तदर्थप्रकाशकत्वरूपस्रष्टृत्वोपन्यासमुखेन माहात्म्यप्रख्यापनद्वारा मातरं स्तौति—

**त्वं प्रकाशयसि यं स सृज्यते**
**धर्मिधर्मतनुरर्थ ईश्वरे।**
**यः प्रकाश इह स त्वया कृतः**
**तत्तदाकृतिरुपैति सृष्टिताम् ॥ ४९ ॥**

हे अम्ब ! त्वं यमर्थं प्रकाशयसि स धर्मिधर्मतनुरर्थं ईश्वरे दर्पणप्रख्ये चिद्रूपे सृज्यते। कथं सृज्यत इत्यपेक्षायामाह—य इह अर्थे प्रकाशस्त्वया कृतः स प्रकाशस्तत्तदाकृतिस्तत्तदर्थाकारतामुपगतः सन् सृष्टितां सृज्यत इति कर्मव्युत्पत्त्या सृष्टिकर्मतां सृज्यमानताम् उपैतीति ॥४९॥

सम्प्रति प्रलये निर्विषयचिद्रूपं महाकालीस्वरूपमुपन्यस्यन् मातरं स्तौति—

**त्वं हि चित्तनुरतो न चित्तता**
**स्वेन ते विषयचित्ततां विना।**
**शिष्यसे यदि विनार्थमण्डलं**
**सर्गसीमनि कुतोऽस्ति चित्तता ॥ ५० ॥**

हे अम्ब ! त्वं चित्तनुः परमार्थतश्चिद्रूपा हि वर्तसे। अत्र हिशब्दः शास्त्रप्रसिद्धिं विद्वदनुभवप्रसिद्धिं चावद्योतयति। अतो विषयचित्ततां विना तव विकृतिरूपा ये विषयास्तेषां या चित्तता चित्तगोचरता, दृश्यत्वमिति यावत्, तां विना ते तव स्वेन स्वकीयेन स्वप्रकाशचिद्रूपेण चित्तता चित्तगोचरता न। अयं भावः—स्वप्रकाशचिद्रूपायास्तव स्वविकारविषयसंबन्धेनैव चित्तवृत्तिविषयता दृश्यत्वरूपा, न तु स्वत इति। एतदेवोपपादयन् मातुः प्रलयकालिकं रूपं वर्णयति—शिष्यस इति। सर्गसीमनि प्रलये प्रलयात् प्रागेव सर्गप्रवृत्तेरिति भावः। त्वं यदि अर्थमण्डलं विना विषयसमूहं विना, शिष्यसे अवशिष्टा भवसि, तदा चित्ताभावात् कुतस्तव चित्तता चित्तगोचरता अस्ति। तदानीं चित्ताभावात् तव चित्तगोचरता नास्तीति प्रसिद्धमेव, अतः सर्गे या तव चित्तगोचरता सा विषयसंबन्धकृतैव न तु स्वरूपत इति भावः ॥५०॥

ननु विचित्रा वासनैव विचित्रं जगत् सृजति चितिशक्तिस्तु असङ्गा विचित्रार्थसंबन्धविरहिणी कथं विचित्रं जगत् स्रक्ष्यतीत्येवमेकोनपञ्चाशत्पद्योक्तं मातुर्जगत्स्रष्टृत्वमाक्षिप्य वासनायाः कथञ्चिन्मानसजगत्स्रष्टृत्वसंभवेऽपि न बाह्यजगत्स्रष्टृत्वं संभवति, वैजात्यात्। किञ्च, बाह्यार्थाभावे ऐन्द्रियकतदनुभवाभावेऽपि च वासनाया एव न संभवः, अतः शक्तिलक्षणबाह्याभ्यन्तरजगत्परिपूर्णविग्रहा चितिशक्तिरेव बाह्याभ्यन्तरोभयवस्तुप्रसूरिति समाधातुं विश्वजननीत्वेन चितिशक्तिरूपामम्बां स्तौति—

**वासना च न विचित्रतापदं**
**तत्प्रसूस्त्वमिह केवलैव चेत्।**
**शक्तिलक्षणजगद्भृतोदरी**
**मानसैन्द्रियकवस्तुसूरसि ॥ ५१ ॥**

हे अम्ब ! इह जगति त्वं केवलैव जगत्सम्बन्धरहितैव चेद् वर्तसे तदा विचित्रता पदं विचित्रतायाः पदमाश्रयः वासना, च तु, न तत्प्रसूस्तस्य जगतो जनिका नास्ति।

अतः शक्तिलक्षणजगत्भृतोदरी शक्तिलक्षणेन शक्तिस्वरूपेण सूक्ष्मेण जगता भृतं पूर्णमुदरं यस्याः सा तथोक्ता, त्वमेव मानसैन्द्रियकवस्तुसूः मानसं मनोमात्रग्राह्यं वस्तु आभ्यन्तरम्, ऐन्द्रियकं च चक्षुरादीन्द्रियग्राह्यं बाह्यं वस्तु, तयोः प्रसवित्री असीति ॥५१॥

समनन्तरपद्ये "मानसैन्द्रियकवस्तुसूरसि" इति चतुर्थपादेन बाह्याभ्यन्तरवस्तुप्रसूत्वं जगन्मातुरुक्तम्, "त्वं प्रकाशयसि यं स सृज्यते" इत्यनेन पद्येन चितिशक्तिकर्तृका प्रकाशनरूपा वस्तुसृष्टिरुक्ता, तत्कथमिति प्रकाशनक्रियेतिकर्तव्यताकाङ्क्षायां तदुपपादयितुमाह—

**सार्वकालिकमिदं जगत् त्वया**
**भास्यते विधृतशब्दरूपया ।**
**आन्तरं जननि बुद्धिदर्पणे**
**बाह्यमद्यतनमक्षरूपया ॥ ५२ ॥**

हे जननि ! सार्वकालिकं भूतभविष्यद्वर्तमानकालिकम् । वासनारूपेण बुद्धिदर्पणे स्थितमिदमान्तरं जगद् विधृतशब्दरूपया विधृतवैखरीशब्दरूपया त्वया परमार्थतः परावाग्रूपया भास्यते । शब्दस्य परोक्षापरोक्षसार्वकालिकवस्तुनो वासनारूपेण बुद्धौ स्थितस्य परोक्षरूपेण बोधकत्वात् । अद्यतनं वर्तमानम् । बाह्यं तु अक्षरूपया इन्द्रियरूपया त्वया भास्यत इति ॥ ५२ ॥

सम्प्रति यावत्पुरुषस्य शान्तताऽऽख्या सप्तमी प्रान्तभूमिर्नोदेति, तावदेव द्वैतविमर्शः, उत्पन्नायां तु तस्यां भूमौ अद्वयविमर्श एव इत्यागमाविरुद्धं योगसम्मतमर्थं दर्शयन् प्रज्ञारूपसप्तमभूमिकारूपतयाऽम्बां स्तौति—

**यावदम्ब ! पुरुषस्य शान्तता**
**सप्तमी सकलभाववर्तिनः ।**
**तावदद्वयविमर्शभिन्नता**
**सार्वकालिकविमर्शभाविता ॥ ५३ ॥**

हे अम्ब ! सकलभाववर्तिनो व्यापकत्वात् सकलपदार्थान्तरवस्थितस्य पुरुषस्य यावत् सप्तमी भूमिः शान्तताख्या उत्पद्यते, तावदेव सार्वकालिकेन द्वैतविमर्शेन भाविता संपादिता अद्वयविमर्शभिन्नता अद्वयविमर्शभिन्नरूपता भवति प्रथमादिषष्ठ्यन्तभूमिषु, सप्तम्यां तु शान्तताख्यायां भूमौ अद्वयविमर्शरूप एव पुरुष इति । सप्तभूमयस्तु "तस्य सप्तधा प्रान्तभूमिः प्रज्ञा" (२।२७) इति सूत्रे साधनपादे योगदर्शने तद्भाष्यवैशारद्यादौ च उपवर्णिताः । सप्तमभूमिकायाः प्रज्ञारूपायाः शक्तिरूपत्वं तु शक्तिरूप वृत्तिपञ्चकान्तर्गतत्वेन बोध्यम् ॥ ५३ ॥

अथेदानीं चिज्जडयोर्व्युत्थाने सहोपलभ्यमानयोः समाधौ वृत्तिनिरोधेन जडाकृतिनिराकृतौ सत्यां स्वतः सकृद्विभाता या चितिः सा मातुः परमं स्वरूपमिति निर्विशेषस्वरूपप्रदर्शनमुखेन मातरं स्तौति—

**अम्ब तज्जडमुशन्ति भेदिभि-**
**र्यद् गुणैः स्फुरदपोह्यते क्रमात् ।**
**चित्तदाकृतिनिराकृतिः स्वतो**
**भाति या सकृदसौ त्वमेव सा ।। ५४ ।।**

हे अम्ब ! विद्वांसस्तद् वस्तु जडम् उशन्ति इच्छन्ति, यद् वस्तु भेदिभिः परस्परं व्यावृत्तैरसमानाधिकरणैर्गुणैश्चित्या सह व्युत्थाने स्फुरत् क्रमात् चित्तवृत्तिनिरोध-क्रमात् चितः अपोह्यते, निरस्यते । या तु असौ तदाकृतिनिराकृतिस्तदाकृतेर्जडाकृते-र्निराकृतिर्निरासो यस्या सा तथोक्ता, इति पञ्चम्यर्थे बहुव्रीहिः, निरस्तजडाकृतिरूपा इति यावत् । चित् स्वतः सकृद्भाति सदैव भाति सा चित् त्वमेव इति ।

अत्राभिधीयमानं चितः स्वप्रकाशायाः सकृद्विभातत्वं छान्दोग्येऽष्टमाध्याये चतुर्थखण्डे द्वितीयमन्त्रे उक्तम्—"सकृद्विभातो ह्येवैष ब्रह्मलोकः" इति । व्याख्यातं च भाष्यकृद्भिः—"सकृद्विभातः सदा विभातः सदैकरूपः स्वेन रूपेण एष ब्रह्मलोकः" इति । अत्र ब्रह्मलोकपदे ब्रह्मैव लोक इति कर्मधारयः । तत्रैव तृतीयाध्यायस्य एकादश-खण्डे तृतीयमन्त्रे—"सकृद्दिवा हैवास्मै भवति"—भाष्यकृता च इति दृश्यते । "ब्रह्म-विदेऽस्मै सकृद्दिवा हैव सदैवाहर्भवति, स्वयं ज्योतिष्ट्वात्" इत्यप्युक्तम् । गौडपाद-माण्डूक्यकारिकायामलातशान्तिप्रकरणेऽपि—"सकृद्विभातो ह्येवैष धर्मो धातुस्व-भावतः" (श्लो० ८१) इति, व्याख्यातं च भाष्यकृद्भिः—"एष एवंलक्षण आत्मख्यातो धर्मो धातुस्वभावतो वस्तुस्वभावतः सकृद्विभातः सदैव विभात इत्येतत्" इति ।। ५४ ।।

उक्तमेवार्थं स्वोपपत्तिभङ्ग्यन्तरेणाह—

**जाड्यमम्ब ! जगतो निसर्गतो**
**यत्पराप्रभृति भाति भेदतः ।**
**त्वं तु जाड्यपरिपन्थिनी स्मृता**
**या विभासि सकृदर्थमण्डले ।। ५५ ।।**

हे अम्ब ! यज्जगतो जाड्यं तन्निसर्गतः स्वभावतः, जगतो जाड्यं स्वाभाविकं न तु चिद्रूपात् कारणात् समागतमिति भावः । अत्रोपपत्तिमाह—यत्पराप्रभृतीति यद् यस्मात्कारणात् पराप्रभृति जगद् भेदतोभेदेन भाति ततो जडमिति शेषः । अत्रायमनु-मानप्रयोगः—पराप्रभृतिजगत्प्रपञ्चो जडः, भेदेन प्रतीयमानत्वात्, घटादिवत्, अभिन्ने तु वस्तुनि नास्ति जडत्वम् । स्वसिद्धये तस्य स्वप्रकाशचिद्रूपत्वाभ्युपगमादिति भावः ।

एवं जगतो भेदवत्त्वेन जाड्यं प्रसाध्येदानीमभिन्नस्वप्रकाशरूपायाश्चितो जडत्वाभावोपपत्तये जगज्जाड्यविरोधित्वं प्रसाधयति—त्वं त्विति। त्वं तु जगतो जाड्यपरिपन्थिनी जाड्यविरोधिनी स्मृता स्मृतिषु बोधिता। या त्वमर्थानां निसर्गतो जडानां जाड्यमपनयन्ती अर्थमण्डले सकृद्विभासि सदा विभासि, अतो जाड्यपरिपन्थित्वात् त्वं न जडा, किन्त्वद्वितीयस्वप्रकाशचिद्रूपेति भावः ॥ ५५ ॥

जाड्यं जगतो नैसर्गिको धर्मः, तदुपादानभूता चितिशक्तिस्तु जाड्यपरिपन्थिनीत्युक्तं पञ्चपञ्चाशत्तमे श्लोके। तदुपपादयितुं तयोः स्वरूपभेदं दर्शयति—

विश्वमेतदिति याऽहमित्यसौ
नामरूपविरहेण निश्चिता।
सा त्वमम्ब ! न बिभर्षि भास्यतां
भात्मनो यदसि धर्म ईशितुः ॥ ५६ ॥

हे अम्ब ! या त्वं विश्वमेतदिति विश्वं नामरूपवदिति, अहं चितिशक्तिस्तु नामरूपविरहेण असाविति तद्भिन्नेति निश्चिता निश्चयवती, सा त्वं नामरूपविरहेण-नामरूपविरहाद् अजडा भास्यतां न बिभर्षि किन्तु स्वप्रकाशभारूपैवेति। चितिशक्तेर्भारूपत्वं तुर्यपदेन उपपादयति—भात्मन इति। यद् यस्मात् कारणात् भात्मनः स्वप्रकाशभारूपस्य ईशितुः परमेश्वरस्य त्वं शक्तिरूपो धर्मः, असि। यतो हि नहि धर्मी धर्माद् व्यतिरिच्यते, नहि वह्निरौष्ण्यप्रकाशाभ्यां व्यतिरिच्यत इति भात्मन ईशितुर्धर्मभूता शक्तिरपि भात्मिकैवेति तस्या जाड्यपरिपन्थित्वं भासकत्वं भास्यत्वाभावो जडत्वाभावश्च युक्त एवेति भावः ॥ ५६ ॥

सम्प्रति ईश्वरे स्थितस्य जगतः स्वरूपेण निर्निरुक्तिकत्वे जडत्वे भास्यत्वे च सत्यपि चिद्रूपेण कारणात्मना भारूपत्वम्, सत्त्वेन निर्वाच्यत्वमजडत्वं चेति युग्मेन प्रतिपादयन्नाह—

भावदृक् स्मृतिवियुक्तमीश्वरे
शून्यरत्नमवलम्ब्य पुद्गलम्।
निर्निरुक्तिकमिदं जगत् स्थितं
चिल्लयोर्ध्वगपथान्न तत्तथा ॥ ५७ ॥

शान्ततां भजदनाश्रितं पदं
शक्तिमात्रजगदेकसद्म यत्।
निर्मलज्वलनशौचवज्जगत्
तत्र हि त्विषि निमज्जितं त्वया ॥ ५८ ॥

हे अम्ब ! भावदृग् भावान् भोक्तृत्वेन पश्यतीति तत्तथा, सर्वपदार्थदर्शि, अनेन जीवस्य भोक्तृत्वमुक्तं भवति। स्मृतिवियुक्तं स्वऽस्वरूपस्मृतिरहितम्। पुद्गलस्थत्वाल्लक्षणया पुद्गलम्। अत्र पूर्यते गलति चेति व्युत्पत्त्या पुद्गलं शरीरम्। शून्यरत्नं जीवं भोक्तृत्वेनावलम्ब्य इदं भोग्यं निर्निरुक्तिकमनिर्वचनीयं जगद् ईश्वरे स्थितम्। चित् तु लयोर्ध्वगपथात् चिति जगतो यो लयस्तस्माद् ऊर्ध्वगो यः पन्थास्तस्मात् तं प्राप्य स्थितेति ल्यब्लोपे पञ्चमी। अतस्तद् जगत् स्वरूपेण निर्निरुक्तिकत्वेऽपि तथा न कारणात्मना निर्निरुक्तिकं न, किन्तु कारणात्मना सत्त्वेन निर्वाच्यमजडं भारूपं चेति। किञ्च, यत् शान्ततां भजत् परस्परविलक्षण-जगद्भानरूपविक्षोभरहितम् शान्तमिति यावत्। अनाश्रितं सर्वस्याश्रयत्वेऽपि स्वयमाधाररहितम्, शक्तिमात्रजगदेकसद्म चितिशक्तिमात्रस्य जगत एकसद्म केवलमाश्रयः, ईश्वराख्यं चिद्रूपं पदं धाम निर्मलज्वलनशौचवद् निर्मलज्वलनस्येव यत् शौचं शुद्धितद्युक्तम्, तत्र तस्यां त्विषि त्विड्रूपे, जगत् प्रागुपवर्णितरूपं त्वया "शक्तयोऽस्य जगत्कृत्स्नम्" इत्युक्तेः शक्तिरूपया प्रलयादौ निमज्जितं प्रविलापितं हि। हिशब्दो विद्वदनुभवप्रसिद्धिं द्योतयति। अत्र शून्यशब्देन मायाप्रमाता जीवो गृह्यते। स च चिद्रूपत्वेन जडजगदपेक्षया रत्नमिवेति तत्र रत्नत्वारोपः। प्रमातुः शून्य-रूपत्वमुक्तं प्रत्यभिज्ञाहृदये—"तन्मयो मायाप्रमाता" इति षष्ठसूत्रे, व्याख्यातं च क्षेम-राजेन—"देहप्राणपदं तावत् चित्तप्रधानमेव, शून्यभूमिरपि चित्तसंस्कारवत्येव, अन्यथा ततो व्युत्थितस्य स्वकर्तव्यानुधावनाभावः स्यात्" इति। अत्र च शून्यभूमिस्थितत्वेन जीवस्य शून्यत्वं ज्ञेयम्। पुद्गलपदस्य च शरीरे प्रयोगो बौद्धादिग्रन्थेषु बहुशो दृश्यते, तात्कालिकभाषासाम्यादत्रापि कृतः ॥ ५७-५८ ॥

आगमशास्त्रे पञ्च सिद्धा ब्रह्मा, विष्णुः, रुद्रः, ईश्वरः, सदाशिव इति ब्रह्मपञ्चक-पदेनोच्यन्ते। तेषां च शक्तयो भारत्याद्याः प्रागुक्ताः। तादृशशक्तिकृतश्च सिद्धपञ्चकस्य अर्थनिकरस्य च भास्यभासकभावो व्याख्येयपद्येऽत्र भातृभासनव्याप्तिभावपदेन निर्दिष्टः। तथा चैवं भास्यभासकभावसंबन्धे सति तत्तच्छक्तिभिस्तेन तेन रूपेण विमृष्टस्तत्तदर्थनिकरः स्वान्तिकगतस्तत्तच्छक्तिभिः स्वस्वप्रमातृतत्तत्सिद्धाभिमुखं प्रापितः सन् प्रकाशस्वभावतत्तत्सिद्धप्रकाश्यतामुपगच्छतीतीममर्थं मातृस्तुत्यङ्गत्वेन व्यक्तीकरोति—

**सिद्धशक्तिमयभातृभासन-**
**व्याप्तिभाव उपयुक्प्रकाशताम्।**
**योऽयमर्थनिकरस्त्वदन्तिके**
**त्वत्प्रमात्रभिमुखं तनोष्यसौ ॥ ५९ ॥**

हे अम्ब ! योऽयमर्थनिकरस्त्वया विमृष्टः सन् त्वदन्तिके स्थितस्तं त्वत्प्रमात्र-भिमुखं यतस्त्वं तनोषि, अतोऽसावर्थनिकरः सिद्धशक्तिमयभातृभासनव्याप्तिभावे सति

प्रकाशतामुपयुग् भवतीति पदयोजना। तथा चायमर्थः संपद्यते—हे अम्ब! योऽय-मर्थनिकरस्तत्तत्सिद्धशक्तिरूपया त्वया विमृष्टः सन् त्वदन्तिके स्थितः, तं त्वं यत-स्तत्तत्प्रमातॄणां तत्तत्सिद्धानामभिमुखं संनिकृष्टं प्रकाशनयोग्यं तनोषि, अतोऽसावर्थ-निकरः सिद्धशक्तिमयभातृभासनव्याप्तिभावे सति सिद्धानां ब्रह्मादीनां शक्तयो भारत्याद्यास्तद्विकारस्तत्कृता या भातृभासनयोरर्थसिद्धरूपयोर्व्याप्तिः साहचर्यं तस्या भावे सति, सिद्धार्थनिकरयोर्भास्यभासकभावरूपसंबन्धे सतीति यावत्। अत्र भातृपदेन भास्योऽर्थनिकरः, भासनपदेन च करणल्युडन्तेन भासकाः सिद्धा गृह्यन्ते। कर्तरि च करणत्वारोपेण भासनपदे करणे ल्युट्। प्रकाशतां प्रकाश्यत इति प्रकाशः, कर्मणि घञ्, प्रकाश्यतामिति यावत्। उपयुग् उपगतः, भवतीति शेषः।

वस्तुतस्तु नायमर्थः संगतः प्रतिभाति, प्रकाशताम् उपयुग् इति संबन्धस्यानौ-चित्यात्। कृद्योगे षष्ठ्या एव युक्तत्वात्, यथाकथञ्चित् कृतपूर्वी कटमितिवत् क्रिया-सामान्यनिरूपितकर्मत्वमादाय जाताया द्वितीयायाः पश्चाद् उपयुग् इति कृदन्तार्थयोगे जातसंस्कारस्यानिवृत्त्या साधुत्वोपपादनेऽपि तस्यागतिकगतित्वात् शिष्टप्रयोगमूल-कत्वाच्चेत्यतऽन्यथा पदयोजनयाऽर्थः कार्यः। तथाहि—हे अम्ब! योऽयं त्वया विमृष्टो-ऽर्थनिकरः, त्वदन्तिके स्थितः, असौ सिद्धशक्तिमयभातृभासनव्याप्तिभावे सति सिद्धानां उपयुक् सन् प्रकाशतां विद्योततामित्यभिप्रेत्य त्वं तमर्थनिकरं त्वत्प्रमात्रभिमुखं तनोषीति। अर्थास्तु तत्तत्पदानां त एव। अन्वयमात्रं तु भिद्यते। अत्र चान्वये प्रकाशतामिति लोडन्तक्रियापदम्।

तथा च एतदुक्तं भवति—तत्तत्सिद्धशक्तिभिर्विमृश्य स्वान्तिके स्थापितो-ऽर्थनिकरः स्वप्रमातृतत्तत्सिद्धाभिमुखीकृतस्तत्तच्छक्तिसंपादितभास्यभासकभावरूप-संबन्धमनुभूय प्रकाशस्वभावतत्तत्सिद्धप्रकाश्यतामुपगच्छतीति। अत्र च सांख्यशास्त्र-च्छाया लक्ष्यते। तथाहि—यथा सांख्यानां बुद्धिर्विषयसंनिकृष्टा सती स्वगतान् विषयान् स्वामिनि प्रतिबिम्बतया पुरुषाय प्रयच्छतीत्येवं पुरुषभोग्या पुरुषप्रकाश्याश्च भवन्तिविषयाः, तथाऽत्रापि विमर्शस्वभावा शक्तिर्विमर्शेन विषयान् स्वामिनि संनिधाप्य स्वतादात्म्यापन्नेभ्यः सिद्धेभ्यः प्रयच्छतीति सिद्धप्रकाश्या विषया भवन्तीति भावः ॥ ५९ ॥

अथेदानीं शक्त्या तत्तद्वृत्तिभिः संनिधापितस्यैव विश्वस्य द्रष्टृत्वं प्रमातृत्वं ग्राहकत्वं च शिवस्य चिद्रूपस्य, वृत्तिद्वारा तत्तद् विषयसंनिधापनमेव च शिवे पोषण-रूपोऽनुग्रह इति आगमसिद्धमर्थं प्रदर्शयितुमाह—

द्रष्टृता जगति यत्प्रकाशने
यश्च निश्चयविधौ प्रमातृता।
ग्राहकत्वमपि निश्चितग्रहे
वेत्त्यतः स तव वृत्तिपोषितः ॥ ६० ॥

हे अम्ब ! जगति जगद्विषयके प्रकाशने त्वत्कर्तृके प्रकाशने सति यद् द्रष्टृता शिवस्य दर्शनकर्तृता, अत्र लिङ्गसामान्ये नपुंसके प्राक्प्रयुक्तस्य यदित्यस्य पश्चाद् द्रष्टृता इत्यनेन सम्वन्धेन लिङ्गविरोधः। यश्च जगद्विषयके त्वत्कर्तृके निश्चय-विधौ सति शिवस्य प्रमातृतापदार्थः। वस्तुतस्तु अत्र 'या च' इत्येव पाठ्यम्। यच्च त्वत्कर्तृके त्वया निश्चिता च जगतो ग्रहे ग्रहणे शिवस्य ग्राहकत्वमपि वर्तते, अतः अस्मात्कारणात्, इदं विज्ञायते यत् स शिवस्तव वृत्तिभिर्विश्वविषयाभिः पोषितो विश्वसंनिधापनरूपानुग्रहेणानुगृहीतः सन् विश्वं वेत्तीति ॥ ६० ॥

अथेदानीं सदसदर्थमण्डलं धीमनोऽहङ्कारैः सहितं दशविधमक्षं चेति त्रयोदश-कम्, इदं द्वयमपि शिवस्वरूपभूताया अहन्ताया रूपम्। या तु शिवे ग्राह्यग्रहणयो-रुभयोर्नियामिका स्वतन्त्रताऽसौ शक्तिरूपाया अम्बाया अंश इत्यागमार्थं विवृण्वन् एतदर्थोपन्यासमुखेन मातरं स्तौति—

**आस्थितः सदसदर्थमण्डलं**
**धीमनोऽक्षवपुरस्मितामयः ।**
**यस्त्रयोदशविधः स्वतन्त्रता**
**तद्द्वयोऽहमसौ तवांशकः ॥ ६१ ॥**

य धीमनोऽक्षवपुः धीर्बुद्धिः, मनः संकल्पादिसाधनम्, अक्षाणि द्विविधानि पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि चेति मिलित्वा दश, एतानि वपुर्यस्य सः धीमनो-ऽक्षवपुः। किञ्च, अस्मितामयः अहङ्काररूपः, एवं मिलित्वा त्रयोदशविधो ग्रहण-पदार्थः। उक्तं च प्रत्यभिज्ञायाम्—

त्रयोदशविधा चात्र बाह्यान्तःकरणावली।
कार्यवर्गश्च दशधा स्थूलसूक्ष्मत्वभेदतः॥ (३।१।११

सदसदर्थमण्डलं सतां गङ्गातोयादिरूपाणामसतां च मरुमरीचितोयादीनाम्, यद्वा सतां पृथिव्यप्तेजसां मूर्तानामर्थानाम् असतोश्च अमूर्तयोर्वाय्वाकाशयोरर्थयोर्मण्डलम्, आस्थित, आश्रितः, तद्द्वयोऽपि प्रागुक्तग्राह्यग्रहणोभयस्वरूपोऽपि, अहम् अहंप्रत्यय-गोचरश्चितिरूपः शिवः। असौ ग्राह्यग्रहणोभयनियामिका स्वतन्त्रता तु, हे मातः! तव अंशकः अंश इव अंशको धर्मः, न तु वस्तुगत्या अंशः, धर्मधर्मिणोरभेदादिति ॥ ६१ ॥

शक्तिरेव तत्तदर्थमयभोग्यवस्तुसर्गद्वारा परस्मिन् पुंसि शिवे तत्तद्वस्त्वनुभव-जन्मानमानन्दं सम्पादयतीति सर्गस्थित्योः शिवानन्दमूर्तिर्भाति। यदा तु सैव भोग्यजातं जगत् चिदम्बरे प्रविलापयति तदा भोग्यस्य वस्तुनोऽभावेन स एव परः पुमान् संहृतिमयो भाति, न त्वानन्दमय इत्येवं शिवस्याप्यानन्दसम्पादिकां स्वातन्त्र्य-शक्ति शिवां स्तौति—

तत्तदर्थमयभोग्यलक्षणा-

नन्दमूर्तिरयमुत्तमः पुमान् ।

अर्पणेन जगतश्चिदम्बरे

भाति संहृतिमयः शिवे तव ॥ ६२ ॥

हे शिवे ! तत्तदर्थमयभोग्यलक्षणानन्दमूर्तिस्तत्तदर्थमयं यद्भोग्यं तेन लक्ष्यमाणो य आनन्दः स एव मूर्तिर्यस्य स तथाभूतः। अयमुत्तमः पुमान् परः पुरुषः शिवः। चिदम्बरे चिद्गगने। जगतो भोग्यजातस्य। तव त्वत्कर्तृकेण, अर्पणेन प्रविलापनेन, संहरणेनेति यावत्। संवृतिमयो भातीति योजना ॥ ६२ ॥

अथाधुना लिङ्गशरीरे सूक्ष्मत्वमवाप्य यत्पुर्यष्टकं पञ्चतन्मात्रमनोबुद्ध्यहङ्काररूपं (४९-५०) स्पन्दकारिकयोस्तद्विवृतौ चोक्तम्। कामकलाविलासस्य चत्वारिंश्याः कारिकायाश्चिद्वल्लीव्याख्यायाम्—

चितिश्चित्तं च चैतन्यं चेतनाद्वयमेव च ।

जीवः कलाशरीरं च सूक्ष्मं पुर्यष्टकं भवेत् ॥ इति ।

अमृतानन्दनाथविरचितायां योगिनीहृदयदीपिकायां चतुःपञ्चाशत्तमकारिकाव्याख्याख्याम् ।

चितिश्चित्तं ( चैत्यं ) च चैतन्यं चेतनाद्वयकर्म च ।

जीवः कला च देवेशि सूक्ष्मं पुर्यष्टकं मतम् ॥

इत्युक्तं वा यत्स्फुरति तज्जा नानाविधचित्तवृत्तिपोषिण्यो वासनास्त्वदुदरस्थिते सर्वस्मिन् पशौ सन्ति। तेषां च वासनारूपेण स्थितानामर्थानामवभासनात् त्वयि निरतिशयं सर्वज्ञत्वम्। एष एव च प्रकारः पञ्चदश्यां चित्रदीपप्रकरणे—

अशेषप्राणिबुद्धीनां वासनास्तत्र संस्थिताः ।

ताभिः क्रोडीकृतं सर्वं तेन सर्वज्ञ ईरितः ॥ १६१ ॥

इति पद्ये प्रोक्तः। एतत्सर्वमागमोक्तमर्थं मातुरुत्कर्षं चाभिदधानो मातरं स्तौति—

अष्टधा स्फुरति या पुरी शिवे

सूक्ष्मभावमुपगम्य लैङ्गिकम् ।

तज्जपौष्टकृतचित्तवृत्तयो

वासनास्त्वदुदरस्थिते पशौ ॥ ६३ ॥

हे शिवे ! लैङ्गिकं लिङ्गशरीरे भवम्। सूक्ष्मभावं सूक्ष्मत्वमुपगम्य या पुरी अष्टधा पूर्वोक्तैः प्रकारैः स्फुरति। तज्जपौष्टकृतचित्तवृत्तयस्तज्जाः पुर्यष्टकाज्जाताः पौष्टकृताः पुष्टेरिमा आधारभूताः पौष्टयः, पुष्टा इति यावत्, कृताः पौष्टकृताः पोषिताः, चित्तवृत्तयस्तत्तदर्थाकारा अन्तःकरणवृत्तयो याभिस्ताः, वासनास्त्वदुदरस्थिते सर्वस्मिन् पशौ जीवे सन्ति, अतस्तासामवभासिका त्वं सर्वज्ञाऽसीति शेषाध्याहारेण विवक्षितोऽर्थः पर्यवस्यति ॥ ६३ ॥

अथ साम्प्रतं धीमनोऽक्षप्रधानं पूर्वपद्योक्तं पुर्यष्टकं शक्तिप्रत्तमित्येतत्प्रदर्शन-पूर्वकं सर्गशरीरो विराड्भक्ष्यपदस्थः, संवृतिशरीरः ( मायाशरीरः ) शिवो भक्षकपद-स्थः, सर्वो हि सर्गः प्रलये संवृतौ लीयत इति स्थितेः। तयोर्द्वयोरपि शरीरयोरन्तः शक्तिप्रत्तधीमनोऽक्षवपुरहमात्मा जीवः स्थितः। स्थितिश्च तस्य सर्गे व्यक्तरूपेण संवृतौ चाव्यक्तरूपेणेति विवेक इत्यागमस्थितिमुपवर्णयन् जीवस्य धीमनोऽक्षरूपलिङ्गवपुः-प्रदानेन शक्तेरन्वर्थं मातृत्वं प्रदर्श्य तां स्तौति—

**सर्गसंवृतिशरीरयोर्द्वयो-**
**र्भक्ष्यभक्षकपदस्थयोस्तयोः।**
**अन्तरेवमहमास्थितः शिवे**
**धीमनोऽक्षवपुरर्पितं त्वया ॥ ६४ ॥**

हे शिवे ! सर्गसंवृतिशरीरयोर्भक्ष्यभक्षकपदस्थयोस्तयोर्द्वयोः शिवस्वरूपयोर्दर्श-नान्तरे विराडीश्वरपदवाच्ययोरन्तस्त्वयार्पितं धीमनोऽक्षरूपं लिङ्गवपुरास्थितोऽह-मात्मा जीवः, एवम् आगमोक्तरीत्या स्थित इति पदमध्याहृत्य योजना। एवं च सर्वेषा-मणूनां पूर्यष्टकाख्यसूक्ष्मशरीरप्रदत्वेन शक्तेर्जगन्मातृत्वरूपो गुणः स्तुतिनिदानमुक्तं भवतीति रहस्यम् ॥ ६४ ॥

पूर्वं मात्रा प्रत्तधीमनोऽक्षप्रधानपुर्यष्टकरूपलिङ्गवपुर्धरो जीवो भक्ष्यभक्षकयो-र्द्वयोः सर्गसंवृतिशरीरयोः शिवस्वरूपयोरन्तरवस्थित इति पुर्यष्टकस्य जीववपुष्ट्वेन रूपणं कृतम्। साम्प्रतं तु पुर्यष्टकस्य जीवप्रशास्यपुरत्वं जीवस्य च तत्रान्वर्थराजत्वं मातुः स्नेहपात्रपुत्रत्वं च, तस्य बोधकर्मणोः प्रवृत्त्यर्थं मनःसहितस्य ज्ञानेन्द्रियपञ्चकस्य कर्मेन्द्रियपञ्चकस्य च तत्सहितस्य जीवप्रवर्तकस्य मातृकर्तृकं जीववात्सल्येन पुत्रभावा-धिरोपणं चोपन्यस्यन् स्वानुग्राहिकां करुणारससागरां मातरं स्तौति—

**राजनात् प्रकृतिरञ्जनाच्च मां**
**राजसंज्ञमनु बोधकर्मणोः।**
**षट् त्वया पृथगमी प्रवर्तकाः**
**पुत्रभावमधिरोपिताः शिवे ॥ ६५ ॥**

हे शिवे ! राजनात् स्वपरप्रकाशनात्, एतमर्थमालम्ब्येति यावत्, ल्यब्लोपे पञ्चमी। 'राजृ दीप्तौ' इति धातुनिष्पन्नराजशब्दवाच्यम्। प्रकृतिरञ्जनाच्च प्रकृते-र्बुद्धिभावमापन्नाया रञ्जनमिन्द्रियद्वारा बुद्धिसंनिकृष्टानां शब्दादिविषयाणां स्वभासा बुद्धेरनुभावनं तस्माच्च। राजृधातुनिष्पन्नराजशब्दवाच्यं राजसंज्ञं मामनु मामभिलक्ष्य मम बोधकर्मणोः बोधे कर्मणि च पृथक् पृथक् प्रवर्तका अमी षड् मनःसहिता-श्चक्षुरादयो ज्ञानेन्द्रियरूपा भावा मनः सहिता एव च वाक्पाणिपादादयः कर्मेन्द्रिय-

रूपा भावा त्वया मयि पुत्रवात्सल्येन मदुपकाराय पुत्रभावमधिरोपिता पुत्रभावमवापिताः पुत्रभावेनानुगृहीता इति योजना। मनसो ज्ञानेन्द्रियात्मकत्वं कर्मेन्द्रियात्मकत्वं चोक्तं मनुना—"मनस्त्वेकादशं ज्ञेयं स्वगुणेनोभयात्मकम्" इति। अत्र सत्त्वगुणप्राधान्येन ज्ञानेन्द्रियात्मकं रजोगुणप्राधान्येन तु कर्मेन्द्रियात्मकमित्युभयात्मकमित्यर्थः ॥६५॥

न केवलं राजसंज्ञकस्य जीवस्य बोधकर्मणोः प्रवर्तकं यन्मनःसहितं ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं च पुत्रभावाधिरोपणेनानुगृह्णती त्वं पुत्रवात्सल्येन जीवस्योपकरोषि, अपि तु कादिशक्तिमतकालीशक्तिमतयोः संमत्या ऊर्ध्वाम्नाये व्यवस्थितो यो गुरुक्रमस्तस्मिन् यत्सिद्धमण्डलं तद्भावमुपगता त्वं स्वयमपि जीवस्य बोधे प्रवर्तिका सती उपकरोषि। किञ्च, राजसंज्ञकस्य पुर्यष्टकेश्वरस्य जीवस्य कर्मणि प्रवर्तको यो वर्णोत्पत्तेः प्राग् बिन्दुरूपतामापन्नश्चिद्रूपद्वादशशकलः सूर्यात्मा सोमात्मा च प्राणस्तद्भावमापन्नापि त्वमेव जीवस्य ममोपकरोषीति मातृस्नेहप्रकर्षोपन्यासमुखेन मुहुर्मातरमभिमुखीकुर्वन् स्तौति—

ऊर्ध्ववाहमयबिन्दुलक्षणः
प्राणसूर्य इह चिद्द्विषट्कलः।
तत्कलाधरतनुर्गुरुक्रमे
त्वं प्रकाशतनु सिद्धमण्डलम् ॥ ६६ ॥

हे शिवे! ऊर्ध्ववाहमय ऊर्ध्ववाहस्य विकारं चितिशक्तिपरिणामस्य प्राणस्य परिणामभूतो योऽपरो बिन्दुस्तल्लक्षणस्तद्रूपो यः, तथा चिद्द्विषट्कलः चिद्रूपा द्विषट् द्वादश कला अत्रैव षट्त्रिंशत्पद्ये व्याख्याता यस्य स चिद्द्विषट्कलः, प्राणसूर्यः सूर्यात्मा प्राणः, तदुक्तं तन्त्रालोके तृतीयाह्निके १७० श्लोकव्याख्याम्—"ऊर्ध्वे बिन्दूरविः प्राणः" इति। स त्वमेव। किञ्च, तत्कलाधरतनुः, तदित्यनेन प्राणसूर्यं इत्यत्र अप्रधानीभूतोऽपि प्राणोऽर्थवशात् परामृश्यते। स प्राणरूपः कलाधरः सोमस्तनुर्यस्या इति विग्रहे कर्मधारयगर्भो द्विपदस्त्रिपदो वा बहुव्रीहिः। एवं च प्राणचन्द्रतनुस्त्वमेवेत्यर्थः फलति। किञ्च, इह गुरुक्रमे इदं पदस्य सर्वनाम्नो बुद्धिस्थपरामर्शकत्वेन कादिशक्तिमतकालीशक्तिमतसम्मते ऊर्ध्वाऽम्नाये व्यवस्थिते गुरुक्रमे यत् प्रकाशतनु प्रकाशमात्रविग्रहम्, सिद्धमण्डलं सिद्धौघपदव्यपदेश्यं तदपि त्वमेवासीति। अत्राभिप्रेतं सिद्धमण्डलं च निर्दिष्टं श्रीविद्यार्णवतन्त्रे प्रथमे श्वासे—

"आदिनाथस्ततः परम्।
अनादिनाथः परतोऽनामयश्च ततः परम् ॥ २५ ॥
अनन्तानन्दनाथश्च चिदाभासस्तथैव च।
एते पञ्चैव सिद्धौघाः" इति ॥ ६६ ॥

पूर्वपद्ये विशिष्टं प्राणसूर्यरूपत्वं मातुः प्रसाध्य साम्प्रतं विशिष्टस्य अपानसोमस्य आनन्दात्मकषोडशकलाकर्तृत्वेन तां स्तौति—

यस्त्वधोवहननादलक्षणोऽ-
पानसोम इह भोग्यविग्रहः ।
तस्य षोडशकलाः कृतास्त्वयाऽऽ-
नन्दचक्रतनवो गुरुक्रमे ॥ ६७ ॥

हे शिवे ! यस्तु ऊर्ध्ववाहमयबिन्दुलक्षणात् प्राणसूर्याद्विलक्षणः, भोग्यविग्रहः मेयस्वरूपः, अधोवहननादलक्षणः अधोवाहमयो यो नादस्तद्रूपः, अपानसोमस्तस्येह गुरुक्रमे आनन्दचक्रतनवो विमर्शरूपाः । "विमर्शश्चान्द्रः प्रसर आनन्दचक्रम्" इति महानयप्रकाशे षष्ठ उदये । षोडशकलास्त्वया कृता इति लोकोत्तरकार्योपन्यासमुखेन मातुः स्तुतिः । अत्र अपानसोमस्य भोग्यविग्रहत्वं समर्थितं श्रीतन्त्रालोके तृतीयाह्निके—

सौराणामेव रश्मीनामन्तश्चान्द्रकला यतः ।
चन्द्रश्च नाम नैवान्यो भोग्यं भोक्तुश्च नापरम् ॥१८६॥
भोक्तैव भोग्यभावेन द्वैविध्यात् संव्यवस्थितः ।
घटस्य नहि भोग्यत्वं स्वं वपुर्मातृगं हि तत् ॥१८७॥
अतो मातरि या रूढिः साऽस्य भोग्यत्वमुच्यते ।

अत्र मातृपदेन प्रमाता विवक्षितः, ज्ञेयस्य ज्ञातृविश्रान्तित्वमेव हि ज्ञेयत्वमिति फलितार्थ इति । यद्वाऽत्र उद्देश्यविधेयभावव्यत्यासेन व्याख्यान्तरम्—तस्यापानसोमस्य षोडशकलास्त्वया आनन्दचक्रतनवो विमर्शरूपाः कृता इति । यद्वा तस्य आनन्दचक्रतनवः पञ्चदशकलाः सत्योऽपि त्वया षोडश कृताः । अयं भावः—प्राणसूर्यस्य द्वादशकलाः, तत्र प्राणस्य द्वादशकलाः प्रागुक्ताः । सूर्यस्यापि द्वादशकलाः पुराणादिप्रसिद्धाः । यद्वा प्राणस्य द्वादशकला द्वादशाङ्गुलगतिरूपा इति । अपानसोमस्य तु पञ्चदशकलास्त्रुटिरूपाः षोडशी तु कला शक्तिरूपा, सोमस्य तु पञ्चदशकलास्तिथिरूपाः षोडशी तु कला अनपायिनीति ॥६७॥

एवं प्राणसूर्ययोरपानसोमयोश्चैक्यम्, प्राणकलानां सूर्यकलानां च, अपानकलानां सोमकलानां चैक्यं प्राक् संपाद्य वासरेशकलानामुदयस्य प्रकटदिवसोदयप्रयोजकत्वं रजनीशकलानामुदयस्य च प्रकटक्षपोदयप्रयोजकत्वं लोकप्रसिद्धमेव । तथा प्राणकलानामुदयस्य गुप्तदिवसोदयप्रयोजकत्वम्, अपानकलानामुदयस्य च गुप्तक्षपोदयप्रयोजकत्वमागमशास्त्रप्रसिद्धमुपवर्णयन्, तस्य च द्विविधस्यापि दिवसोदयक्षपोदययोर्मातृकृतत्वेन मातृमाहात्म्यं प्रख्याप्य तत्कर्त्रीमम्बां स्तौति—

वासरेशरजनीशयोः कला-
श्चण्डि यावदुदयं वितन्वते ।
तावदेव दिवसक्षपोदय-
स्त्वत्कृतः प्रकटगुप्तविग्रहः ॥ ६८ ॥

हे चण्डि ! दितिजान् प्रति रजस्तमः प्रकृतीन् प्रति वा आगमशास्त्रविमुखान् प्रति वा अत्यन्तकोपने ! यावत्कालं वासरेशरजनीशयोः प्राणापानरूपयो कलाः उदयं वितन्वते विधारयन्ति तावदेव तावत्कालमेव त्वत्कृतः प्रकटविग्रहो लौकिकः, गुप्त-विग्रहश्च आगमशास्त्रमात्रप्रसिद्धः, दिवसोदयः क्षपोदयश्च भवतीति ।।६८।।

समाधौ प्राणापानयोर्निरोधे तयोः कलानां परस्परं विमिश्रणात् तयोः समरसा स्थितिर्भवति । किञ्च, तदा तत्र वेद्यवेदकयोः शिवशक्तिरूपयोर्बिन्दुनादयोरपि साम्येन स्थितिर्भवति, अस्यां च स्थितौ प्रागुक्ता प्राणापानयोः समरसा स्थितिस्तदानीमन्त-र्गता भवति, या खलु मातृमूर्तित्वेनागमेषु प्रसिद्धा, तां पुरस्कृत्य मातरं स्तौति—

देवि तद्द्वयकलाविमिश्रणात्
सामरस्यपदमेति या स्थितिः ।
बिन्दुनादसमवेद्यवेदकाऽ-
न्तर्गता हि तव मूर्तिरत्र सा ।। ६९ ।।

हे देवि ! तद्द्वयकलाविमिश्रणात् तयोर्द्वयोः सोमसूर्यरूपयोः प्राणापानयोः कलानां परस्परं विमिश्रणाद् या प्राणापानयोः स्थितिः सामरस्यपदं समरसत्वमेति, बिन्दुनादसमवेद्यवेदकान्तर्गता शिवशक्तिरूपयोर्बिन्दुनादयोस्तदानीं समयोर्यथाक्रमं वेद्यवेदकरूपयोरन्तर्गता सा प्रागुक्ता स्थितिः, अत्र समाहितसाधकविग्रहे तव मूर्तिः स्वरूपम्, हीति आगमशास्त्रप्रसिद्धौ ।। ६९ ।।

सबीजसमाधौ सर्वेषां बाह्यविषयाणां भस्मीकरणेन प्रलयवह्निरूपया ध्यातया शक्तिरूपया त्वया ग्रस्तप्राणापानमण्डला या स्थितिर्लम्भिता ध्यातुः, सा प्राणरूपे धाम्नि (अधिष्ठाने) दशसप्तधा सती आश्रितगुरुक्रमा तव मूर्तिः स्फुरति । तथाहि—प्रथमावरणे श्रीरूपायास्तव गिरिजा-रति-महीरूपास्तिस्रस्तव मूर्तयः, द्वितीयावरणे ऋद्धिरूपायास्तव समृद्धिकान्तिमदनावतीमदद्रवाद्राविणीवसुधारावसुमतीरूपाः सप्त इति संकलनया दश। चतुर्थावरणे तु ब्राह्मीरूपायास्तव माहेश्वरी-कौमारी-वैष्णवी-वाराही-माहेन्द्री-चामुण्डा-महालक्ष्मीरूपाः सप्त मूर्तयः । तस्यां स्थितौ प्रागुक्तास्तव मूर्तय आश्रितगुरुक्रमा ध्यातु-राविर्भवन्तीति यावत् । इममागमोक्तमर्थं प्रकटीकुर्वन् ध्यानोपनतां मातरं स्तौति—

लीढभानुशशिमण्डला स्थिति-
र्लम्भिता प्रलयवह्निना त्वया ।
प्राणधाम्नि दशसप्तधा सती
मूर्तिराश्रितगुरुक्रमा शिवे ।। ७० ।।

हे शिवे ! सबीजसमाधौ सर्वेषां बाह्यविषयाणां प्रविलापनेन प्रलयवह्निना प्रलयवह्निरूपया त्वया लीढभानुशशिमण्डला ग्रस्तप्राणापानमण्डला, या स्थितिर्लम्भिता प्रापिता, सा प्राणधाम्नि प्राणरूपेऽधिष्ठाने दशसप्तधा सती आश्रितगुरुक्रमा तव मूर्तिः स्फुरति । ध्यानावस्थायां प्राणापाननिरोधे बाह्यविषयप्रविलापने गुरुक्रमाश्रिता तव सप्तदश मूर्तयो ध्यातुः स्फुरन्तीत्येवं समाधौ स्वरूपप्रकाशनेन स्वाश्रितान् परानुकम्पयाऽनुगृह्णासीति कलनव्यापारवती परतत्त्वरूपा महाकाली स्तूयते ।।७०।।

उपासकस्य इष्टमहाशक्तिबोधेन संहृतिस्थितिविसृष्टिविषयाः शक्तयो महाशक्तिकृताः संभवन्ति, ताश्च यथाक्रमं सुषुप्तिस्वप्नजागरणेषु तिसृषु दशासु प्रसारिता अपि निर्बीजसमाधौ सुषुप्त्यादिधामत्रयादुत्थाय तुर्यचित्पदे महाशक्तिरूपे उपासकलये सति लीना भवन्तीत्यागमप्रसिद्धमर्थमुपवर्णयन् मातरं स्तौति—

**इष्टबोधकृतशक्तयस्त्वया**
**संहृतिस्थितिविसृष्टिसद्मसु ।**
**तुर्यचित्पदमयुः प्रसारिता**
**सुप्तितः प्रभृति धामसु त्रिषु ।। ७१ ।।**

हे शिवे ! त्वया संहृतिस्थितिविसृष्टिसद्मसु इयं विषयसप्तमी, एतद्विषयास्त्वया इष्टबोधेन साधनेन कृताः शक्तयः सुप्तितः सुषुप्तितः प्रभृति त्रिषु धामसु सुषुप्तिस्वप्नजाग्रदवस्थासु प्रसारिता अपि निर्बीजसमाधौ अवस्थात्रयोपहितात् तुर्यं चतुर्थं चित्पदं निर्बीजसमाधिरूपम्, अयुः प्राप्तास्तत्र लीना इति प्रत्नसाधकवृत्तवर्णनम् ।।७१।।

पुनरपि प्रकारान्तरेण निर्बीजसमाधिमेवोपवर्णयन् मातरं स्तौति—

**मेयमातृमितिलक्षणं कुलं**
**प्रान्ततो व्रजति यत्र विश्रमम् ।**
**तत्पदं तव तुरीयमम्बिके**
**यन्महद्भिरनुपाख्यमिष्यते ।। ७२ ।।**

हे अम्बिके ! मेयमातृमितिलक्षणं प्रमेयप्रमातृप्रमास्वरूपम्, कुलं यत्र यस्मिन् निर्बीजसमाधिरूपे तुरीये पदे, प्रान्ततः प्रान्ते प्रकर्षेणान्तकाले प्रविलयकाले विश्रमं व्रजति प्रविलीनं भवति, तत् तव तुरीयं पदं सुषुप्त्यादिधामत्रयापेक्षया चतुर्थम्, यद् महद्भिः महापुरुषैः, अनुपाख्यम् अवर्णनीयं वाचामगोचरम्, इष्यते तादृशपदस्वरूपायै तुभ्यं ध्यात्वा नमस्करोमि स्तौमि, चेति भावः ।।७२।।

यथा योगशास्त्रं चतुष्पादम् हानं हानोपायो हेयो हेयहेतुश्चेति; तथैवेदमागमशास्त्रमपि चतुष्पादम्, चर्याविद्यायोगक्रियाभेदात्। तत्र चर्या चार इति पर्यायौ। तदुक्तं महानयप्रकाशे—"इत्थं सर्वत्र कुलदर्शनेषु शाक्तो योऽन्तःक्रमेण उदयः स्थितः, स एव तत्तद्भूमिकाविशेषैश्चक्रचरीरूपमास्थितैः संस्थानविशेषेण पूजितैः स्वरूपप्रथोन्मीलनाय चर्याक्रमेणापि क्रमार्थ उपासितव्यः" (पृ० १११) इति। अन्यच्च तत्रैव प्रथमोदये द्रष्टव्यम्।

विद्या नाद इत्यप्यनर्थान्तरम्। तथाहि तन्त्रोलोके चतुर्थाह्निके १७५ श्लोके—"नादः स्वात्मपरामर्शशेषता तद्विलोपनात्" इति। तत्पदार्थस्यानात्मवस्तुवर्गस्य ध्यानेन विलोपनादपहस्तनात् स्वात्मपरामर्शशेषता नदनमात्ररूपत्वान्नाद इति। स्वात्मपरामर्शश्च ज्ञानरूपो विद्यैव। योगश्चरुरिति एकोऽर्थः। तथाहि—निर्बीजसमाधौ शक्तिश्चरुरूपेणात्मानं कुलेशाने परमशिवे समर्पयति तदुक्तं श्रीराजिकायां महानयप्रकाशे चतुर्थ उदये—

भुक्त्वा विश्वमशेषं तृप्तिं न यदा गतः कुलेशानः।
देव्या तदा स्वदेहश्चरुरत्र निवेदितः कुलाधिपतेः॥ इति।

क्रिया च मुद्रैव। तदुक्तं योगिनीहृदये नवचक्रनिरूपणावसरे—

क्रियाशक्तिस्तु विश्वस्य मोदनाद् द्रावणात्तथा। मुद्राख्या·······॥५७॥

तदेवं चार-राव-चरु-मुद्रारूपैश्चतुर्भिः प्रकारैर्भिन्नक्रमैर्मातुरुपासनमागमशास्त्रे प्रसिद्धम्। तासु च चतुर्विधासु उपासनासु मातुः क्रमभेदेनाकृतिः स्फुटा भवतीत्यागमप्रसिद्धमर्थमनुवर्णयन् मातरं स्तौति—

**चाररावचरुभिर्विभेदितै-**
**र्मुद्रया च यदुपासनं तव।**
**तद्वशेन भजते परम्परां**
**तावकी क्रमतया स्फुटाकृतिः॥ ७२॥**

हे कालकर्षिणि! विभेदितैः शास्त्रे प्रकारभेदोपवर्णनेन पृथक्कृतैः, चाररावचरुभिः चर्याविद्यायोगाख्यैः। अत्र रावो नादः। मुद्रया क्रियाशक्त्या च। यत्तवोपासनं तद्वशेन क्रमतया स्फुटा तत्तद्भेदभिन्नतया स्पष्टा, तावकी त्वदीया, आकृतिः स्वरूपम्। परम्पराम् गुरुशिष्टपरम्परारूपं सम्प्रदायं भजते आश्रयत इति। चर्यादिभेदभिन्नासु गुरुशिष्यपरम्परास्वनुष्ठीयमानासु उपासनासु भिन्ना भिन्ना तवाकृतिः क्रमेण स्फुटा भवतीति भावः॥ ७२॥

परापश्यन्तीमध्यमावैखरीरूपे वाक्चतुष्टये शक्तिमूर्तिमण्डलरूपे या मङ्गलाशक्तिरूपा प्रधानीभूता परावाक् स्फुरति, सा प्रकाशचक्रगा सती नादमूर्तिः। सुखमानन्द

इत्यनर्थान्तरम्। आनन्दचक्रगा च बिन्दुमूर्तिः, वृन्दचक्रगा च लिपिमूर्तिः, यथायथं नादमूर्तिर्बिन्दुमूर्तिश्च पश्यन्तीरूपा मध्यमारूपा च सती मनसा ध्यानेन साधकैरिज्यते। वैखरीरूपा लिपिमूर्तिश्च यन्त्रबीजरूपा यन्त्रादौ बाह्योपचारैः पूज्यत इत्यागमशास्त्रप्रसिद्धमर्थमुपन्यस्य स्वरूपोपवर्णनमुखेन मातरं स्तौति—

मङ्गले त्वमसि वाक्चतुष्टये
या परा स्फुरति मूर्तिमण्डले।
सा प्रकाश-सुख-वृन्दचक्रगा
नादबिन्दुलिपिमूर्तिरिज्यसे ॥ ७४ ॥

वाक्चतुष्टयस्य स्थानं स्वरूपं चोक्तम् "परा वाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता। हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥' इति। प्रकाशचक्रानन्दचक्रस्वरूपे तु महानयप्रकाशे षष्ठोदये ७८ पृष्ठे उक्ते। वृन्दचक्रमपि तत्रैव सप्तमोदये ८४ पृष्ठे उपदर्शितम्। पद्यार्थस्तु—हे मङ्गले! वाक्चतुष्टये तद्रूपे। मूर्तिमण्डले शक्तीनां मूर्तिमण्डलरूपे या परावाक् स्फुरति, सा त्वमसि। किञ्च, सा परा वाक् प्रकाशानन्दवृन्दरूपचक्रत्रयगता सती पश्यन्तीरूपा नादमूर्तिः, मध्यमारूपा बिन्दुमूर्तिः, वैखरीरूपा लिपिमूर्तिर्यथासंभवं मनसा बाह्योपचारैर्वा इज्यसे पूज्यसे इति॥ ७४॥

इति कालिदासकृतचिद्गगनचन्द्रिकायां द्वितीयो विमर्शः सटीकः समाप्तः॥

चिद्रूपस्य शिवस्य आद्यस्पन्दरूपा शक्तिमूर्तिः प्रलयावसरे यस्मिन् शिवे कृताश्रया लयं व्रजति, शक्तिलयाधिष्ठानत्वेऽपि स्वयं लयशून्यं तं शिवं निर्बीजसमाधौ साक्षात्कृत्य साधको जनो विषयावभासरूपस्य शक्तिचक्रस्य तदानीं शिवे लयेन शक्तिचक्रप्रयुक्ताज्जन्मनः प्रमुक्तो भवतीत्यागमार्थमुपन्यस्यन् शक्तिलयाधिष्ठानीभूतशिवोपासनोपन्यासमुखेन शिवं स्तुवन् तद्व्याजेन शिवाश्रितां शक्तिं स्तौति—

आद्यचित्प्रसरमूर्तिरम्बिके
पीततां व्रजति यत्कृतास्पदा।
अक्षयं शिवमुपास्य तज्जनः
शक्तिचक्रजनितः प्रमुच्यते॥ ७५॥

हे अम्बिके! आद्यचित्प्रसरमूर्तिः चित आद्यस्पन्दरूपा शक्तिमूर्तिः, यत्कृतास्पदा यस्मिन् शिवे कृताश्रया, पीततां प्रलयकाले शिवे लीनतां व्रजति। अक्षयं शक्तिलयाधिष्ठानत्वेऽपि स्वयं लयशून्यम्, तं शक्तिलयाधिष्ठानभूतम्, शिव-

मुपास्य निर्बीजसमाधौ साक्षात्कृत्य साधको जनः, शक्तिचक्रजनितो विषयावभासरूप-शक्तिचक्रप्रयुक्तजन्मनः, यद्वा, शक्तिचक्रं योनिचक्रं तज्जन्मन इत्यर्थः । तदाहु-रागमिकाः—"बीजयोन्यात्मना स्थिता" इति । प्रमुच्यते प्रकर्षेण पुनर्जन्मान्तरप्राप्ति-राहित्यरूपेण मुच्यत इति । जन्मनो मुक्तिश्च प्रलयादावपि भवतीति प्रमुक्तिपदेन जन्मान्तरसम्बन्धराहित्यरूपं विदेहकैवल्यं विवक्षितमिति ॥ ७५ ॥

यदा तु सर्गावसरे सर्गाभिमुख्यं भजन्त्या आद्यचित्स्पन्दरूपया शक्त्या शिवस्य नीरक्षीरवत् संश्लेषरूपं सामरस्यम् तदा संकल्परूपं सर्गानुगुणं वीर्यं शक्तेरुल्लसति । स एष शक्तेरुत्थितः संकल्परूपः शक्तिपीठः, एष एव च स्रष्टा जगतो महान् महत्तत्त्व-रूपो ब्रह्मेत्यागमार्थोपन्यासमुखेन मातरं स्तौति—

> **अम्ब ! शक्तिवपुषा त्वयोन्मिष-**
> **द्रूपया समरसः शिवो यदा ।**
> **यत्तदोल्लसति वीर्यमूर्जितं**
> **पीठ एष हि महांस्त्वदुत्थितः ॥ ७६ ॥**

हे अम्ब ! जगत्सर्गार्थमुन्मिषद्रूपया सव्यापारया शक्तिवपुषा आद्यचित्स्पन्द-रूपशक्तिविग्रहया त्वया सह यदा शिवो नीरक्षीरवत् समरसः सर्गावसरे साम्येन अविभाव्य विभागवत्तया संश्लिष्टो भवति, तदा तदूर्जितं बलवत्, सर्गानुगुणं संकल्परूपं वीर्यं शक्तेरुल्लसति शक्तित उद्गच्छति । एष संकल्पः, त्वदुत्थितः त्वत्तः संभूतः, पीठो हि पीठ एव महान् महत्तत्त्वरूपो ब्रह्मा जगत्स्रष्टा पुराणेषु सांख्यदर्शने च प्रसिद्धः । महत्तत्त्वस्य ब्रह्मरूपत्वं तु—"मनो मतिर्महान् ब्रह्मा" इत्यादिपदैराख्यातं तत्र तत्रोपनिषदां शाङ्करभाष्यादौ । दुर्गासप्तशत्यामपि—"निर्गत्य दर्शने तस्थौ ब्रह्मणो-ऽव्यक्तजन्मनः" इत्यत्र ब्रह्मणोऽव्यक्ताज्जन्म उक्तम् । अव्यक्तं च मूलप्रकृतिरेव । ततो जातं तु महत्तत्त्वमिति । तच्च स्वकार्यपरम्परया जगत्स्रष्टृ । शक्तिसंकल्पस्य वीर्यत्वं तु मनुनाऽप्युक्तप्रायम् । तथाहि—"अप एव ससर्जादौ तासु बीजमवासृजत्" इत्यादि । अत्र बीजं भगवतः सकल्प एव मायावृत्तिरूप इत्यवधेयम् ॥ ७६ ॥

याऽक्षया स्फुरणशक्तिश्चितिरूपा, सा क्षित्यादिभूतसूक्ष्मपञ्चके निविष्टा महत्तत्त्वरूपा—"मनो मतिर्महान् ब्रह्मा" इत्यादिपदव्यपदेश्याऽग्रिमं स्फुरणशक्तिरूपायाः प्रकृतेराद्यं कार्यरूपं संकल्पप्रधानं वीर्यं भवति, स्थूलसमष्ट्युपहितस्य विराजो देह-साधनत्वात् । सा च महत्तत्त्वरूपेण विकृता स्फुरणशक्तिरूपा प्रकृतिः पीठचक्रस्य चरा-चरात्मकस्य विराड्विग्रहरूपस्य स्थूलक्षित्यादिपञ्चकस्य प्रसूर्भवतीत्यागमसंप्रदाय-प्रसिद्धमर्थमुपन्यस्यन् मातरं स्तौति—

या शिवे स्फुरणशक्तिरक्षया
क्ष्मादिपञ्चकनिविष्टभातनुः ।
सा महद् भवति वीर्यमग्रिमं
यन्मयी त्वमसि पीठचक्रसूः ॥ ७७ ॥

हे शिवे! इति संबोधनम्। यद्वा शिवे इति सप्तम्यन्तम्। शिवे चिद्रूपे याऽक्षया स्फुरणशक्तिः, सा क्ष्मादिपञ्चकनिविष्टभातनुः सूक्ष्मक्ष्मादिपञ्चके निविष्टचित्शरीरा सती जगत्सर्गानुकूलसंकल्परूपाग्रिमवीर्यवन्महद् भवति। यन्मयी यादृशे महत्तत्त्वरूपेण विकृता त्वं स्थूलस्य चराचरात्मकस्य विराट्शरीररूपस्य जगतः पीठचक्ररूपस्य प्रसूरसीति। कायस्य व्यष्टिरूपस्य समष्टिरूपस्य च पीठत्वं महानयप्रकाशे चतुर्थे उल्लासे २ पद्यटीकायामुपपादितं तत एव द्रष्टव्यम्। इयं चागमिकी प्रक्रिया सांख्यप्रक्रियातो भिद्यते। सांख्या हि महत्तत्त्वादहङ्कारोऽहङ्कारात्तन्मात्राणि तन्मात्रेभ्यः स्थूलभूतानीति मन्वते। अत्र तु तन्मात्रोपाधिकान्महतः स्थूलसृष्टिरुक्ता। वेदान्तप्रक्रियायास्तु अत्र संवादः। तथाहि—वेदान्ते सूक्ष्मशरीरोपाधिकाद् हिरण्यगर्भाद् ब्रह्मणः स्थूलसृष्टिरुक्ता। पुराणेष्वपि ब्रह्मण एव स्थूलसृष्टिरिति पुराणेभ्योऽपि नास्य विसंवाद इति ॥ ७७ ॥

या शिवेऽक्षया स्फुरणक्तिः सूक्ष्मभूतपञ्चके निविष्टा सती महद्रूपतां प्राप्ता सती जगद्रूपपीठचक्रसूः पूर्वमुक्ता, सा मध्ये पीठचक्रनिकरैकधर्मिण्यपि पीठचक्रनिकरस्य समन्ततः स्थिता पीठचक्ररहिता सविकल्पसमाधौ लक्ष्यते। निर्विकल्पकसमाधौ उद्यमेन तु पीठचक्रनिकरस्य प्रविलये सति तद्व्यवधानशून्यचित्तैः सद्भिस्तत्र समाधौ पीठचक्ररूपप्रतिबन्धकराहित्येनाप्रतिबद्धाऽऽविर्भावा सर्वात्मना लक्ष्यत इत्यागमसाम्प्रदायिकानामनुभवसिद्धमर्थमुपन्यस्यन् तन्मुखेनाम्बां संबोध्य स्तौति—

पीठचक्रनिकरैकधर्मिणी
त्वं स्थिता च सततं समन्ततः ।
सद्भिरुद्यमनिरन्तरात्मभि-
र्लक्ष्यसेऽम्ब निरवग्रहोदया ॥ ७८ ॥

हे अम्ब! महद्रूपेण पीठचक्रसूस्त्वं पीठचक्रनिकरैकधर्मिणी पीठचक्रनिकरस्य समन्ततश्च पीठचक्ररहिता स्थिता त्वं सविकल्पसमाधौ सततं समन्ततो लक्ष्यसे। निर्विकल्पकसमाधौ तु उद्यमनिरन्तरात्मभिर्निर्विकल्पकसमाधिविषयकोद्यमेन पीठचक्रप्रविलये सति पीठचक्रव्यवधानशून्यचित्तैः सद्भिर्निरवग्रहोदया पीठचक्ररूपव्यवधायकप्रविलयेन अप्रतिबद्धाविर्भावा सर्वात्मना लक्ष्यस इति ॥ ७८ ॥

अथ विविधेनोच्चारणेन वीरतां (शिवत्वं) प्रपद्यमानो योऽयमक्षरगणस्तं तन्त्रागमशास्त्रप्रसिद्धं त्रिधामकं बिन्दुनादबीजरूपेणावस्थात्रयवन्तमन्त्यमीशं मतभेदेन बिन्दुरूपं नादरूपं वा प्रविलयकाले प्रपद्यते। तस्या अन्त्येशरूपताप्रपत्तेः कारणीभूता चित्कलारूपा वर्णशक्तिपदवी नाम वर्णशक्तिरूपा त्वमेवासीत्यागमोक्तमाहात्म्यख्यापनेन मातरं स्तौति––

**ईरणेन विविधेन वीरतां**
**योऽयमक्षरगणः प्रपद्यते।**
**अन्त्यमीशमसि तं त्रिधामकं**
**वर्णशक्तिपदवी च चित्कला ॥ ७९ ॥**

अत्र विविधेनेरणेनेत्यनेन वीरपदस्य व्युत्पत्तिः प्रदर्शिता। इदं पद्यमवतारणग्रन्थेनैव व्याख्यातमिति न पुनस्तत्र प्रयत्यते ॥ ७९ ॥

या वह्निरूपा प्राणापानरूपा च चिच्छक्तिरूपाऽनाहताम्बरविसर्पिणी (अनाहतनादसमुत्थानाधिष्ठानाम्बरविहरणशीला) कला, सा बाह्यपीठतः प्रभृत्यनाहताम्बरपर्यन्तं बाह्यैरुपचारैर्मानसैश्च यावदर्च्यते, तावदेव तन्मयी (अनलार्कशशिविग्रहा) सती उन्मिषति ध्याने समाधौ आविर्भवतीत्येतमागमोक्तं साधनमार्गमुपन्यस्यन् शक्तिस्वरूपोपन्यासमुखेन मातरं स्तौति–––

**याऽनलार्कशशिविग्रहा कला-**
**नाहताम्बरविसर्पिणी शिवे।**
**पीठतः प्रभृति यावदर्च्यते**
**तावदुन्मिषति तन्मयी सती ॥ ८० ॥**

अत्र शिवे! इति संबोधनम्। उन्मिषतीत्यस्य स्थाने उन्मिषसीति पाठान्तरं साधु, शिवे इति संबोधनेन युष्मत्पदार्थावगत्या मध्यमपुरुषौचित्यात् ॥ ८० ॥

अकारादयः षोडशस्वरा बीजाक्षररूपत्वाद् मनवो मन्त्ररूपाः, जगत्सर्गस्थितिहेतुत्वेन शक्तिरूपत्वेन च मातृकारूपाः, शक्तिरूपत्वेन च लयहेतवोऽपि। ते चाकारस्यैव जृम्भां (विस्तारम्) प्रापिताः, शाक्तैश्च साधकैः साधनपद्धतिसमालम्बनेन प्रदीपिताः सन्तो मनवो मन्त्ररूपाः। तैर्वर्णान्तराणां ग्रासो न तु तेषां वर्णान्तरैरित्यग्रासेन नित्यं तेषां निरवग्रह उदयः, तैरेव च सर्गस्थितिलयप्रथा, त एव च शक्तिरूपाः शक्त्यासनरूपाश्चेत्यागमोक्तमर्थमुपन्यस्य षोडशस्वरमाहात्म्यमुखेन मातृमाहात्म्यं प्रकटयन् मातरं स्तौति—

निर्जनस्थितिलयप्रथात्मिकेऽ-
ग्रासनित्यनिरवग्रहोदयः ।
जृम्भितस्त्वदनुपाक्षदीपितो
द्व्यष्टकं मनुरुमे ! तवासनम् ॥ ८१ ॥

हे निर्जनस्थितिलयप्रथात्मिके ! उमे ! अग्रासनित्यनिरवग्रहोदयो जृम्भितस्त्वदनुपाक्षदीपितो द्व्यष्टकं मनुस्तव आसनमिति संबन्धः ।

अत्र निःशब्दश्च नितरामर्थे, तेन नितरां जननं निर्जननं निर्जननम् सृष्टिरिति यावत् । प्रथापदेन च भानमुच्यते । अग्रासनित्यनिरवग्रहोदयः अग्रासेन नित्यं निरवग्रहः अप्रतिबद्ध उदयो यस्य स तथाभूतः । जृम्भितः अकारस्य जृम्भां विस्तारं प्रापितः । त्वदनुपाक्षदीपितः अक्षं नेत्रमुपगत उपाक्षो द्वेष्यः, द्वेष्यो हि अक्षिगत उच्यते, स न भवतीत्यनुपाक्षःस्निग्धः, तव येऽनुपाक्षाः स्निग्धाः, भक्ता इति यावत्, तैर्दीपितः साधनमार्गेण वीर्यवत्कृतः । द्व्यष्टकं द्विरावृत्तमष्टकं द्व्यष्टकं षोडशस्वराः । तव आसनम्, आस्यतेऽस्मिन्नित्यासनम्, आधारपीठ इति यावत् ॥ ८१ ॥

इन्द्रियवृत्तेः स्वविषयीभूतभावसंहारः श्मशानम् । महानयप्रकाशे ४ उदये तृतीयपद्ये ५१ पृष्ठे—"बहिस्तत् करवीरस्वरूपम्" इत्युक्तम् । अयमर्थः—बहिस्तत् सर्ववृत्तीनामुपशमनं करवीराख्यश्मशानस्वरूपमिति । एवं स्थिते साम्प्रतं यथाक्रमं सविकल्पनिर्विकल्पसमाधिरूपश्मशानकरवीराख्यश्मशानरूपतया मातृमाहात्म्यप्रख्यापनमुखेन मातरं स्तौति—

नित्यभातरुचि विश्वघस्मरं
दुर्निरीक्षमपि सन्निकेतनम् ।
त्वं श्मशानमसि वीरहृद्गतं
क्षीणवृत्ति करवीरमिज्यसे ॥ ८२ ॥

हे उमे ! त्वं वीरहृद्गतं—सविकल्पकसमाधिकाले साधकहृद्गतं श्मशानमसि। श्मशानपदार्थः पूर्वमुक्तः । इन्द्रियविषयसंहारस्याभावरूपस्याधिष्ठानरूपत्वेन शक्तिरूपत्वम् । तच्च श्मशानं चितिशक्तिरूपतया नित्यभातरुचिस्वप्रकाशचिद्रूपम्, शक्तिशक्तिमतोरनतिरेकात् । किञ्च, विश्वघस्मरम् विश्वलयाधिष्ठानत्वात् । दुर्निरीक्षमपि सकलप्रमाणागोचरीभूतमपि न शून्यमपि तु सन्निकेतनं स्वतः सिद्धतया सद्रूपं निकेतनं विश्वविभ्रमाधिष्ठानम् । एतेन शून्यवादो निरस्तः निरधिष्ठानायाः शून्यत्वकल्पनाया अनुपपन्नत्वादिति । किंच, निर्विकल्पकसमाधिकाले सर्ववृत्तीनां संक्षयात् क्षीणवृत्ति करवीरं श्मशानं त्वमिज्यसे साधकैः स्वप्रकाशात्मरूपत्वेनानुभूयसे । इयमेव तदा तव पूजा, अन्यस्यास्तदानीमसंभवादिति । यद्वा ईर्यसे' इति पाठो भाति । 'उच्यसे' इति तदर्थः । एवं सति श्मशानमसीत्यनेन करवीरमीर्यस इत्यस्य साम्यं भवति ॥ ८२ ॥

अथ साम्प्रतं प्रागनुक्तागमार्थोपन्यासमुखेन मातृस्तुतिश्चिकीर्षिता। स चायमागमार्थः—क्षेत्रपाल आत्मा। तदुक्तं महानयप्रकाशे चतुर्थ उदये चतुर्थश्लोकव्याख्यानावसरे—"क्षेत्रं तस्य पालकोऽधिष्ठाता आत्मा"। यद् गीतम्—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।

एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः॥ (गीता १३।१ इति)।

तस्य च पश्यन्तीमध्यमा-वैखरीरूपास्तिस्रो भूमिकाः, परां वाचमादाय तु चतस्रः। स च क्षेत्रपालरूप आत्मा तुरीयवाग्रूपः। स चानाहतनादनदनात् पश्यन्तीरूपः। विकल्पकल्लोलितत्वान्मानसव्यापारेण जगत्कलयन् चालयतीति जगच्चालको मध्यमारूपः। चतुष्षष्टिसंख्यानां वर्णानां विखराक्षराणां प्रयोक्ता वैखरीरूप इति। तुरीयपरावाग्रूपस्तु वेद्यवर्गग्लपनस्थानमिति। एतत्सर्वं तत्रैव महानयप्रकाशे स्फुटीकृतम्। स चात्मा सर्गोन्मुखः पश्यन्त्यादिक्रमेण वैखरीरूपतां प्रतिपद्यते। संहारोन्मुखश्च वैखर्यादिक्रमेण सर्ववेद्यवर्गग्लपनस्थानपरावाग्रूपतामापद्यते। स च सर्ववेद्यसंहाररूपसमाधिकालेऽन्तःस्थितः, बहिःस्थितश्च संकेतकस्थाने निर्विकल्पकसमाधिकाले स्वीयपरकीयप्रत्यूहपरिरक्षापर इति क्षेत्राधिपो बलवत्तरोऽन्तर्बहिश्च पीठवर्ती पूज्यः। स च क्षेत्रपाल आद्यशक्तिविमर्शरूपः, ज्ञानेच्छाक्रियारूपशक्तित्रयसंपन्नत्वात्। किञ्च, आद्यशक्तिविमर्शलब्धसत्ताक इति आद्यशक्तिविमर्श इत्युच्यते, हेतुहेतुमतोरभेदात्। किञ्च, आद्यैव शक्तिरनुपाधिरित्यनाख्येयेति चोच्यते। अतः क्षेत्रपाल आत्माऽप्यनुपाधिरनाख्य इति चोच्यते। इदं सर्वं महानयप्रकाश तृतीय उदये पञ्चमषष्ठश्लोकव्याख्यावसर उक्तं तत एवावधेयम्। व्योमशब्देन चागमेषु चिद्गगनमुच्यते। तच्च न भूताकाशवत् शिवरूप आधारे स्थितम्, किन्तु निराश्रयम्। विश्वसंहाररूपे निरोधसमाधौ चाद्यशक्तिविमर्शरूपस्य क्षेत्रपालस्य शिवेन सह सामरस्यापत्तिर्भवतीत्यागमिकः सिद्धान्तः प्रथमपद्यस्य त्र्यशीतितमस्य मूलभूतः।

चितिशक्तिरूपाया वामेश्वर्याः खेचरी-गोचरी-दिक्चरी-भूचरीरूपाश्चतस्र अवस्थाभेदाः, ताश्च क्रमेण प्रमातृ–अन्तःकरण–बहिष्करण–भावस्वभावाः शक्तयः। अन्याश्च—

डाकिनी राकिणी चैव लाकिनी काकिनी तथा।
शाकिनी हाकिनी चैव क्रमात् षट्पङ्कजाधिपाः॥

इति षट्चक्रनिरूपणटीकायामुक्ताः। षट्चक्रशक्तयस्तत्र खेचर्यादिकाः। हाकिनीं हित्वा शाकिन्यन्तः गुरुक्रमः। सृष्टितः प्राक् संहाराच्च परत्र अनाख्यो नाम विक्रमः, विशिष्टः क्रमो विक्रमः। तदुक्तं महानयप्रकाशे नवम उल्लासे—

तत्सृष्टिस्थितिसंहाररूपे यो यः क्रमः स्थितः।
तत्र तत्राक्रमत्वेन अनाख्यं प्रथमं स्मृतम्॥ २३॥

एतच्च अनाख्यचक्रमपि क्वचिदुच्यते। तद् यथा महानयप्रकाशे नवम उल्लासे—

अनाख्यचक्रप्राधान्यात् पूजनीयतया स्थिता ॥ १८ ॥ इति ।

अनाख्यचक्रं यद्यप्यक्रमम्, तथापि क्रमरूपम् । तदुक्तं तत्रैव—

अनाख्यमक्रममपि क्रमात्मैव तदाश्रयात् ॥ १९ ॥ इति ।

क्रमलक्षणं तु महानयप्रकाशे तृतीय उदये ६ श्लोकव्याख्यावसरे—

भेदैश्चतुर्भिरेकस्यां शक्तौ यत्क्रमणं क्रमात् ।
सृष्टिस्थितिलयानाख्यैः स क्रमः परिकीर्तितः ॥ इति ।

चितिशक्तेरुदयस्त्रिधेति प्रत्येकं सृष्टिस्थितिसंहारास्त्रिधा भिद्यमाना नवत्वं प्रतिपद्यन्ते। एतच्चोक्तं महानयप्रकाशे तृतीय उदये ३ श्लोकव्याख्यानावसर इति तत एव द्रष्टव्यम् । एवं रीत्या प्रागुक्तं गुरुक्रमं सृष्टितः प्रभृत्यनाख्यान्तम् विक्रमं च चितिशक्तेरुदयो व्याप्नोतीत्यागमाभ्युपगमो मूलं चतुरशीतितमस्य द्वितीयपद्यस्य । तदेतत्सर्वमुपन्यस्यन् मातृमाहात्म्यप्रख्यापनमुखेन स्तौति युग्मेन—

**विश्वसंहरणलीलयोत्कटं**
**व्योम्नि शश्वदुदितं निराश्रये ।**
**क्षेत्रपालमनुपाधिकोल्लसत्**
**त्वद्विमर्शमभिनन्दतीश्वरे ॥ ८३ ॥**

**खेचरीप्रभृतिरम्ब शाकिनी-**
**प्रान्त एष तव यो गुरुक्रमः ।**
**सृष्टितश्च यदनाख्यविक्रमं**
**चक्रमे तदखिलं तवोद्गमः ॥ ८४ ॥**

इदं पद्यद्वयमपि प्रतीकोपन्यासमुखेनैव व्याख्यातप्रायमिति न पुनः प्रयत्यते ॥ ८३–८४ ॥

अथेदानीं सनिकेतनिर्निकेतभेदेन पदद्वयं दर्शयन् सनिकेतपदाधिष्ठातृतया तत्र कार्यरूपेणोल्लसन्तीमम्बां सर्गस्थित्यनुकूलशक्तिरूपां स्तौति—

**तद्द्वयोल्लसितमम्ब ! वर्तते**
**यत्र नित्यमिह सामरस्यतः ।**
**सन्निकेतपदनित्यजृम्भितो-**
**ल्लास एष तव मे पुरस्सरः ॥ ८५ ॥**

हे अम्ब ! यत्र यस्मिन् । इह आगमप्रसिद्धे निर्निकेतपदे शिवरूपं शक्तिरूपं चेति द्वयमपि नित्यं सामरस्यतो वर्तते । तद् निर्निकेतं पदम् । द्वयोल्लसितं तच्छक्ति-द्वयोल्लासवत् । तत्तु तवानुकम्पामात्रसाध्यनिर्विकल्पसमाधिमात्रगम्यम् । एष प्रत्यक्षः । तव सन्निकेतपदनित्यजृम्भितोल्लासस्तु सन् विद्यमानो निकेतोऽधिष्ठानं यस्य पदस्य तत् सन्निकेतं निर्निकेतरूपपदाधिष्ठानवत् तदुदितत्वात्तदाश्रितमिति यावत् । यत्पदं तस्मिन् जगत्सर्गस्थित्युपलक्षिते पदे नित्यं जृम्भितः प्रवृद्ध उल्लासो विकासः, मे मम पुरस्सरः प्रपञ्चरूपेण पुरः स्थितः । अत एतद्दर्शनजनितविस्मया-विष्टमनाः श्रद्धया त्वां प्रणतोऽस्मि ॥८५॥

अथेदानीं निर्निकेतपदावभासकं निर्विकल्पसमाधिं प्राणायामसाध्यत्वादध्वरो-त्सवत्वेन निर्दिदिक्षन् तदध्वराराध्यां शिवसामरस्यापन्नशक्तिरूपामम्बां स्तौति—

**भोग्यभोक्तृरुचिघस्मरं मनः**
**पञ्चवाहमयमुच्यते तमः ।**
**निर्निकेतपदमेति यत्र ते**
**कोऽप्यसौ सततमध्वरोत्सवः ॥ ८६ ॥**

हे अम्ब ! यत्र यस्यां निर्विकल्पकसमाधिदशायां भोग्यभोक्तृरुचिघस्मरं भोग्यभोक्त्रोर्या रुचि तद्घस्मरं तद्विरहितं भोग्यभोक्त्राकारवृत्तिशून्यमिति यावत् । मनः पञ्चवाहमयं पञ्चप्राणमयं भवन्निर्निकेतपदं निरधिष्ठानं पदं शिवशक्तिसामरस्यरूपमेति । तस्यां दशायां तम अज्ञानमुच्यते, निर्विषयत्वात् । किञ्च, निर्विकल्पकः समाधिर्यावत्कालं तिष्ठति तावत्कालं सततं ते कोऽप्यपूर्वः, अध्वरोत्सवो यज्ञरूप उत्सवः । तत्र प्राणायामस्य होमरूपत्वेनाध्वरत्वम् । तदुक्तं गीतासु—

अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ (४।२९) ॥ ८६ ॥

अथ शक्तेराद्यः परिणामः प्राण इत्यागमसिद्धान्तमनुसृत्य मातरं स्तौति—

**पूर्णसत्त्वरजआदिहृद्गता-**
**धिष्ठिता त्वखिललोकवाहिनी ।**
**पञ्चधा वहसि शाश्वतोदया**
**सिद्धसिन्धुरिव सिद्धसेविता ॥ ८७ ॥**

अयं श्लोकः समष्टिरूपं विराजः शरीरं व्यष्टिरूपं चास्माकं शरीरमादाय योजनीयः, विराट्शरीरेऽपि पञ्चप्राणानां संभवात् । तथाहि—तत्रापि सन्ति

पञ्च प्राणाः, प्रवह-आवह-विवह-संवह-परिवह नामभेदात्। किञ्च, विश्व-स्यैव गुणत्रयात्मकप्रकृतिकार्यत्वेन प्राणस्यापि तत्त्वम्। एवं च यथायथं सात्त्विक-राजसतामसैराहारविहारादिभिः प्राणस्य सात्त्विकादिगतिसंभवः। एवं च प्राणस्य सात्त्विकगतिसिद्धये सात्त्विकाहारविहारसेवा यत्नतः संपाद्येत्यादिरर्थोऽत्र सूच्यते। शब्दार्थस्तु—हे अम्ब ! पूर्णेन सत्त्वरजआदिना गुणत्रयेण हृद्गतेन अधिष्ठिता पञ्चवृत्तिप्राणरूपा त्वमखिले लोके लोकत्रयात्मके विराट्शरीरे मनुजादिशरीरे वा वाहिनी स्वभावतो वहन्ती शाश्वतोदया अनस्तमितप्राणदेवतारूपेणोपनिषत्सु श्रुतत्वेनाहर्निशं यावल्लयं वाऽविच्छेदेनोदयमाप्नुवती सिद्धसिन्धुरिव गङ्गेव प्राणायाम-काले सिद्धैः सेविता त्वं प्राणापानसमानोदानव्यानभेदेन पञ्चधा वहसि प्राणसारूप्य-मापन्ना सतीत्येवं व्यष्टिसमष्टिविधारकत्वेन प्राणरूपतयाऽत्र अम्बायाः स्तुतिः ॥८७॥

शक्तिसामरस्यापन्नस्य विश्वात्मकस्य परमगुरोः शिवस्य प्राणाध्वनिरोधे विश्वलयरूपः समाधिः, सर्गादौ सृज्यमान प्राण्यदृष्टवशात् शक्तिसमुल्लासेन परम-शिवात्मकगुरुवक्त्ररूपचित्पथान्मतिपूर्वकप्राणाध्वनः समुल्लासे व्युत्थानरूपो जगत्सर्गः। एष च प्राणाध्वनः समुल्लासः शक्तिसमुल्लास एवेत्येतत् सर्वमागमोक्तमर्थं विवक्षन् कार्योपन्यासमुखेन मातरं स्तौति—

> **व्योमयानमतिमत्पुरस्सरः**
> **पञ्चधा प्रसर एष तावकः ।**
> **जृम्भमाण गुरुवक्त्रचित्पथो-**
> **ल्लासि मूर्तिरयमास्थितो जगत् ॥८८॥**

हे अम्ब ! एषः, प्रत्यक्षसिद्धः, तावकः त्वदीयः, प्राणापानादिरूपैः पञ्च-धा प्रसरो यथायथं लये सर्गे च व्योमयानमतिमत्पुरस्सरः, तत्र लये व्योमयान-पुरस्सरः, सर्गे तु मतिमत्पुरस्सरः। तत्र व्योम्नि चिद्गगने प्राणानां पञ्चानामपि यानं गमनं लय इति यावत् तत्पुरस्सरस्तत्पूर्वकः। सर्गे तु सर्गविषयकं यदीक्षणं तद्रूपा या मतिस्तादृशमतिमद् यन्मनः तत्पुरस्सरः, अस्तीति शेषः। तत्रापि जृम्भमाणगुरुवक्त्र-चित्पथोल्लासिमूर्तिः जृम्भमाणः शक्तिसमुल्लासात् प्रवर्द्धमानो यो गुरुवक्त्ररूपश्चित्पथ-स्तत उल्लासिनी मूर्तिर्यस्य स तथोक्तः। अयं तावकः पञ्चधा प्रसरो व्युत्थाने जगत् स्वकार्यमास्थित उपादानत्वेन तत्रानुगतः। सुबहुशः श्रुतं च प्राणस्य जगत्स्रष्टृत्व-मुपनिषत्सु। "प्राणस्तथानुगमात्" इति सूत्रभाष्ये च प्रपञ्चितं प्राणस्य स्रष्टृत्वं स्वविकारविश्वानुगतत्वं चेति। तथा चैतादृशविस्मयावहव्यापारवत्प्राणपञ्चक-प्रकृतित्वेन मातुः स्तुतिरियमेवमुपपद्यत इति बोध्यम् ॥ ८८ ॥

शिवशक्त्योः सामरस्यावस्थाऽधिष्ठानशून्यत्वान्निर्निकेतपथ उच्यते, प्रपञ्च-शून्यत्वाच्च शून्यधामपदेनापि तदेवाभिधीयते। तस्माच्चोत्थितायाः शक्तेराद्यः स्पन्द

इच्छाशक्तिमनुसृत्य च क्रियापरा पराशक्तिरेव खं नादाख्यमधिष्ठाय तद् द्वारीकृत्य जगद्रूपेण विजृम्भत इतीममागमोक्तमर्थमाश्रित्य साम्प्रतं मातरं स्तौति—

स्पन्दमाद्यमनु कुर्वती शिवे
निर्निकेतनपथोत्थिता गुणैः ।
शून्यधाम वससि त्वमिष्टितः
प्रागधिष्ठितखा विजृम्भसे ॥ ८९ ॥

हे शिवे ! स्वभक्तानां साधकानां निःश्रेयससम्पादकत्वात् कल्याणरूपे ! त्वमिष्टित आद्यस्पन्दादिच्छाशक्तिरूपात् प्राक् शून्यधाम प्रपञ्चविकल्पशून्यं धाम प्रपञ्चलयाधिष्ठानं चिद्रूपप्रकाशात्मकं शिवशक्तिसामरस्यरूपं वससि। निर्निकेतनपथोत्थिता निर्निकेतनो यः पन्था मार्गः, यः पूर्वं शून्यधामपदेनोक्तः, तस्मादुत्थिता सर्गानुकूलक्षोभाद् वैषम्यं प्राप्ता सती तु स्वस्या आद्यस्पन्दमिच्छाशक्तिमनुपश्चाद् गुणैः सत्त्वरजस्तमोभिर्बहुभेदं प्रपञ्चं कुर्वती करिष्यन्ती सती। वर्तमानसामीप्ये लट्। अधिष्ठितखा अधिष्ठितनादा सती जगद्रूपेण विजृम्भसे विस्तारं प्राप्नोषीति ॥ ८९ ॥

आगमशास्त्रे मातुः पञ्चवाहशरीरत्वमुक्तम्, तेषु पञ्चसु प्रथमा वामेश्वरी। तदुक्तं महानयप्रकाशे पञ्चम उदये चतुर्थश्लोकव्याख्यायाम्—"प्रथमस्पन्दो यः परतरचिद्रूपाद् देवीरूपात् सा वामेश्वरीति, ततो घनीभूतः सः ( प्रथमस्पन्दः ) कल्लोलतामाप्तः करणेषु द्वारेषु पतितः खेचरीशब्दव्यपदेश्यो द्वितीयः, ततोऽपि स्थूलतया कृतपादप्रसारको विषयं विषयं भजन् भूचरीशब्दव्यपदेश्यो भवतीति तृतीयः। तत्र च स्थानभेदेन विषयं विषयमात्मसात्कृत्य अनन्तर्बहीरूपभावेन मध्यमां भूमिमवाप्तः संहारभक्षिणीव्यपदेश्यो दिक्चरीपदव्यपदेश्यश्च चतुर्थः। अन्तर्बहिःस्थानस्पर्शेन तु लोकयात्रां पारयन् रौद्रेश्वरीति गोचरीति च निष्कलसकलाकारस्पर्शेन निरूप्यते स च पञ्चमः। तदिदं मातुः पञ्चवाहात्मकं वपुः पञ्चभिः श्लोकैः कुलकेन यथाक्रमं विवृण्वन् मातरं स्तौति—

चिच्चमत्करणरूढनिर्भरा
त्व पुरा स्फुरसि सैव खेचरी ।
रूपसंग्रहणदर्शितैषणा
तेजसा स्वरसवाहिनाऽम्बिके ॥ ९० ॥

हे अम्बिके ! त्वं पुरा खेचरीभावात् प्राक् चिच्चमत्करणरूढनिर्भरा चितश्चमत्करणेन चित्प्रयुक्तेन चमत्कारेण रूढः प्राप्तो निर्भरोऽतिशयो यस्यां सा प्रथमस्पन्दरूपा इच्छाशक्तिस्त्वं वामेश्वरीरूपेण स्फुरसि। ततः स्वरसवाहिना विषयेषु स्वरसेन प्रवहता उन्मुखीभवता तेजसा चिद्रूपेण प्रकाशेन या त्वं रूपसंग्रहणदर्शितैषणा

रूपाणां रूपवतां पदार्थानां यत्करणैः संग्रहणं सम्यग् ग्रहणं तस्मै दर्शितैषणा दर्शिता एषणा इच्छा यया सा तथोक्ता त्वं सैव आगमशास्त्रप्रसिद्धैव खेचरी स्फुरसीति ॥९०॥

परतरचिद्रूपाया देव्याः प्रथमस्पन्दरूपां वामेश्वरीं त्वग्वृत्तिमनुपतितायास्तस्या एव च रूपग्रहणोन्मुखत्वे चक्षुर्वृत्तिमनुपतितायाः खेचरीशब्दव्यपदेश्यं स्वरूपं च निर्वर्ण्य तस्या एव स्वाभाविकीं स्वैरितामाप्तायाः स्पर्शग्रहणोन्मुखत्वे त्वग्वृत्तिमनुपतिताया भूचरीशब्दव्यपदेश्यं स्वरूपं निर्दिदिक्षन् पराम्बां स्तौति—

देवि नैकविषयोद्यमस्फुटा-<br>
रोहिणी भवसि सैव भूचरी ।<br>
स्पर्शसंग्रहणनित्यसम्मुखी<br>
स्वैरितामजहती स्वभावजाम् ॥ ९१ ॥

हे देवि ! या त्वं नैकविषयोद्यमस्फुटारोहिणी नैकेऽनेके ये विषयास्तेषु तद्ग्रहणेषु य उद्यमो व्यापारस्तं स्फुटारोहिणी असंदिग्धमारूढा, तादृशोद्यमवतीति यावत् । सैव त्वं स्वभावजां सहजां स्वैरितां चाञ्चल्यम्, विषयग्रहणलौल्यमिति यावत् । अजहती स्पर्शसंग्रहणनित्यसम्मुखी त्वग्वृत्तिरूपेण स्पर्शानां विविधानां सम्यग् ग्रहणे नित्यं सम्मुखी उद्युक्ता सती भूचरी भूचरीशब्दव्यपदेश्या भवसि, अतस्त्वचि स्पर्शग्रहणशक्तिरूपां त्वां प्रणतोऽस्मीति गम्यते ॥ ९१ ॥

अथ यदा वामेश्वरी एव खेचरीभूचरीभावमप्यतिक्रम्य सहजां स्वैरितामजहती प्रत्यगात्मनो दृष्टिमवकुञ्च्य रसचर्वणोन्मुखी रसनेन्द्रियवृत्तिपतिता, तदा सैव विश्वं संहृतिरूपेण मुखेन संग्रस्य दिक्चरीपदव्यपदेश्या भवतीतीममागमोक्तमर्थं विवृण्वन् मातरं स्तौति—

प्रत्यगात्मनि दृशोऽवकुञ्चना<br>
विश्वमन्नमुदरे वितन्वती ।<br>
ग्रस्य संहृतिमुखेन दिक्चरी<br>
सैव देवि रसचर्वणोन्मुखी ॥ ९२ ॥

हे देवि ! यदा त्वं प्रत्यगात्मनि दृशः प्रत्यगात्मविषयाया दृष्टेः, दृश्धातोः संपदादित्वाद् भावे क्विप्, अवकुञ्चना संकोचनकरी सती । अवकुञ्चेर्नन्द्यादित्वाल्ल्युः । रसचर्वणोन्मुखी सती रसनेन्द्रियवृत्तिपतिता सहृतिमुखेन संहाररूपव्यापाररूपेण मुखेन ग्रस्य, संग्रस्येति वक्तव्येऽक्षरच्युतकमेतत्, विश्वमन्नमुदरे वितन्वती कुर्वन्ती सती सैव वामेश्वर्येव त्वं दिक्चरीपदव्यपदेश्या भवसि । अतो दिक्चरीरूपेण विश्वसंहृतिशक्तिरूपां त्वां प्रणतोऽस्मीति गम्यते ॥ ९२ ॥

अथेदानीं सहजया स्वैरितया दिक्चरीभावादप्युत्थाय गन्धग्रहणोन्मुखत्वे घ्राणवृत्तिपतिता सती गन्धग्राहिका त्वमेव गोचरीपदव्यपदेश्या असीत्यागमशास्त्र-प्रसिद्धार्थोपन्यासमुखेनाम्बां स्तौति —

प्राप्तचित्तमुखतोऽधितस्थुषी
स्वस्वरूपमनिकेतमञ्जसा ।
रौद्रभावकृतबाह्यजृम्भणा
गोचरी त्वमसि गन्धहारिणी ॥ ९३ ॥

हे अम्ब ! त्वमनिकेतं न विद्यते निकेतोऽधिष्ठानं यस्येत्यनिकेतमधिष्ठानशून्यं स्वस्वरूपं प्राप्तचित्तमुखतो ग्राहकतया प्राप्तं यच्चित्तं तदेव मुखं तेन, तृतीयार्थे तसिः । अञ्जसा सारल्येनाधितस्थुषी अधिष्ठितवत्यपि रौद्रभावकृतबाह्यजृम्भणा रौद्रो भावो विषयेषूत्कटेच्छारूपं लौल्यं तेन कृतं बाह्येषु विषयेषु जृम्भणं ग्रहणरूपं यया सा तथाभूता सती गन्धग्रहणोन्मुखी घ्राणवृत्तिपतिता सती गन्धहारिणी गन्धग्राहिका त्वं गोचरीपदव्यपदेश्या, असि भवसीति अतोऽन्तरात्मग्राहिकामन्तः करणशक्तिरूपां बहिश्च गन्धग्राहिकां घ्राणशक्तिरूपामेकामपि कार्यभेदेनानेकरूपां त्वां पराशक्ति-रूपां वामेश्वरीशक्तिरूपेण प्रथमं परिस्पन्दमानां गोचरीं प्रणतोऽस्मीति ॥ ९३ ॥

एवं वामेश्वरी-खेचरी-भूचरी-दिक्चरी-गोचरीभेदैः पञ्चवाहवपुषः पराम्बायाः पञ्चकलाः प्रदर्श्य इच्छाशक्तिप्रधानत्वेनान्तःकरणवृत्तिरूपाया वामेश्वरीपदव्यपदेश्याया आद्यकलाया विषयं ब्रह्म आश्रयं च सिद्धमण्डलं यथागमं निर्दिशन् मातरं स्तौति—

ब्रह्मविग्रहकलाधिरोहिणी
पञ्चवाहवपुषः कला तव ।
सामरस्यघटितोदया शिवे
शश्वदुल्लसति सिद्धमण्डले ॥ ९४ ॥

हे शिवे ! पञ्चवाहवपुषः पञ्चभिः प्रागुक्तभेदैः पञ्चवाहात्मिकायास्तव आद्या कला वामेश्वरीपदव्यपदेश्या इच्छाशक्तिप्रधानान्तःकरणवृत्तिरूपा ब्रह्मविग्रहकला-धिरोहिणी ब्रह्मविग्रहरूपा ब्रह्मस्वरूपभूता या कला शिवशक्तिसामरस्यांशभूता तस्या अधिरोहिणी तामधिरूढा, तद्विषयेति यावत् । किञ्च, सामरस्यघटितोदया सामरस्ये शिवशक्त्योर्घटितो योजित उदय आविर्भावो यस्याः सा तथाभूता सिद्धमण्डले युक्ता-वस्थामुपागते शश्वन्निरन्तरमुल्लसति । सिद्धानामेव शुद्धान्तःकरणवृत्तीः रूपादिबाह्य-विषयव्यावृत्ता ब्रह्मस्वरूपावगाहिनी शिवशक्तिसामरस्यावगाहिनी च सर्वदोल्लसति, नान्येषामित्येषोऽर्थः श्रुतावप्युक्तः—

पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात्पराङ्पश्यतिनान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ।।
(कठ० २।४।१) इति ।

एवं मातुः पञ्चवाहवपुष्ट्वोपन्यासेन साकारां तां प्रति ग्रन्थकर्तुर्नतिर्व्यज्यते ।।९४।।

अथ साम्प्रतं भानु-शीतकर-वह्निकुण्डलीबिन्दुरूपं परावरभावेन स्थितं चक्र-पञ्चकं पराशक्तेरेव स्वरूपभूतम् येषु ध्याननिश्चलाः साधका न कालवश्यतां यान्ति यतस्तत्रावस्थिता कालकर्षिणी रुद्रशक्तिः कालात् तान् कर्षति स्वसन्निधौ । तया हि साधकानुग्रहपरया चक्रपञ्चकरूपेण परास्बायाः स्थितिः सूच्यत इत्यागमसिद्धान्त-मनुवदन् कालकर्षिणीपदव्यपदेश्यां कालकर्षिणीमम्बां स्तुत्याऽभिमुखीकृत्य मनसा नमति—

भानुशीतकरवह्निकुण्डली-
बिन्दुसूत्रितपरावरस्थला ।
रुद्रशक्तिरिह कालकर्षिणी
त्वत्कपञ्चविधवृत्तिसूचिनी ।। ९५ ।।

हे अम्ब ! इह नृदेहे भानुशीतकरवह्निकुण्डलीबिन्दुसूत्रितपरावरस्थला भानुशीतकरवह्निकुण्डलीबिन्दुरूपैश्चक्रैः सूत्रितं ग्रथितं परावरस्थलं परावरभावेन उत्तराधरभावेन स्थितं स्थलं स्थानं यया सा तथाभूता, त्वत्कपञ्चविधवृत्तिसूचिनी तव या चक्ररूपेण पञ्चविधा वृत्तिः स्थितिस्तस्या सूचिनी ज्ञापिका कालात् कर्षति साधकानिति व्युत्पत्त्या कालकर्षिणीपदव्यपदेश्या रुद्रशक्तिस्त्वमसीति कालमप्यभि-भवन्तीं भवतीं प्रणतोऽस्मीति गम्यते । अयं भावः—यदि चक्रपञ्चके प्रागुक्ते शक्तिरूपेण पराम्बैव कालकर्षिणीनाम्नी नावस्थिता स्यात्तदा कथं तत्र समाहितानां साधकानां कालातिक्रमः स्यादिति कालात् साधकान् कर्षन्ती कालकर्षणी शक्तिरेव चक्रपञ्चकं व्यनक्तीति ।। ९५ ।।

महानयप्रकाशे दशम उदये चतुर्थपद्यव्याख्यायामुक्तम्—"कुण्डलिन्यामावर्त-पञ्चकरूपप्रणवाकारोल्लास एव पञ्चात्मकविश्वव्याप्त्या स्थितः" इति । अत्र विश्वस्य पञ्चात्मकत्वं भूतपञ्चकात्मकत्वेन । एतन्महानयग्रन्थदर्शनेन कुण्डलिन्यां स्थितस्य चक्रपञ्चकस्य प्रणवाकारपञ्चकस्य च सारूप्यं स्फुटं प्रतीयते । तत्र कुण्डलिन्यामधःस्थितं चक्रं घोष इति तत ऊर्ध्वं वाडव इति वह्निचक्रम्, तत ऊर्ध्वं कुण्डलिन्याः शिखा (अग्रभागः), तदुपरि स्थितं बिन्दुचक्रम्, ततः पार्श्वे एव नादचक्र-मिति । प्रसादस्तु प्रणवस्यार्धमात्रारूपः, प्रकर्षेण सीदति, सन्निहितो भवति, ताद्रूप्य-मापन्नो भवति ध्याता निर्बीजसमाधिकाले यस्मिन् स प्रसाद इति व्युत्पत्तेः । सा चार्धमात्रारूपा चितिशक्तिः । तदुक्तं सप्तशत्याम्—

"अर्धमात्रा स्थिता नित्या याऽनुच्चार्या विशेषतः" इति ।

प्रणवस्य षडक्षरत्वं च रामोत्तरतापिन्यामुपनिषदि—"अकारः प्रथमाक्षरो भवति, उकारो द्वितीयाक्षरो भवति, मकारस्तृतीयाक्षरो भवति, अर्धमात्रा चतुर्थाक्षरो भवति, बिन्दुः पञ्चमाक्षरो भवति, नादः षष्ठाक्षरो भवति" इति । तदिदं यत्कुण्डलिन्यां चक्रषट्कं तन्मातुरुपलब्धिस्थानत्वेनानुक्लृप्तम् । यत्तु प्रणवेऽक्षरषट्कं तन्मातुरभिधायकत्वेनेतीममागमरहस्यभूतमर्थमत्रोपन्यस्य प्रणवजपतदर्थभावनारूपं कुण्डलिन्यां चक्रषट्कध्यानरूपं च मातृदर्शनोपायं प्रदर्शयन्नेवं निःश्रेयसफलकदुरवगाहदर्शनां मातरं स्तौति—

घोषवाडवशिखास्तदुत्तरं
बिन्दुनादयुगलं च यत्पदम् ।
सप्रसादमिह पञ्चभिः शिवे
त्वां कलाभिरनुक्लृप्तमोमपि ॥ ९६ ॥

हे शिवे ! घोषवाडवशिखा अधरोत्तरभावेन स्थितास्तदुत्तरं बिन्दुनादयुगलं च सप्रसादं स्थितम् । मातृपक्षे प्रसादो हार्दाकाशे समुपलभ्यमानश्चितिशक्तिरूपः, प्रणवपक्षे तु अर्धमात्रारूपः । तेन सहितं सप्रसादमिह अध्यात्मं यत्पदं तत्, तथा पञ्चभिः कलाभिरुपलक्षितमर्धमात्रारूपया कलया सप्रसादमोमपि पदं त्वामनु त्वां लक्षीकृत्य उपलब्धिस्थानत्वेन वाचकत्वेन च क्लृप्तं प्रसिद्धमागमशास्त्रेषु भक्तिप्रवणोपासकेषु च ॥ ९६ ॥

सोऽहमिति महावाक्ये सकारहकारयोर्लोपे पूर्वरूपाख्ये सन्धौ च कृते ओमिति प्रणवरूपं निष्पद्यते । तदुक्तं साम्बपञ्चाशिकायाः प्रथमपद्यस्य टीकायाम्—

सकारं च हकारं च लोपयित्वा प्रयोजयेत् ।
सन्धिं च पूर्वरूपाख्यं ततोऽसौ प्रणवो भवेत् ॥

इत्यादिन्यायेन महावाक्यं प्रणव इति । तच्च मातुश्चिन्मयो विग्रहः । तद्यथा श्रूयते—"एतद्वै सत्यकाम परं चापरं च ब्रह्म यदयमोङ्कारः, (प्रश्नोपनिषदि) इत्यादि । मन्त्रः योगसूत्रेऽपि—"तस्य वाचकः प्रणवः" (योग० १।२७) "तज्जपस्तदर्थभावनम्" ( योग० १।२८ ) इति तत्संबद्धो विधिरुक्तः । श्वेताश्वतरेऽपि—"स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥" ( १।१४ ) इति प्रणवसंबद्धो विधिरुक्तः । हंस इत्यस्य जंजप्यमानस्य स्वरससमुद्भूते विपर्यये सोऽहमित्यत्र सकारहकारयोर्लोपभावनयाऽवशिष्टे पूर्वरूपाख्यसंधिभावनया च ओमितिरूपं स्वत एव जञ्जप्यत इति विज्ञानभैरवटीकायाम्—"एवं शरीरं षट्चक्राधारं, तद्रूपो यो मन्त्रः प्रणवाख्यः, सोहंरूपो वा, सोऽहमित्यत्र सकारहकाररूपहलो लोपे ओमित्यवशिष्यते ।

यतोऽयं नाभ्यादिद्वादशान्तं यावत् पिण्डे विभक्तोऽन्तः पिण्डमन्त्र ओङ्कारः, सोऽहमित्यजपागर्भितो हृदयविषयेऽप्यर्थं ध्वनति। यदुक्तम्—

ओमिति स्फुरदुरस्यनाहतं
　　गर्भगुम्फितसमस्तवाङ्मयम्।
दन्ध्वनीति हृदि यत्परं पदं
　　तत्सदक्षरमुपास्महे महः॥" इति॥ ४२॥

भट्टानन्दविरचितविज्ञानकौमुदीटीकोपेते विज्ञानभैरवे च—

षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिः।
हंस-हंसेति-मन्त्रेण जीवो जपति नित्यशः॥
जपो देव्याः समुद्दिष्टः प्राणस्यान्ते सुदुर्लभः।
(श्लो० १५४–१५५)

तत्रैव च पुनः—

अहमेव परो हंसः परमात्मा परात्परः। इति।
(श्लो० ९१, पृ० ३७)

तमिममागमोक्तमर्थं विवृण्वन्नोङ्कारस्य मातृविग्रहत्वप्रदर्शनमुखेन मातरं स्तौति—

**इन्दुशूलवृषटङ्कमातृका-**
　　**कालबीजधृतपञ्चभूमिकः।**
**लोपसन्धिविहितध्रुवोदय-**
　　**श्चिन्मयश्च तव देवि दर्शितः॥ ९७॥**

हे देवि! इन्दुः सकारः तदुक्तं श्रीविद्यार्णवतन्त्रे षष्ठे श्वासे पञ्चत्रिंशे श्लोके—"सकारश्चन्द्रमा भद्रे कलाषोडशकात्मकः" इति, शूलमोकारः, वृषस्तत्स्थः शिवः, मञ्चशब्दे इव तत्स्थे लक्षणा, तेन वृषो हकारः हकारस्य शिवरूपत्वात्। टङ्कमातृका अकारः, मातृकाणां टङ्क इति विग्रहः, पूर्वनिपातनियमस्यानित्यत्वादनादरः। अकारे हि मातृका टङ्किता इव विधृताः सन्ति, उच्चार्यन्ते च। तदुक्तं व्याकरणमहाभाष्ये—"नह्यचमन्तरेण व्यञ्जनस्योच्चारणमपि संभवति" इति। अक्षरसमाम्नायेऽपि व्यञ्जनानामुच्चारणार्थमकारस्यैव प्रयोगो दृश्यते। यद्वा—मातृकाणां टङ्कः टङ्कवल्लयसाधनमकारः, तदुक्तं तन्त्रालोके—"वर्णास्तत्र लयं यान्ति ह्यवर्णे वर्णरूपिणि"(३२।४१) इति। कालबीजं मकारः, तदुक्तं तन्त्रालोकव्याख्यायाम्—"कालो म इति" (३०।११२) एतैर्वर्णैर्धृतपञ्चभूमिको धृतपञ्चमूर्तिः सोऽहमित्येवंरूपस्तव विग्रहः। लोपसन्धिविहितध्रुवोदयः, अत्र लोकेति पाठो न युक्तः, अर्थासङ्गतेः। सकारहकारयोर्लोपेन भावना-

मयेन आहार्येण ऐच्छिकेन सन्धिना च पूर्वरूपेण विहितः कृतो ध्रुवो निश्चित उदय उत्पत्तिर्यस्य स तथाभूतः। प्रणवरूपतामापद्यमानः सन्, चिन्मयश्चं चिन्मयस्तु, अत्र स्वार्थे मयट्, तत्प्रकृतवचने मयडित्यत्र मयडिति योगविभागेन साध्यः। योगविभागस्य भाष्यानारूढत्वेनाप्रामाणिकत्वे तु एवकारार्थे मात्रशब्दवन्मयशब्दोऽपि द्रष्टव्यः, चिदेव चिन्मय इति, मयूरव्यंसकादिवत्समासः। तव विग्रहः शास्त्रेषु दर्शित इति ॥ ९७ ॥

अथ साम्प्रतमन्तरध्यात्मं बहिश्चाधिभूतं यथागमं मातुः स्थितिं दर्शयन् युग्मेन मातरं स्तौति—

यज्ज्वरादिपदमम्ब वायुना
या शिखा मधुसपन्नगास्पदा।
या निशा मधुनिविष्टसृष्टिका
पङ्क्तिरप्यनुकरोति ते स्थितिम् ॥ ९८ ॥

हे अम्ब ! यज्ज्वरादिपदं ज्वरादीनां पदमाश्रयो हृत्पद्मं वायुना प्राणेनोपलक्षितम् या च शिखा शिखेव कुण्डलिन्या अग्रभागः सैव मधु, तत्र समाहितानां आनन्दहेतुत्वात्। सपन्नगास्पदा सपन्नगं पन्नगेन कुण्डलिन्या सहितं तथाभूतमास्पदं यस्याः सा तथाभूता। या च निशा बुद्धौ स्थितमज्ञानम्, निशेव पदार्थाप्रतिभाससामान्यात्, मधु अज्ञानिनां सुखहेतुत्वात्, निविष्टसृष्टिका निविष्टा सृष्टिर्यस्यां सा, अज्ञाने खलु सृष्टिः प्रतिष्ठिता, ज्ञाने तस्याः प्रविलयात्; नहि स्वात्ममात्रपरामर्शे सृष्टेः स्फुरत्तासंभवः। अत्र यत्पदत्रयदर्शनेन तत्रेति पदमध्याहार्यम्। तत्र तेषु स्थानेषु पङ्क्तिरपि गुरुपङ्क्तिरपि ते स्थितिमनुकरोति अनुजानाति, अनुमन्यत इति यावत्। "कृभ्वस्तयः क्रियासामान्यवचनाः इत्यनुकरोतेरनुज्ञानार्थकत्वम्। तथा च ज्ञानशक्तिरूपां त्वां विना न हृदये ज्वरादिभानम्, क्रियाशक्तिरूपां च त्वां विना न तत्र प्राणपरिस्पन्दः, इच्छाशक्तिरूपां च त्वां विना न अज्ञानावृतायां बुद्धौ विविधसृष्टिविकल्पा इति तर्कसिद्धमप्येतद् गुरुपङ्क्तितोऽप्यनुमन्यत इत्यतरन्तरध्यात्मं स्थितां त्वां महनीयमहानुभावां प्रणतोऽस्मीति व्यज्यते ॥ ९८ ॥

यन्नभः स्फुरति यो मरुत् त्वया-
धिष्ठितो विधृतसर्गरूपया।
या शिखा यदुत वारि यज्ञभू-
र्यम्ब पङ्क्तिरपि तैस्तथाविधः ॥ ९९ ॥

हे अम्ब ! विधृतसर्गरूपया विधृतं सर्गार्थं रूपं पञ्चमहाभूतात्मकं यया तथाभूतया त्वयाऽधिष्ठितं यन्नभः स्फुरति, तथाभूतयैव त्वयाऽधिष्ठितो यो मरुत्स्फुरति, तथाभूतयैवाधिष्ठिता या शिखा शिखावज्ज्योतिरग्न्यादिकं स्फुरति, यदुत यदपि

तादृश्यैव त्वयाऽधिष्ठितं यज्ञसूः यागप्रसवहेतुः, नपुंसकवारिविशेषणत्वेऽपि न "ह्रस्वो नपुंसकस्य" इति ह्रस्वत्वम्। यज्ञसूरित्यत्र संपदादित् वात्कर्तरि क्विव्बाहुलकात्, अत एव नित्यस्त्रीत्वम्। वारि जलं स्फुरति। जलस्य यज्ञसाधनत्वं च दधिपयः-सोमाज्यरूपैः। अत एवाहुतीनामब्रूपत्वमुक्तं पञ्चाग्निविद्यायां छान्दोग्ये—"तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुतेर्वर्षं संभवति" (५।२) इति। याऽपि त्वयाधिष्ठिता पङ्क्तिर्भगवतः पदपङ्क्त्युपलक्षिता पृथिवी, तैस्त्वयाधिष्ठितैः पञ्चमहाभूतैरुपलक्षितस्तथाविधः पञ्चमहाभूताकारस्तव जगत्सर्गहेतुर्विग्रहः। अतः पञ्चमहाभूतमूर्तिं जगत्सृजन्तीं भवतीं प्रणतोऽस्मीति व्यज्यते ॥ ९९ ॥

"मुण्डनं ज्ञानरूपेण दण्डनं च क्रियात्मना। मुण्डदण्डक्रमौ तेन मतौ ज्ञानक्रियात्मकौ ॥" इत्यभिनवगुप्तकृतमहानयप्रकाशे (७।५), "वामेश्वर्याश्च प्रथमो ज्ञानशक्तिप्रसरोऽपरः क्रियाशक्तिगर्भो बुद्धीन्द्रियविवृत्त्या मुण्डक्रमेण, द्वितीयश्च ज्ञानशक्तिगर्भः क्रियाशक्तिप्रसरः कर्मेन्द्रियविवृत्त्या दण्डक्रमेण निजनिजविषयानात्मसात्कृत्य विलसति" (पृ० ६७) इति शितिकण्ठविरचिते महानयप्रकाशे इत्येतद्ग्रन्थद्वयावलोकनेन वामेश्वर्या द्वितीयो ज्ञानशक्तिगर्भः क्रियाशक्तिप्रसरो दण्डक्रमेण कर्मेन्द्रियविवृत्त्या भूचर्यादिरूपः, वामेश्वर्या एव प्रथमो ज्ञानशक्तिप्रसरोऽपरक्रियाशक्तिगर्भो मुण्डक्रमेण बुद्धीन्द्रियविवृत्त्या भूचर्यादिरूपोऽपरचतुष्टयीपदव्यपदेश्य इति प्रतीयते। इममेवागमोक्तसिद्धान्तं विवृण्वन् तन्निभेन मातरं स्तौति—

भूचरी वहसि दण्डतः क्रमं
मुण्डतोऽपरचतुष्टयी च सा।
भोग्यभोक्तृक लनोर्मिसंक्षये
सामरस्यरसरोहिणी शिवे ॥१००॥

हे शिवे ! या त्वं भोक्तृभोग्यकलनोर्मिसंक्षये भोग्यभोक्त्रोः या कलना प्रतीतिः सैव चितिशक्तेरूर्मिर्विकारस्तस्य संक्षये संहारे सति सामरस्यरसरोहिणी सामरस्ये शिवशक्त्योस्तादात्म्येनावस्थितो यो रसोऽभिलाषस्तेन रोहिणी सामरस्यावलम्बिनी भवसि। सा त्वं भूचरी सती दण्डतः क्रमं वहसि। भूचरीति खेचर्यादीनां तिसृणामप्युपलक्षणम्। क्रियाशक्तिगर्भा ज्ञानशक्तिप्रसररूपा भूचर्यादिरूपाऽपरचतुष्टयी च सती मुण्डतः क्रमं वहसि। अतो दण्डमुण्डक्रमाभ्यां ज्ञानेन्द्रियकर्मेन्द्रियरूपैर्विवर्तमानां भूचर्यादिपदव्यपदेश्यां विश्वमात्मसात्कृत्य विलसन्तीं भवतीं प्रणतोऽस्मीति व्यज्यते ॥ १०० ॥

नादबिन्दूपनिषदि नादध्यानात् क्रमेण समाधिसिद्धिरुक्ता। एवं चानाहतनादोत्पादाय त्र्यस्रमूलाधारस्थगगनस्थिताग्निपार्श्वयोर्मध्यगा सती प्राणापानादिरूपेण पञ्चधा क्रमैः प्रवहन्ती अग्निं संधुक्षयन्ती च माता स्तूयते—

यस्त्वनाहतधृतोर्ध्वपारग-
स्त्र्यश्रमूलगगनस्थितः स्वरः ।
तत्र देवि वियदग्निपार्श्वयो-
र्मध्यगा वहसि पञ्चधा क्रमैः ॥१०१॥

हे देवि ! यस्तु अनाहतधृतोर्ध्वपारगः अनाहते स्थाने धृतो गृहीतो ज्ञातः, श्रुत इति यावत्। ततोऽपि ऊर्ध्वपारगः ऊर्ध्वपारं स्थानं गच्छतीति ऊर्ध्वपारगः। उत्पत्तिसमये तु त्र्यश्रमूलगगनस्थितः त्र्यश्रं त्रिकोणं यन्मूलगगनं मूलाधारस्थगगनं तत्र स्थितः स्वरो नादः, तत्र तस्मिन् नादे जनयितव्ये त्वं मूलगगनाग्निपार्श्वयोर्मध्यगा मूलाधारस्थितं यद्गगनं तत्र योऽग्निर्जाठरस्तस्य पार्श्वयोर्मध्यगा सती प्राणापानादिरूपेण पञ्चधा पञ्चप्रकारैः क्रमैर्गतिभिर्वहसीति ॥ १०१ ॥

अथेदानीं सृष्टिस्थितिसंहारेषु तत्तद्रूपशालिनीमम्बां स्तौति—

पञ्चवर्गमयपिण्डगामिनी
मञ्चपञ्चकतनुस्त्वमम्ब या ।
देवि वर्ण इव भासि निष्क्रमा
सामरस्यकृतपञ्चवृत्तिका ॥१०२॥

हे देवि अम्ब ! या त्वं स्थितिकाले पञ्चवर्गमयपिण्डगामिनी पञ्च ये वर्गाः कादयो मावसानास्तन्मयेन पिण्डेन विग्रहेण गच्छति सर्वव्यवहारं प्राप्नोतीति सा, तथा असि। वर्गपञ्चकं तु यकारादिवर्णानामप्युपलक्षणम्। वर्णानां मातृविग्रहत्वादेव च लोके तेषां वर्णमातृकेति व्यवहारः। किञ्च, संहारकाले मञ्चपञ्चकतनुः मञ्चानां ब्रह्मविष्णुरुद्रेश्वरसदाशिवानां प्रेतानां पञ्चकं मञ्चपञ्चकं तस्मिन् स्थिता तनुर्यस्याः सा तथाभूता त्वं वर्णैर्निष्क्रमाऽवयवक्रमशून्या भासि, संहारकाले सर्वव्यवहारलोपेन वर्णरूपावयवशून्यत्वात्। किञ्च, सर्गकाले त्वं सामरस्याय शब्दस्पर्शादिरूपविषयपञ्चकोपभोगाय कृताः पञ्चानां चक्षुरादीन्द्रियाणां वृत्तयो यया सा तथाभूता वर्तस इति। सामरस्यस्य विषयाभिलाषरूपत्वमुक्तं षट्चक्रनिरूपणे पूर्णानन्दयतिविरचितश्लोकार्थपरिष्कारिणीटीकायाम्—"स्त्रीपुंयोगे तु यत् सौख्यं सामरस्यं प्रकीर्तितम्" (पृ० ६७) इति, "शिवशक्त्योः सामरस्यात्मकं प्रकृतिनोऽपरे" (पृ० ६७) इति च ॥ १०२ ॥

अथ नानाविधविद्यौघजननीत्वेनाम्बां स्तोतुं तत्स्वरूपं निरूपयितुं प्राह—

शून्यमम्ब महमुच्यसे तु या
यत् त्वमत्र गगने सदोदिता ।
दिव्यमोघमत उद्गिरन्त्यसौ
स्पर्शमुज्झसि हि वामविग्रहा ॥१०३॥

हे अम्ब ! या तु त्वं शून्यं प्रकाश्यसंबन्धरहितं महं ज्योतिरुच्यसे, प्रलयसुषुप्तिसमाधिष्विति शेषः। यत्त्वं ज्योतीरूपं त्वम्। अत्र शरीरान्तः हृद्देशे गगने चिद्गगने ज्योतिरात्मकशक्तिरूपेण सदा उदिता, चिद्गगनस्थितमहरूपायाः शक्तेरविनाशित्वात्। तत्र सदोदिता सती च त्वम्, अतः चिद्गगनाद् नानाविधं दिव्यमोघमागमवर्णिताचार्यपरम्परारूपमम्बापरम्परारूपं च उद्गिरन्ती असौ प्रागुक्तमहरूपा त्वं स्पर्शं चक्षुरादीन्द्रियाणां संबन्धमुज्झसि त्यजसि, इन्द्रियगोचरत्वं न प्राप्नोषीतियावत्। हि यतस्त्वं वामविग्रहा लोकविपरीतस्वरूपा। लोके हि यत् सरित्समुद्रादिकमोघमुद्गिरति, तदिन्द्रियसंबन्धं नोज्झति, त्वं तु दिव्यमोघमुद्गिरन्त्यपि स्पर्शमुज्झसीति वामविग्रहा त्वमिति विशेषः ॥ १०३ ॥

यदा शक्तिश्चिद्गगनस्य परं पारमागच्छति, तदा तस्याः कार्याभावेन चित्तरूपे शिवे निलीनायाश्चित्तरूपत्वमेव, न तु पृथक् सत्ता प्रतीतिर्वाऽस्ति। यदा तु स्पन्दरूपमाद्यविकारं प्राप्तया शक्त्या सह शिवस्य संश्लेषस्तदा तु तथाभूतया तयाऽऽलिङ्गितः शिवश्चिद्गगने विराजते, इतीमं निगूढमागमार्थं मातृस्तुतिमुखेन विवृणोति—

**अम्बरस्य परमागता शिवे**
**सैव चित्तमनघा स्वभावतः।**
**स्पन्दमेत्य परमं विराजते**
**खेचरि प्रणतखेचरस्त्वया ॥१०४॥**

हे शिवे ! या त्वं चिद्गगने सदोदिता दिव्यमोघमुद्गिरन्ती स्पर्शमुज्झसि, सैव तस्याम्बरस्य परमागता सती स्वभावतोऽनवद्या विषयसंबन्धजनितपरिच्छेदानित्यत्वादिदोषशून्या चित्तं चैतन्यं भवसि। किन्तु हे खेचरि ! देवि ! प्रणतखेचरः प्रणताः खेचरा देवा यमसौ प्रणतखेचरः शिवस्तत्रैव गगने त्वया सह तव आद्यविकारं परमं स्पन्दमेत्य विराजते।

एतेन प्रत्यभिज्ञाहृदयोक्तश्चितिशक्तेरारोहावरोहयोः क्रमो दर्शितः। पूर्वमिन्द्रियवृत्तिषु खेचर्यादिस्वरूपमुपदर्शितं साम्प्रतम्, सृष्टिस्थितिसंहारेषु प्रकारान्तरेणेन्द्रियवृत्तिषु वर्णक्रमेण परस्यां वाचि च खेचर्यादिस्वरूपं द्वादशाधिकशततमश्लोकपर्यन्तं वर्णयितुमुपक्रम्यत इति विशेषः ॥१०४॥

तत्र पूर्वं क्रमलक्षणायां स्पन्दसृष्टौ खेचरीस्वरूपमुक्त्वाऽक्रमसृष्टौ भूचरीस्वरूपं दर्शयति—

**व्यक्तमक्रमविजृम्भिता शिवे**
**त्वं विसृष्टभुवनद्वयोदया।**
**सैव संचरसि संश्रिता यदा**
**भूचरी भवसि संज्ञया तदा ॥१०५॥**

हे शिवे ! सैव प्रागुक्ता खेचर्येव त्वं व्यक्तं स्फुटं यथा भवति तथा व्यक्तमिति क्रियाविशेषणम्, अक्रमविजृम्भिता अक्रमेण युगपद् विजृम्भिता विस्तारमापन्नाअत एव विसृष्टभुवनद्वयोदया विविधरूपेण सृष्टो भुवनद्वयस्य भूमिस्वर्गलक्षणस्य उदयो यया सा तथाभूता, अत्र भुवनद्वयत्वम् ऊर्ध्वाधरलोकत्वेन विभागमाश्रित्य। एवंभूता सती यदा विसृष्टं भुवनद्वयं संश्रिता संचरसि तदा संज्ञया भूचरी भवसीति। अक्रमसृष्टिश्च उपनिषदादिषु तत्र तत्र दर्शिता। तद्यथा—"यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति" इत्यादि ॥ १०५ ॥

अथ संहारकर्तृत्वेन दिक्चरीं स्तौति—

त्वं वपुः स्फुरणशक्तिलक्षणं
तत्तदर्थमयमम्बिके क्षणात् ।
सैव चेन्निजपदान्तवर्तिनी
संहरस्यथ तदासि दिक्चरी ॥१०६॥

हे अम्बिके ! स्फुरणशक्तिलक्षणं चिच्छक्तिरूपं तत्तदर्थमयं तत्तदर्थप्रचुरं तत्तदर्थस्वरूपं वा, अर्थानां स्फुरणानतिरेकात्, त्वं वपुः सैव प्रागुक्ता भूचर्येव चेद्यदि निजपदान्तवर्तिनी निजं पदं चिद्गगनं तस्यान्तः परं पारं तद्वर्तिनी सती क्षणात्, अथ सर्गानन्तरं संहरसि, तदा दिक्चरी असि दिक्चरीपदेन व्यवह्रियस इति योजना ॥ १०६ ॥

सम्प्रति संहारक्रमसंहारहेतुं गोचरीपदाभिधेयामम्बां स्तौति—

प्रत्यगर्पितमुखी भिदाक्षया-
दैकरस्यमधिरोपितं त्रिधा ।
त्वं क्रमं ग्रससि सैव चेदसौ
गोचरी खलु महाम्बरान्तगा ॥१०७॥

हे शिवे ! यदा त्वं प्रत्यगर्पितमुखी विषयसृष्टितो व्यावृत्य प्रतीचि चिद्रूपे शिवेऽर्पितं मुखं यया सा, तथाभूता भवसि, तदा विषयप्रयुक्तायाश्चिद्रूपशिवनिष्ठाया भिदाया भेदस्य क्षयात् त्वया तस्मिन् चिद्रूपे शिवे त्रिधैकरस्यं स्वगतसजातीयविजातीयभेदशून्यरूपमैकरस्यमेकत्वमधिरोपितमधिष्ठाय स्थापितं भवति, तदा च सैव दिक्चर्येव त्वं चेद्यदि स्वं स्वकीयं क्रमं संहारक्रमं ग्रससि, तदाऽसौ महाम्बरान्तगा चिद्गगनादपि ऊर्ध्वस्य महाम्बरस्याऽन्तगा सती गोचरी भवसि। खल्वित्यागमप्रसिद्धौ। दिक्चरी संहारहेतुः, गोचरी तु संहारक्रमहेतुरिति विशेषः ॥ १०७ ॥

अथ प्रकारान्तरेण खेचरीरूपतयाऽम्बां स्तौति—

पञ्चसु स्फुरति देवि वृत्तिसु
त्वन्मयीषु यदि काचन स्वतः ।
शश्वदाशु निखिलास्तदैव ताः
सामरस्यमधिरुह्य भान्त्यमूः ॥१०८॥

हे देवि, त्वन्मयीषु त्वद्रूपासु त्वद्विकारभूतासु पञ्चसु वृत्तिषु चक्षुरादीन्द्रिय-पञ्चवृत्तिषु यदि काचन वृत्तिः शश्वत् स्वतः स्फुरति, तदैव ता अमू निखिला अपि आशु शीघ्रं सामरस्यमधिरुह्य स्फुरद्वृत्तिसारूप्यं प्राप्य भान्ति । तेन तदा स्फुरद्वृत्ति-विषयातिरिक्तविषयाणामपि तयैव वृत्त्या तदानीं स्फुरणात् संहारो न भवति । तेन सुरभि रक्तं चन्दनमित्यादिकं प्रत्यक्षमुपपद्यते, न तु चक्षुषा रक्तचन्दनप्रत्यक्षकाले सौरभग्रहणायालौकिकसंनिकर्षापेक्षेति भावः ॥ १०८ ॥

खेचरीवृत्तिरेव गगनादिभूतभौतिकविश्वसर्गं करोति, दिक्चरी तु संहारवृत्ति-रिति । सा च खेचरी सूक्ष्मा निर्णिकेता सर्गकामया परया शक्त्या स्फारिता प्रथमं गगनं सृजति, तदेव च स्वं निकेतनमधिष्ठाय पूर्वं नादं ततो विश्वं सृजति । सर्गकाले च संहार-शक्तिं दिक्चरीमाक्रम्य तिष्ठति, येन सर्गकाले संहारस्य नावसरः समायातीतीममाग-मोक्तमर्थजातं प्रदर्शयन् तन्मुखेन मातरं स्तौति—

निर्णिकेतनतयाऽम्ब खेचरी
स्फारिता गगनकामया त्वया ।
नादसर्गनिहितस्ववैभवा
दिक्चरी स्फुटमधिष्ठिता यया ॥१०९॥

हे अम्ब ! निर्णिकेतनतया स्थिता खेचरी यदा गगनकामया खेचर्यधिष्ठानगगनो-त्पत्तिकामया त्वया स्फारिता प्रवर्धिता भवति, तदा गगनसर्गानन्तरं नादसर्गनिहित-स्ववैभवा नादस्य सर्गे निहितं स्थापितं स्ववैभवं स्वसामर्थ्यं यया सा तथाभूता भवति । यया खेचर्या सर्गकाले दिक्चरी संहारशक्तिः स्फुटमधिष्ठिता आक्रान्ता भवति, तेन च सर्गकाले संहारो न भवतीति भावः ॥ १०९ ॥

आनन्दचक्रे स्थिता भूचरी बैन्दवामृतनाडीषोडशकप्रसरणद्वारा धामक्रमं सृजति, षण्ढस्वरैः सह स्वरषोडशकव्याप्त्या वर्णक्रमं सृजति, बुद्धिकर्माक्षमनःसु षोडशसु व्याप्त्या संवित्क्रमं सृजति । षण्ढस्वरा ऋ ॠ ऌ ॡ इति चत्वार इत्यागमप्रसिद्धोऽर्थः । तदुक्तं महानयप्रकाशे षष्ठे उदये पञ्चमपद्यव्याख्याने—"आनन्दचक्रे बैन्दवामृत-नाडीषोडशकप्रसरेण धामक्रमः । षण्ठस्वरैः सह स्वरषोडशकव्याप्त्यावर्णक्रमः । बुद्धि-कर्माक्षमनःसु षोडशसु संवित्क्रम इत्यानन्दचक्रव्याप्तिः" इति । उक्तमर्थं निरूपयन् भूचरीं स्तौति—

क्षोभमम्ब ! तव तावदिष्टतो
द्व्यष्टरश्मितनुनादविग्रहा ।
बिन्दुभूमिमधितस्थुषी स्फुटा-
नन्दचक्रविभवासि भूचरी ॥११०॥

हे अम्ब ! त्वं तावद् इष्टतः सामरस्येन इष्यमाणात् शिवात् तव क्षोभं प्राप्य यद्वा तवेष्टतः शिवात् त्वं क्षोभं प्राप्य बिन्दुभूमिं बैन्दवामृतनाडिषोडशकरूपाम् अधितस्थुषी सती अधिष्ठाय तिष्ठन्ती सती द्व्यष्टरश्मितनुनादविग्रहा द्व्यष्टरश्मितनुः षोडश-चिद्रश्मिशरीरा, षण्ढस्वरैः सह द्व्यष्टनादविग्रहा षोडशस्वरवर्णशरीरा च सती स्फुटानन्दचक्रविभवा स्फुट आनन्दचक्रे विभवो धामवर्णसंवित्क्रमसर्जनसामर्थ्यं यस्याः सा तथाभूता भूचरी असि ॥ ११० ॥

इदानीं दिक्चरी यदा चिद्गगनाद् बहिर्निर्गता विषयपञ्चकं शब्दस्पर्शादिरूप-मलं ग्रसति, भूचरी तु चिद्गगनेऽवस्थिताऽर्थपञ्चकग्रासे सति बिन्दुमात्रमेव निर्विभागं सृजन्ती अवतिष्ठते, तदा दिक्चरी बिन्दुमवभासयन्ती निर्विभागबिन्दुसृष्ट्या तत्प्रकृति-भूतां भूचरीमपि निर्विभागतां नयतीत्येषा स्थितिर्विभक्तविश्वसंहारकालिकी, न तु सर्वात्मना तदानीं विश्वस्य संहारः, स्वोपादानबिन्दुरूपेण तदवस्थानादित्यागमगूढमर्थं विवक्षन् अम्बां स्तौति—

दिक्चरी त्वमसि बिन्दुभास्करा
जृम्भिता बहिरिहाम्ब निर्गता ।
अर्थपञ्चकमलं ग्रसन्त्यसौ
भूचरीं नयसि निर्विभागताम् ॥१११॥

हे अम्ब ! इह पिण्डे ब्रह्माण्डे वा बहिर्निर्गता चिद्गगनाद् बहिर्निष्क्रान्ता जृम्भिता वृद्धिं प्राप्ता सती अर्थपञ्चकं शब्दस्पर्शादिविषयपञ्चकम् अलमत्यर्थं ग्रसन्ती बिन्दुभास्करा बिन्दुं भासयन्ती त्वं दिक्चरी असि। किञ्च, तदानीमसौ दिक्चरीरूपा त्वं निर्विभागं बिन्दुं सृजन्तीं भूचरीं तादृशबिन्दुप्रकृतित्वेन निर्विभागतां नयसीति ॥ १११ ॥

पूर्वोक्तां बिन्दुभासकत्वावस्थामभ्यतिक्रम्य यदा दिक्चरी मूर्तिचक्रं दशकल-वह्निविग्रहं प्रभादिशिखासप्तकयुतं बिन्दोरपि घस्मरमधिरोहति, तदा मूर्तिचक्रमधिरुह्य बिन्दुमपि ग्रसित्वाऽद्वयां परां वाचं परमशिवरूपां विशति। तदुक्तं महानयप्रकाशे षष्ठ उदये पञ्चमपद्यव्याख्यायाम्—"मूर्तिचक्रे चानलधर्माः प्रभा मूर्तिः प्रकाशा च मरीचि-स्तापनी तथा। कराला लेलिहाना च.......... ॥' इति शिखासप्तकेन व्याप्तवक्त्रगत-सप्तशिखाभिर्युक्तं बाहुनाडीदशकं चेति सप्तदशधा मूर्तिचक्रमिति। इममागमोक्तमर्थं विवरीतुं दिक्चरीरूपतयाऽम्बां स्तौति—

तद् द्विपञ्चकलवह्निविग्रहं
सप्ततच्छिखमशेषघस्मरम् ।
मूर्तिचक्रमधिरुह्य दिक्चरी
त्वं परां विशसि वाचमद्वयाम् ॥११२॥

हे अम्ब ! द्विपञ्चकलवह्निविग्रहं द्विरावृत्ताः पञ्च द्विपञ्च, द्विपञ्चकला यस्य स द्विपञ्चकलः, एवंभूतो वह्निर्विग्रहो यस्य तत्तथाभूतम् । सप्ततच्छिखं तस्य वह्नेः शिखास्तच्छिखाः सप्त, तच्छिखा यस्मिन् तत् सप्ततच्छिखम्, अशेषघस्मरं सर्वसंहारकं तद् आगमप्रसिद्धं मूर्तिचक्रमधिरुह्य दिक्चरी त्वं परामद्वयां निर्विभागां वाचं परमशिवरूपां विशसीति ॥ ११२ ॥

त्वं परां विशसि वाचमद्वयामिति पूर्वमुक्तम्, तत्र परास्वरूपं पराप्रवेशप्रकारं च दर्शयितुमाह—

चेतसः कृतमदा स्वजृम्भया
त्वं निजं वियदभूमि जग्मुषी
गृह्णती परममम्ब चित्पदं
मङ्गलासि विधुताहृतिः परा ॥११३॥

हे अम्ब ! त्वं स्वजृम्भया स्वस्या जृम्भणाख्येन व्यापारेण चेतसश्चित्तस्य कृतमदा कृतमोहा भूत्वा अभूमि अनालम्बं स्वरानाश्रयम्, यद्वा अभूमि निजं वियत् स्वाधिष्ठानमम्बरं जग्मुषी सती परमं चित्पदं चिद्रूपमाश्रयं गृह्णती च सती विधुताहृतिः विधुता निरस्ता आहृतिर्विषयाहरणं विषयग्रहणं यया सा तथाभूता, परा परावाग्रूपा मङ्गला तदानीं सर्वविधानाममङ्गलानां प्रशमान्मङ्गलस्वरूपा असीति समाध्यवस्थाविशेषः क्रमसंजातः सूच्यत इति ॥ ११३ ॥

संप्रति संहारकालीं स्तौति—

अस्वराग्रिमविकासधर्मिणी
विश्वचक्रपरिमेलनोद्यमा ।
भावनादिकलनातिवर्तिनी
पञ्चवक्त्रमधिपीठ इज्यसे ॥११४॥

हे अम्ब ! अस्वराग्रिमविकासधर्मिणी अस्वरस्याम्बरस्याग्रिमं यदम्बरं सस्वरं तत्र विकासधर्मिणी विकासरूपधर्मवती, विश्वचक्रपरिमेलनोद्यमा विश्वमेव चक्रं गतिशीलत्वात्संसारचक्रं तस्य परिमेलने परितः सर्वतो मेलने एकीकरणे, संहारे इति यावत्, उद्यमो यस्याः सा तादृशी । किञ्च, भावनादिकलनातिवर्तिनी भावनादिकाः

कलनाः क्रिया अतिक्रम्य स्थिता, तासां क्रियाणां सर्गकालिकत्वात्। त्वं पञ्चवक्त्रं शिवम् अधि ऊर्ध्वं यत्पीठं तस्मिन् साधकैः समाधिकाल इज्यसे पूज्यस इति। एतत्पद्यात्पूर्वोत्तरपद्यदर्शनेन एतत्पद्यदर्शनेन च शक्तेः स्वरूपभूतमम्बरत्रयमस्वरं सस्वरं सव्यञ्जनं चेति भेदेन प्रतीयते ॥ ११४ ॥

अम्बरं द्विविधम्—सस्वरमस्वरं चेति। तद् द्विविधमपि वाग्रूपायाः शक्तेः स्वरूपम्। तत्र सस्वरमपि पश्यन्ती-मध्यमा-वैखरीरूपेण त्रिविधम्। त्रिविधेऽप्येतस्मिन्नम्बरे प्रत्येकं षोडश षोडश स्वरा भवन्ति। ते च स्वरा आगमग्रन्थेषु बिन्दुनादशशिपीठज्वालराजभगकालेति नामभिरष्टभिर्निर्दिष्टाः। तद्यथा—विन्दुः = इकारः, नादः = ओकारः, शशिः = अकारः, पीठम् = उकारः, ज्वालः = औकारः, राजा = ऐकारः, भगः = एकारः, कालः = ऌकार इत्यष्टौ स्वराः। तत्र ऌ इत्यस्य ऋॡवर्णयोर्मिथः सावर्ण्यं वाच्यमिति वचनानुसारं सवर्णग्रहणाद्ध्रस्वदीर्घभेदेन ऋद्वयं ऌद्वयं च। अ इ ऌ इत्येतेषु त्रिषु तु प्रत्येकं द्वयं द्वयमिति षट्, एवं ए ओ ऐ औ इत्येतैः सह पूर्वोक्तानां दशानां संकलनया चतुर्दशस्वराः, अं अः इति तु द्वौ इत्येवं षोडशस्वराः। तेषां च पश्यन्ती-मध्यमा-वैखरीभेदभिन्नतया त्रैविध्यं सस्वराम्बरस्य। एतत्खल्वपरमम्बरम्। अस्वरमम्बरं तु पश्यन्तीमध्यमावैखरीरूपवाक्त्रयातिगं परारूपं परम्। सा च परावाङ् मङ्गलापदेनापि व्यपदिश्यते। मङ्गलापि परापरभेदेन द्विविधा—तत्राद्या परारूपैव, अपरा तु पश्यन्ती-मध्यमा-वैखरीरूपैस्त्रिविधा। तत्रापरा मङ्गला इ ऌ क इति वर्णत्रयरूपा। एवं च इऌ इत्येतद्वर्णद्वयरूपा मङ्गला सस्वराम्बरात्मिकेत्येतत्सर्वं वर्णबीजकोषानुसन्धानमूलकमिति। इदं सर्वं विवृण्वन् सस्वरास्वराऽम्बररूपतया मातरं स्तौति—

बिन्दुनादशशिपीठभास्वरा
ज्वालराजभगकालविग्रहा।
अस्वराख्यपरमाम्बरात्मिका
मङ्गला त्वमसि वाक्त्रयातिगा ॥११५॥

वाक्त्रयातिगा पश्यन्ती-मध्यमा-वैखरीरूपवाक्त्रयातिरिक्ता परा वागित्यर्थः। शेषमतिरोहितार्थम् ॥ ११५ ॥

सस्वरमस्वरं चेत्यम्बरद्वयं वाग्रूपायाः शक्तेराश्रयीभूतम्। तत्र सस्वरमम्बरं वाक्त्रयात्मिकायास्तस्या आश्रयः, स्वरं तु पराया वाच आश्रयः। सस्वराम्बरस्य शक्तेराश्रयत्वात् षोडशस्वरा अपि शक्तेराश्रयत्वेन वर्ण्यन्ते। तत्र स्थिता शक्तिर्वाग्रूपेण स्वसृष्टं विश्वं कदाचित् कदाचित् शब्दोदयकाले प्रकाशयन्ती आत्मनो विषयप्रकाशानुगुणं बलं दर्शयति, परावाग्रूपेणास्वराम्बराश्रिता तु विषयसम्बन्धाभावेऽपि स्वप्रकाशचिद्रूपतया सदोदितं ज्ञानरश्मिसमूहं विस्तारयन्ती तिष्ठति, इतीममागमसम्मतमर्थं मातृस्तुतिव्याजेन विवृण्वन्नाह—

द्व्यष्टधामनिलया चितिः शिवे
स्फारयन्त्यनिशमात्मनो बलम् ।
निर्निकेतनपदा तनोष्यसौ
ज्ञानरश्मिविसरं सदोदितम् ॥११६॥

हे शिवे ! द्व्यष्टधामनिलया सस्वराम्बराश्रितषोडशस्वराश्रिता चितिश्चिद्रूपा-त्वं शब्दद्वारा कदाचित् कदाचिद् विषयप्रकाशेनात्मनो बलं विषयप्रकाशनसामर्थ्यम्, अनिशं स्फारयन्ती प्रवृद्धं कुर्वती तिष्ठसि, असावेव त्वं निर्निकेतनपदा तु पराारूपेणा-स्वराम्बराश्रिता स्वराणां निर्निकेतनम्, अनिकेतनं यदम्बरमस्वरं तत्पदं स्थानं यस्याः सा, सदोदितं स्वप्रकाशत्वात् सदा प्रकाशमानं ज्ञानरश्मिविसरं ज्ञानरूपाणां रश्मीनां विसरं समूहं तदानीं वाच्याभावेऽपि तनोषि विस्तारयसि । स्वप्रकाशस्य परावाग्रूपस्य ज्ञानस्यैकत्वेऽपि क्षणभेदेन भेदमाश्रित्येदमुक्तम् । अत्र वाचश्चिद्रूपत्वं चिद्रूपशक्त्युपादानकत्वेन । तदुक्तं वाक्यपदीये ब्रह्मकाण्डे—"वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" इति । वस्तुतस्तु चिद्रूपायाः शक्तेः शब्दार्थोभयात्मकविश्वो-पादानत्वेन शब्दोपादानत्वमागमसिद्धान्तोऽपीति ॥ ११६ ॥

स्थूलशरीरं सूक्ष्मशरीरं कारणशरीरं च चिदाकाशे नीत्वा या विश्रमयति सा करङ्किणी नाम्नी शक्तिरिति आगमस्थितिः । तदुक्तं महानयप्रकाशे सप्तम उदये द्वितीयपद्यव्याख्याने—"पाञ्चभौतिकं शरीरं परमाकाशे या विश्रामयति सा करङ्किणी-ति ज्ञानसिद्धानां मुद्रा" इति । अन्तःकरणबहिष्करणे मिलिते नवेन्द्रियाणि । तदुक्तं ब्रह्मसूत्रे द्वितीयाध्याये चतुर्थपादस्य द्वितीयाधिकरणे पञ्चमसूत्रे—"क्वचिन्नवसप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ" (तै० सं० ५।१।७।१) इति । भामत्यां तट्टीकायां च—"द्वे श्रोत्रे द्वे चक्षुषी द्वे प्राणे एका वागिति सप्त पायूपस्थौ बुद्धिमनसी वा द्वाववाञ्चौ इति नव" । इति तदेतानि नव शक्तितनुभूतानि, अन्यथा तत्तदविषयग्रहणासम्भवात् । तदेतदर्थजातं मातृस्तुतिं द्वारीकृत्य दर्शयति—

अन्तरम्ब बहिरप्यमी करा
ये तवाक्षतनवोऽङ्क एष यः ।
विग्रहद्वितयमप्यतः परं
चिन्नभो नयसि नः करङ्किणी ॥११७॥

हे अम्ब ! ये तव अन्तःकरा अन्तःस्थिताः सत्यः कार्यं कुर्वन्तीति तथा-भूताः, येऽपि बहिःकरा बहिः स्थिताः सत्यः कार्यं कुर्वन्ति इति तादृशास्तव अक्षतनव इन्द्रियरूपाणि शरीराणि, य एषोऽङ्क एव एकादिर्नवान्तः अङ्कसमुदाय एव अङ्क-परिच्छिन्नत्वात्, तद्रूपा एव तादृशाक्षतनूपलक्षितं यत्स्थूलशरीरमतः परमपि यद्-विग्रहद्वितयं सूक्ष्मशरीरं कारणशरीरं च, यद्वाऽतः परं अक्षरूपसूक्ष्मशरीरात् परं यद्

विग्रहद्वितयं स्थूलशरीरं कारणशरीरं च, तद्द्वितयमपि करङ्किणी त्वं चिन्नभः परमाकाशाख्यं यच्चिदाकाशं तन्नयसि ॥ ११७ ॥

अथ कालिकायाः क्रोधनीरूपं स्तौति—

यत्प्रकृत्यवधितत्त्वमण्डलं
क्ष्मामुखं परिमितग्रहास्पदम् ।
क्रोधनी त्वमसि तज्जिहीर्षया
मन्त्रमूर्तिरिह ते विजृम्भते ॥११८॥

हे अम्ब ! विलोमक्रमेण यत् क्ष्मामुखं क्षित्यादिकम्, प्रकृत्यवधि प्रकृत्यन्तम् । परिमितग्रहास्पदं क्ष्मादिकस्य प्रकृत्यन्तस्य तत्त्वमण्डलस्य परिमितत्वात् तद्विषयकत्वेन परिमितः परिच्छिन्नो यो ग्रहो ज्ञानं तस्यास्पदं विषयो यत्तत्त्वमण्डलं तत्त्वसमूहस्तव विग्रहस्तज्जिहीर्षया तस्य लयेच्छया उपलक्षिता त्वं क्रोधनी असि । क्रुध्यति जगद्धर्तुं या सा क्रोधनी, बाहुलकात् कर्तरि ल्युट् । इह जगल्लयावस्थायां क्ष्मादिकस्य प्रकृत्यन्तस्य तत्त्वमण्डलस्याभावेऽपि वर्णानां मातृकारूपाणां प्रागुक्ततत्त्वमण्डलोपादानभूतानां तदानीमपि सत्त्वेन तद्घटिता ते मन्त्रात्मिका मूर्तिः, तदानीमपि विजृम्भते स्वरूपेण वर्तत एव, अतो मन्त्रमूर्तेः प्रलयेऽपि सत्त्वात् सा नित्या इति भावः । इदं च वर्णानां तद्घटितमन्त्राणां च नित्यत्वं नादाच्च तेषामभिव्यक्तिरेव, न तूत्पत्तिरिति मतमभ्युपेत्योक्तम् । यदि तु नादात्तेषामुत्पत्तिः स्वीक्रियते, तदा विश्वविलयदशायां तदुपादानभूतानां वर्णानां तद्घटितानां च मन्त्राणां कञ्चित्कालं स्थितिः, न तु सर्वथा सर्वदा तेषां स्थितिः । विश्वविलयानन्तरं तेषामपि विलयः कालक्रमेण भवत्येवेत्यभिप्रेत्येदमुक्तमित्यवधेयम् ॥ ११८ ॥

इदानीं क्रोधनीमेव प्रकारान्तरेण वर्णयति—

देवि कार्यकरणाह्वयं वपु-
स्त्वं त्रिशक्तिविसरद्गुणात्मकम् ।
मान्त्रमुग्ररससंकुलं परं
वीर्यमानयसि तज्जिहीर्षया ॥११९॥

हे देवि ! त्रिशक्तिविसरद्गुणात्मकं तिस्रः शक्तयो येषां ते त्रिशक्तयः, प्रकाशप्रवृत्तिनियमशक्तिमन्तो विसरन्तः सर्वेषु कार्येषूपादानतया प्रसरन्तो ये गुणाः सत्त्वरजस्तमांसि तदात्मकं यत् कार्यकरणाह्वयं कार्यं स्थूलं करणं सूक्ष्मं यत्तव वपुः, तज्जिहीर्षया तस्य वपुर्द्वयस्य कार्यकरणाह्वयस्य हर्तुमिच्छया त्वम् उग्ररससंकुलं रौद्ररसव्याप्तं मान्त्रं मन्त्रसम्बन्धि निजं कार्यकरणाह्वयवपुर्द्वयात् परं वपुः परं वीर्यं परमं बलं सामर्थ्यम् आनयसि प्रापयसि, मन्त्रात्मके निजवपुषि संहारानुकूलं परमं सामर्थ्यं

कार्यकरणरूपवपुर्द्वयजिहीर्षया संकल्पेन संपादयसीति भावः। क्रोधन्या मन्त्रात्मके वपुषि क्रोध एव स्थायिभावतया रौद्ररसरूपतया परिणमत इत्यवधेयम् ॥ ११९ ॥

इदानीं विश्वसंहारदशायां विश्ववासनाधारिणी विश्वाभिन्ना निरावरणचिद्‌गगनाश्रिता या भैरवी, सैव क्रियाशक्तिरूपं परिणाममवाप्ता सृज्यमानविश्वभेदडम्बरधरा विश्वभेदवती सर्गदशायां भवतीत्यागमोक्तमर्थमाश्रित्य दशाभेदेन भैरवीं स्तौति—

**ग्रन्थयोऽपि षडुमे यया धृता**
**सा निरावरणचिन्नभःपदा ।**
**स्पन्दमूर्तिधृतभेदडम्बरा**
**भैरवि त्वमसि विश्वभेदिनी ॥१२०॥**

हे उमे ! यया त्वया षड्‌ग्रन्थयो बाह्येन्द्रियपञ्चकजन्यप्रत्यक्षपञ्चकजन्यं वासनापञ्चकम् अन्तःकरणजन्यसुखादिप्रत्यक्षजन्या सुखादिविषयवासना च एका इति षड् ग्रन्थयोऽपि, अत्र ग्रन्थिशब्देन वासनोच्यते, भिद्यते हृदयग्रन्थिरित्यादौ ग्रन्थिपदस्य वासनार्थकत्वेन व्याख्यादर्शनात्, यया त्वया धृताः सा निरावरणचिन्नभःपदा अविद्यारूपावरणशून्यचिद्‌गगनाश्रिता शक्तिरूपा भैरवी त्वमसि। स्पन्दमूर्तिधृतभेदडम्बरा तु स्पन्दरूपा क्रियाशक्तिरूपा या तव मूर्तिस्तया धृतः सृज्यमानस्य जगतो भेदडम्बरो भेदप्रपञ्चो यया सा तु विश्वभेदिनी सर्गदशायां विश्वभेदवती त्वमसीति। एवं संहारदशायां विश्वाभेदिनी सर्गदशायां तु विश्वभेदिनी भैरवी त्वमसीति भावः ॥ १२० ॥

साम्प्रतमष्टपुरीनिषण्णजगद्बीजवासनानामपि संहर्तृत्वेन मातरं स्तौति—

**अष्टपुर्युदितबीजवासना-**
**संहृतिप्रवणरश्मिपुञ्जया ।**
**लीढमात्रमुखभेदिता त्वया**
**भूयसे जननि लेलिहानया ॥१२१॥**

हे जननि ! संहृतिप्रवणरश्मिपुञ्जया संहृतिप्रवणः संहृत्युन्मुखो रश्मिपुञ्जश्चिद्रूपशक्तिप्रकरो यस्याः सा तथाभूता तया। स्थूलं जगद् जग्ध्वा सूक्ष्ममपि वासनारूपं तदत्तुं भूयसे संहाराय मुखं लिहन्त्या त्वया अष्टपुर्युदितबीजवासना अष्टपुर्याम् उदिता संश्रिता या जगद्बीजभूता वासना सा लीढमात्रमुखभेदिता लीढमात्रेण मुखेन भेदिता विदारिता विनाशिता, भवतीति शेषः।

अष्टपुरीस्वरूपमुक्तं प्राक् ६३ श्लोकव्याख्यायाम्। अत्र यद्यपि जगद्बीजवासनानां संहारो मातुः संकल्पेनैव भवति, न तु लेलिहानजिह्वावता मुखेन, तदानीं मातुः प्राकृतरूपासंभवात्; तथाप्यत्र मातुर्लेलिहानत्वं संहारौत्सुक्यसंवलितसंकल्पयितृत्वरूपमेवेति ध्येयम्। अत्र लेलिहानयेति यङ्लुगन्तात् कानचि शानचि वा रूपम्। तत्तु न युक्तम्,

यङ्लुगन्तस्यात्मनेपदनिमित्तहीनत्वेन परस्मैपदित्वात् । यद्वा लेलेढीति लेलिट्, यङ्लुगन्तात् कर्तरि क्विप, तथा लेलिहा । अनया ध्यानेन संनिकृष्टया त्वया, इत्येवं-योजनया साधुत्वं संपाद्यम् ॥ १२१ ॥

जगद्बीजवासनाधारिणीं निरावरणचिद्गगनाश्रितामभेदाश्रयां स्वस्वरूपे विश्व-संहरणशीलां भैरवीं निरूप्य ततः परां जगद्बीजवासनाभक्षिणीं खेचरीं लीढमात्रमुख-भेदिता त्वयेति केवलं कर्मणैव निरूप्य पराप्रभृतिवैखरान्तशब्दविस्तरविलापनकर्मणा चिद्विकासरूपेणाधेयेनानावरणशम्भुसद्मरूपेणाधारेण खेचरीति नाम्ना च निर्दिशन् खेचरीं स्तौति—

त्वं पराप्रभृतिवैखरान्तिमो-
ल्लेखविस्तरविलापनोन्मुखी ।
देव्यनावरणशम्भुसद्मगा
खेचरी भवसि चिद्विकासिनी ॥१२२॥

हे देवि ! पराप्रभृतिवैखरान्तिमः परावाचमारभ्य वैखरीवागन्तो यश्चतुर्विध उल्लेखविस्तरः, उल्लिख्यते बोध्यतेऽर्थो येनासावुल्लेखः शब्दस्तेषां विस्तरः समुदायस्तस्य विलापनोन्मुखी विलापनं कर्तुमारब्धवती, अनावरणं यत् शम्भुसद्मनभस्तद्गता सती चिद्विकासिनी चिद्रूपप्रकाशवती त्वं खेचरी भवसीति ॥ १२२ ॥

पूर्वमनावरणशम्भुसद्मगा खेचरी भवसीत्युक्तम्, तत्र कथमनावरणशम्भुसद्म-गेति जिज्ञासायां मध्यमेनाध्वना शाम्भवं बिन्दुं गता खेचरी असीत्युत्तरम् । मध्यमाध्व-द्वारं कुण्डल्या निरुद्धमिति कथं मध्यमेनाध्वना गमनमिति जिज्ञासायां कुण्डली तडिदिवोत्पतन्तीत्युत्तरम् । इतीदमागमरहस्यं समाधिमार्गोपन्यासमुखेन दिदर्शयिषु-र्मातरं वृत्तिविशेषरूपखेचरीमुद्रारूपतया स्तौति—

वह्निसूर्यशशिधामघस्मरी
कुण्डली तडिदिवोत्पतन्त्यसौ ।
शाम्भवं जननि बिन्दुमध्वना
मध्यमेन च गतासि खेचरी ॥१२३॥

हे जननि ! वह्निसूर्यशशिधामघस्मरी वह्निसूर्यशशितेजसामभिभाविकाऽसौ कुण्डली यदोत्पतन्ती भवति, तडिदिवोत्पतन्ती भवति, उत्थिता भवति, तदा मध्यमा-ध्वद्वारस्यापावृतत्वात् खेचरी त्वं मध्यमेनाध्वना सुषुम्णानाडीरूपेण बिसतन्तुनिभेन शाम्भवं बिन्दुम् अनावरणचिद्गगनगतं बिन्दुं ब्रह्मरूपं गता, असि भवसीति । अत्र घस्मरेति पाठः साधुः ॥ १२३ ॥

साम्प्रतं निर्विकल्पकसविकल्पकसमाधिगोचरतोपन्यासमुखेन मातरं स्तौति—

**मुद्रितस्वकृततत्त्वमण्डला**
**जृम्भसे स्वजठरे सदोदिता ।**
**वृन्दचक्रगतपञ्चभेदगा**
**त्वं शिवे दिशसि योगजां श्रियम् ॥१२४॥**

हे शिवे ! त्वं निर्विकल्पकसमाधौ मुद्रितस्वकृततत्त्वमण्डला मुद्रितं प्रविलापितं स्वकृतं स्वनिर्मितं तत्त्वमण्डलं षट्त्रिंशत्पदार्थसार्थो यया सा तथाभूता सती स्वजठरे स्वस्वरूपे सदा उदिता सती जृम्भसे पुनः पुनरनुभवरूपां जृम्भां वृद्धिं प्राप्नोषि । सविकल्पकसमाधौ तु वृन्दचक्रगतपञ्चभेदगा वृन्दाख्यं यच्चक्रं वृन्दक्रमशब्देनाप्यागमेषूपवर्णितं तद्गता ये पञ्चभेदा ज्ञानसिद्धामन्त्रसिद्धामेलापसिद्धाशाक्तसिद्धाशाम्भवसिद्धाख्या मुद्रापञ्चकरूपास्तद्गता तद्गोचरीकृता सती त्वं योगजां श्रियं सिद्धिसम्पदं दिशसीति । एतच्च वृन्दक्रमे मुद्रापञ्चकं राजानकशितिकण्ठकृते महानयप्रकाशस्य सप्तम उदये द्वितीयपद्यव्याख्यायां प्रसिद्धमिति तत एवावगन्तव्यमिति । क्रमतश्चरमस्यापि निर्विकल्पकसमाधेः पद्यार्धेन प्रागुपन्यासः प्राशस्त्यात् । क्रमतोऽचरमस्यापि सविकल्पकसमाधेश्चरममुपन्यासस्ततो निकृष्टत्वात् ॥ १२४ ॥

साम्प्रतमागमप्रसिद्धं कादिहादिमतद्वयमाश्रित्य क्रमविशेषसन्निवेशिभिः 'ऋ ॠ ऌ ॡ' इत्येवंरूपषण्ढस्वरचतुष्टयवर्जितैः स्वरैर्मान्तैर्विसर्गान्तैर्वा व्यञ्जनानां योगे मन्त्रस्वरूपं तद्देवताशक्तिस्वरूपं च निष्पद्यमानं ज्ञायत इत्यागमनिगूढमर्थं विवृण्वन् मातरं स्तौति—

**ज्ञानमम्ब तव भेदितैः स्वरै—**
**स्तैस्तु योग इह षण्डवर्जितैः ।**
**व्यञ्जनैरुदयते महान्तिकै-**
**र्मन्त्रशक्तियुगलं कहादिभिः ॥१२५॥**

हे अम्ब ! षण्ढवर्जितैः प्रागुक्तषण्ढस्वरभिन्नैस्तैर्लोकप्रसिद्धैः । भेदितैर्मूलस्वरस्याकारस्य भेदेन निष्पादितैः स्वरैर्द्वादशभिर्महान्तिकैरन्तिकस्थितानुस्वारविसर्गयुक्तैरनुस्वारविसर्गान्तैरिति यावत् । मकारपदेनानुस्वारः प्रायेणागमसम्प्रदाये गृह्यते, हकारेण च विसर्गः । हकारः शक्तिरूपोऽर्धविसर्गरूपश्चेति तत्र तत्रागमेषु प्रसिद्धमेव । तेन हकारेणात्र लक्षणया विसर्गो गृह्यते । एवंभूतैः स्वरैः कहादिभिः कादिभिर्हादिभिश्च व्यञ्जनैश्च, योगे तु प्रागुक्तानां स्वराणामेतादृशानां व्यञ्जनानां च योगे च, मन्त्रशक्तियुगलं मन्त्रशक्त्योर्युगलं यस्मिन् तत्तथाभूतं मन्त्ररूपेण शक्तिरूपेण च तव ज्ञानमुदयत इति ॥ १२५ ॥

आगमशास्त्रे देहान्तर्गतचिदम्बरगता शक्तेश्चतुर्विधा मूर्तिर्बिन्दुचक्रशशिकुण्डली शिखारूपा प्रसिद्धा। तत्र बिन्दुचक्रं मूलाधारचक्रम्, परम्परया जगन्मूलस्य बिन्दोराधारचक्रत्वात्। शशिरपानवाताधारचक्रम्। कुण्डली कुण्डलिनी। सा च सार्धत्रिवलयाकारा भुजगीति प्रसिद्धैव। शिखापदेन शिखोपलक्षितो वह्निर्जाठरस्तदाधारचक्रमिति। तत्र बिन्दुः शिवात्मकः शम्भुपदेनापि व्यपदिश्यते। तत्र चिदम्बरगतैव चातुर्विध्येनावस्थिता शक्तिर्यदा शम्भुरूपं बिन्दुचक्रं विनिर्भिद्य उपर्युपरि तत्तत्स्थानेषु पवनसहकारेण विवर्तते, तदा परा-पश्यन्ती-मध्यमा-वैखरीरूपाणि क्रमेणासादयन्ती चतुष्षष्टिवर्णवर्गरूपतया विद्योतते। तत्र च यद्यप्यागमेषु सम्प्रत्युपलभ्यमानेषु न वर्णानां चतुःषष्टिरुपलभ्यते, तथापि पाणिनीयशिक्षायां तृतीयमारभ्य पञ्चमश्लोकैः सोपलभ्यते। यदुक्तम्—

त्रिषष्टिश्चतुष्षष्टिर्वा वर्णाः शम्भुमते मताः।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा॥
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः॥
अनुस्वारो विसर्गश्च ≍क ≍पौ चापि पराश्रितौ।
दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च॥

तमिमं शास्त्रसिद्धं योगिजनानुभवसिद्धं चार्थं मातृविग्रहरूपतयोपन्यस्यन् मातरं स्तौति—

**बिन्दुचक्रशशिकुण्डली शिखा**
**मूर्तिरम्बरगता चतुर्विधा।**
**शक्तिरत्र कृतशम्भुभेदना**
**षष्टिरम्बरगताश्चतुष्पराः ॥१२६॥**

हे अम्ब! अम्बरगता देहान्तरवस्थितचिदम्बरगता बिन्दुचक्रशशिकुण्डली शिखारूपा तव चतुर्विधा मूर्तिरस्ति। अत्र आसु मूर्तिषु या शक्तिः कृतशम्भुभेदना कृतबिन्दुचक्रभेदना, सैव तत्तत्स्थानेषु तत्तद्रूपेण विवर्तमाना पर्यवसानेऽम्बरगताश्चिदम्बरगताश्चतुष्परा षष्टिश्चतुष्षष्टिवर्णरूपा भवतीति ॥ १२६ ॥

अथेदानीं चतुष्षष्टिवर्णरूपाणां शक्तीनां सर्गलयोपादानत्वेन मङ्गलं स्तौति—

**आदिहान्तनिजदेहनिर्गताः**
**षष्टिरत्र चतुरुत्तरा रुचः।**
**खेचरीजठरनिष्ठितास्त्वया**
**मङ्गले परमभेदतः कृताः ॥१२७॥**

हे मङ्गले ! अकारादिहकारान्तोनपञ्चाशद्वर्णसमुदायरूपो यो निजदेहः सूक्ष्मशरीरम् तन्निर्गता याः स्थूलाः श्रोत्रग्राह्याश्चतुरुत्तराः षष्टिवर्णाः, रुचः रोचमानाः शक्तयोऽत्र चिदम्बरे सन्ति। चतुषष्टिर्वर्णाश्च प्रागुक्ता बोद्धव्याः। सा चतुष्षष्टिः परं निर्गमनानन्तरं लयावसरे त्वया खेचरी शक्तिजठरे निष्ठिता निष्ठां समाप्तिं प्रापिताः सत्योऽभेदतः कृता अभेदेन विशिष्टाः कृताः, पुनरप्यभेदमापादिता इति यावत् ॥ १२७ ॥

वाचश्चतस्रोऽवस्थाः क्रमेणावस्थिताः—परा, पश्यन्ती, मध्यमा, वैखरीति। एताश्च कलाशब्देनाप्यागमेषु व्यवह्रियन्ते, शक्तिरूपत्वात्। तत्र ज्ञानशक्तेर्दीधितिषूदितासु क्रियाशक्ते रौद्रीरूपाया दीधितेरुदयो भवति। ततश्च रौद्रीसामरस्यमापन्ना वैखरीवाक् संपद्यते। मन्त्रदीधितिषु सूक्ष्मासूदितासु इच्छाशक्तिरूपाया वामायाः शक्तेरुदयो भवति। इयं च विश्वस्य वमनाद् वामेत्युच्यते। वामाशक्तिसामरस्यमापन्ना पश्यन्ती भवति। योगदीधितिषूदितासु प्रकाशात्मिकाया अम्बिकाया उदयो भवति, तत्सामरस्यमापन्ना परा वागुक्ता। विमर्शरूपस्य शक्तिसामान्यस्य दीधितेरुदये ज्ञानशक्तिरूपा ज्येष्ठाशक्तिरुदेति। तत्सामरस्यमापन्ना तु मध्यमा वागित्युक्तं तत्र तत्रागमेषु। एतासां चतसृणां कलानां समाधौ प्रविलापने तु शम्भुसंज्ञके बिन्दाववशिष्टेऽशेषमातृकाणां बीजभूतः स्वरोऽप्यकाररूपः स्वरूपं विहाय सूक्ष्मरूपेण बिन्दौ स्थितः। बिन्दुदीधितिषूदितासु बिन्दुरूपेण विद्योतते। अथ पुनरपि विमर्शशक्तेर्वर्णसर्गोन्मुख्ये परापश्यन्त्यादिक्रमेण वर्णभेदः समुत्पद्यत इतीममागमप्रक्रियां मनसि निधाय तन्निदानत्वेन मातरं स्तौति युग्मेन—

ज्ञानदीधितिषु रौद्रदीधिते-
मन्त्रदीधितिषु वामयोदितम्।
योगदीधितिषु जृम्भतेऽम्बिका
ज्येष्ठयैवमथ शक्तिदीधितेः ॥१२८॥

देव्यभेदितकलाचतुष्टया
शम्भुदीधितिषु दीप्यते स्वरः।
तत्स्थितिस्त्वमपि वर्णभेदिनी
मङ्गले वहसि यत्प्रधानताम् ॥१२९॥

हे देवि ! ज्ञानदीधितिषु उदितासु रौद्रदीधितेरुदयो भवति। मन्त्रदीधितिषु तूदितासु वामया शक्त्या कर्तृभूतया उदितं भवति। योगदीधितिषूदितासु अम्बिका जृम्भत उदयते। अथैवमुक्तप्रकारेण शक्तिदीधितेरुदये ज्येष्ठया शक्त्या उदितं भवति। यदा त्वं विश्वविलापनक्रमेण स्वस्मिन्नभेदितकलाचतुष्टया भवसि, तदा शम्भुदीधितिषु, शम्भुरत्र बिन्दुः, उदितासु मातृकाणां सर्वासां निदानभूतोऽकारः स्वरो बिन्दुरूपेण

दीप्यते विद्योतते । हे मङ्गले ! यत्प्रधानतां यत्परादिशक्तिप्रधानतां वर्णसर्गकाले त्वं वहसि, तत्स्थितिस्तत्परादिशक्तिरूपेण स्थिता त्वं वर्णभेदिनी वर्णभेदवती अपि वर्णसर्गकाले त्वं भवसीति ॥ १२८–१२९ ॥

महति चिद्गगने चित्सामरस्यापन्ना चितिशक्तिरेकैव, तस्या लक्षणभूताश्चिच्त्विषश्चिद्दीधितयस्तु अनन्ताः। ताश्च सदैव उदिताः, मध्ये लोपाभावाच्च सकृदेवोदिताश्च । तासु च स्वप्रकाशासु सहजेन स्वरूपेणावस्थितासु जगत्कल्पनाभेदा विनिवर्तन्त इत्येतमर्थजातमागमग्रन्थेषु तत्र तत्रोपवर्णितमनेन पद्येन संगृह्णन् मातरमभिमुखीकरोति—

**सर्वदैव सकृदास्थितोदयाः**
**सर्वतः क्षपितकल्पनाभिदाः ।**
**इत्थमेकवपुषा त्वया निजाः**
**स्फारिता महति लक्ष्मचिच्त्विषः ॥१३०॥**

हे अम्ब ! यास्तव लक्ष्मचिच्त्विषो लक्षणभूताश्चिद्दीधितयः सर्वदैव कालत्रयेऽपि सकृदास्थितोदयाः सकृत् स्वीकृताविर्भावाः स्वेन सहजरूपेणावस्थितिकाले सर्वतः सर्वप्रकारेण क्षपितकल्पनाभिदा विनिर्वर्तितजगत्कल्पनाभेदाः, इत्थंभूतास्ता निजाः स्वकीयाश्चिद्दीधितिरूपाः शक्तय एकवपुषा एकमात्रविग्रहया त्वया महति चिद्गगने स्फारिताः सर्गकाले व्युत्थानकाले वा स्वस्थितविषयग्रहणाय प्रवर्द्धिता इति ॥ १३० ॥

अथ साम्प्रतं जाग्रत्स्वप्नसुषुप्तिषु तिसृष्ववस्थासु निर्विशेषसमाधिरूपे चाखिलजगत्प्रविलापने समाध्यवस्थाविशेषे तुरीयेऽपि चिद्रूपा शक्तिर्वर्तत एवेत्युक्त्या, "न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्" इत्यादिश्रुत्या च समर्थितं चितिशक्तेर्नित्यत्वमुपन्यस्य विज्ञानवादिमतं प्रतिक्षिपन् मातरं स्तौति—

**उद्यमप्रथनचर्वणात्मकं**
**जागरादिपदमम्ब यत्क्रिया ।**
**यत्तुरीयमपि तद्विलापनं**
**भातनुस्त्वमखिलेऽत्र जृम्भसे ॥१३१॥**

हे अम्ब ! उद्यमप्रथनचर्वणात्मकं सर्गस्थितिसंहारात्मकं जागरादिपदं जाग्रत्स्वप्नसुषुप्तिपदैरप्यभिधेयं यत्क्रियारूपं यच्च तुरीयमपि चतुर्थमपि तद्विलापनं तस्य जगतो विलापनं विलापनाधिकरणमत्र प्रागुक्तेऽखिलेऽवस्थाचतुष्टये भातनुश्चिन्मात्रशरीरा त्वं जृम्भसे स्फुटं प्रतीयसे ॥ १३१ ॥

प्रमातुः पुरुषस्येन्द्रियजन्यो द्विविधो विमर्शः—तत्राद्यो निर्विकल्पकः प्रकारसंसर्गादिकल्पनारहितो निष्प्रकारकः, द्वितीयस्तु प्रथमविमर्शजन्यः सविकल्पकः प्रकारत्वादिना विकल्प्यमानार्थसहितः। तत्राद्यो विमर्शः "भातनुस्त्वमखिलेऽत्र जृम्भसे"

( श्लो० १३१ ) इत्यत्र "यो विकल्परहितः" ( श्लो० १३२ ) इत्यादिना "प्राग्विमर्श इह" ( श्लो० १३२ ) इत्यन्तेन, द्वितीयस्तु "तन्मुखी" ( श्लो० १३२ ) इत्यादिना "तनुस्तव" ( श्लो० १३२ ) इत्यन्तेन ग्रन्थेन दर्शितः। तदिदं विमर्शद्वितयं शक्तेस्तनुत्वेन निरूपयन् मातरं स्तौति—

**यो विकल्परहितोऽक्षमण्डला-**
**रूढ उल्लसति मातुरम्बिके।**
**प्राग्विमर्श इह तन्मुखी प्रथा**
**ज्ञानमर्थविधृता तनुस्तव ॥ १३२ ॥**

हे अम्बिके ! यो विकल्परहितः प्रकारत्वादिना विकल्प्यमानार्थरहितोऽक्षमण्डलारूढ इन्द्रियजन्य इह विषयेन्द्रियसन्निकर्षे सति मातुः प्रमातुः पुरुषस्य विमर्शो ज्ञानं प्रत्यक्षरूपं प्राक् पूर्वं प्रथम उल्लसति जायते, तन्मुखी तत्करणिका या विषयाणां प्रथा ज्ञानं ज्ञानरूपा सा तव अर्थविधृता अर्थैः प्रकारत्वेन संसर्गत्वेन विशेष्यत्वेन च विकल्प्यमानैः प्रकारसंसर्गविशेष्यरूपैर्विधृता सम्बद्धा तव तनुः प्रत्यक्षरूपा अस्ति। प्राग्विमर्शरूपा तव तनुस्तु न प्रत्यक्षगोचरेति नाभिलप्या, अत एव नैयायिकैरनुमेयेत्युच्यत इति ॥ १३२ ॥

पूर्वमीदृगेतदिति वस्तुविषयको मानसः सविकल्पको विमर्शो जायते, यः प्राङ् मातुरर्थविधृततनुत्वेन निरूपितः। स च संविद्रूपत्वात् संवित्क्रमरूपो वृन्दचक्रगः, शब्दानुविद्धत्वाच्च मन्त्ररूपः। तं विमर्शं द्वारीकृत्यैव मातुर्जगत्सर्गरूपा क्रिया, लोकस्य वा घटादिसर्गरूपा क्रियेत्यागमसिद्धान्तं विशदीकर्तुमुपन्यस्यन् तन्मन्त्राधिष्ठातृतया मातरं स्तौति—

**ईदृगेतदिति तत्प्रथास्थिते-**
**र्यो विमर्श उदितोऽन्तरक्षतः।**
**मन्त्र एष तव वृन्दचक्रगो**
**यन्मुखी भवति तावकी क्रिया ॥ १३३ ॥**

हे अम्ब ! तत्प्रथास्थितेः, सा चासौ प्रथा चेति तत्प्रथा, तस्या अभिलापरूपेण या स्थितिस्तस्याः, प्राग् ईदृगेतदिति नीलो घट इत्यादिरूपो यो विमर्शः, अन्तरक्षतः अन्तःकरणादुदितः, स एष विमर्शस्तववृन्दचक्रगः संविद्रूपः शब्दानुविद्धत्वान्मन्त्रोऽस्तीति शेषः। यन्मुखी यद्विमर्शपूर्विका तावकी त्वदीया सर्गरूपा क्रिया भवति। लौकिकी क्रियेति पाठे लोकस्य घटादिसर्गरूपा यद्विमर्शद्वारिका क्रिया भवतीति। लोके हि पूर्वं वस्तुनः सविकल्पकं ज्ञानं ततः पश्चात् तस्य सर्ग इति क्रमः संप्रतिपन्नःतमादायैत-

दुक्तिरिति। तत्प्रथास्थितेरित्यत्र तत्प्रथापदेन "ज्ञानमर्थविधृता तनुस्तव" इति पूर्वश्लोकचतुर्थपादोक्तोऽर्थः परामृश्यत इति ॥ १३३ ॥

अथ साम्प्रतं समष्टिरूपयोः शिवशक्त्योर्योग एव व्यष्टिरूपयोर्भोक्तृभोग्ययोः सर्गपूर्वकयोगपुरःसरो भोगः, नान्यथा नान्यदा चेतीममागमार्थमम्बास्तुतिमुखेन विशदीकर्तुमाह—

भोग्यभोक्तृपरिघट्टनोल्लस-
न्निर्मलप्रमदनिर्भरोदया ।
लोलिताखिलहृषीकवृत्तिका
युक्तिरम्ब ! तव विश्वमेलिनी ॥ १३४ ॥

हे अम्ब ! तव शिवेन सह युक्तिरेव सर्गार्थं योग एव विश्वमेलिनी भोगार्थं विश्वस्य सर्वस्य भोक्तृवर्गस्य भोग्यवर्गस्य च संयोजिका। शिवशक्त्योर्युक्तिमेव विशिनष्टि पूर्वार्धेन—भोग्येत्यादि। भोग्यानां भोक्तॄणां च यत् परस्परं परिघट्टनं संश्लेषणं तेनोल्लसन् यो निर्मलो दुःखाननुविद्धः प्रमदः प्रहर्षः, तेन निर्भरः परिपूर्ण उदय उत्पत्तिर्यस्या युक्तेः सा तथाभूता। किञ्च, लोलिताखिलहृषीकवृत्तिका लोलिता भोगार्थं चञ्चलीकृता अखिलाः सर्वा हृषीकाणामिन्द्रियाणां वृत्तयो यया सा तथाभूता। अयं भावः—शिवशक्तियुक्तौ भोग्यभोक्तृयुक्तिः, तया भोक्तुः प्रमदो भोगार्थमिन्द्रियवृत्तीनां लौल्यं चेति जीवानुग्रहार्थमेव करुणया शक्तेः शिवेन सह योग इति ॥ १३४ ॥

पूर्वं सविकल्पकं शब्दाद्यनुभवरूपं भोगं मातुः शिवयुक्तिसाध्यं प्रदर्श्य साम्प्रतं निर्बीजसमाधौ ज्ञप्तिमात्रस्य वासनारहितस्य निर्विकल्पस्य तदाकारचित्तवृत्तिरूपतयाऽधिष्ठानेन शिवशक्त्योः सामरस्योदयसंपादकत्वेनापि मातरं स्तौति—

ज्ञप्तिमात्रमपनीतवासनं
निर्विकल्पमधिरुह्य चित्त्विषा ।
सामरस्यकृतशाश्वतोदया
त्वं हि शक्तिरधितिष्ठसीश्वरे ॥ १३५ ॥

हे अम्ब ! अपनीतवासनम् अपनीता वासना यतः सोऽपनीतवासनस्तमत एव निर्विकल्पं विकल्प्यमानविषयसम्पर्कशून्यम्, ज्ञप्तिमात्रमीश्वरं चित्त्विषा चितश्चित्तस्य त्विषा दीप्तिरूपया वृत्त्याऽधिरुह्याधिष्ठाय सामरस्यकृतशाश्वतोदया सामरस्यस्य शिवशक्त्योरेकीभावस्य कृतः शाश्वत उदयः साधकं प्रत्याविर्भावो यया शक्त्या सा तथाभूता शक्तिस्त्वमीश्वरे शिवेऽधितिष्ठसि ईश्वरमधिष्ठाय तिष्ठसि हि। अत्र हिशब्दः प्रसिद्धौ। सा च प्रसिद्धिः प्रकृते आगमिकी ग्राह्येति ॥ १३५ ॥

साम्प्रतं निर्विकल्पे समाधौ शिवशक्त्योः सामरस्यमुपपादयन् शक्तिरूपां मातरं स्तौति—

शून्यमम्ब गगनं हि या महत्
　　स्पन्दबीजमनिकेतमीयुषी ।
लीयसे झटिति चित्तया त्वया
　　शम्भुरश्मिवपुषाऽत्र भूयते ॥ १३६ ॥

हे अम्ब ! या त्वं महद् निरतिशयमहत्त्ववत्, अपरिच्छिन्नमिति यावत् । शून्यं विषयावभासरहितं स्पन्दबीजं स्पन्दस्य प्रथमस्पन्दस्येच्छाशक्तिरूपस्य बीजम् अनिकेतं स्वाधिष्ठानरहितं गगनं हि । हिशब्दः प्रसिद्धौ । विद्वदनुभवगोचरत्वेन प्रसिद्धं चिद्गगनमीयुषी उपगता सती झटिति लीयसे । अत्र अस्यां दशायां चित्तया निर्विकल्पचित्तवृत्तिरूपया- त्वया शम्भुरश्मिवपुषा चिद्रूपशिवात्मकप्रकाशशरीरया भूयते । अनेन तदा शिवशक्त्योः सामरस्यं सूचितम् ॥ १३६ ॥

साम्प्रतं शमपूर्णे शिवस्वरूपे चित्पयोराशौ शिवाश्रितायाः शक्तेः परिणामभूतं यज्ज्ञानं तद् उत्पादविनाशशीलत्वेनानवस्थितत्वाल्लहरीत्यागमिकैरुच्यते । यस्तु शिव-सामरस्यमापन्नायाः शक्तेर्विमर्शाख्य आद्यो विकारः सर्गानुकूलः, यच्च क्रमापरपर्यायस्य सर्गस्यानुकूलं सर्गानल्पत्वेन मूर्तिशतम्, यच्च सर्गध्वंसानुकूलं मूर्तिशतं तद् ऊर्ध्वं-मण्डलापदेन तैरुच्यते, क्रमध्वंसयोरूर्ध्वं स्थितत्वादित्यागमप्रसिद्धमर्थजातं मातृस्तुति-मुखेन व्यञ्जयति—

ज्ञानमम्ब शमपूर्णचित्पयो-
　　राशिलम्बिलहरी त्वमुच्यसे ।
तद्विमर्शतदुपाश्रितक्रम-
　　ध्वंसमूर्तिशतमूर्ध्वमण्डला ॥ १३७ ॥

हे अम्ब ! ज्ञानं त्वं शब्दादिविषयग्राहि उत्पादविनाशशीलं यज्ज्ञानं तद्रूपा त्वं शमपूर्णचित्पयोराशिलम्बिलहरी शमपूर्णः शान्तो यः शिवात्मकश्चित्पयोराशिः, तस्मिन् लम्बिनी लहरी, उत्पादविनाशशीलत्वेनानवस्थितत्वाल्लहरीत्वारोपः, उच्यसे आगम-विद्भिः । तद्विमर्शतदुपाश्रितक्रमध्वंसमूर्तिशतं तस्य चित्पयोराशेः सम्बन्धी यः शक्तेः परिणामविशेषो विमर्शः, यच्च तं विमर्शं स्वकारणत्वेनोपाश्रितयोः क्रमध्वंसयोः सर्ग-प्रलययोरनुकूलं तत्त्वमूर्ध्वमण्डला सर्गप्रलययोरूर्ध्वमुपरि कारणत्वेन प्राङ् मण्डलं स्थानं यस्याः सा ऊर्ध्वमण्डला उच्यसे ॥ १३७ ॥

जगतः स्थितिकाले विमर्शात्मकबुद्धिरूपायाः शक्तेर्या तत्तद्भावाकारा चिदात्मकशिवसम्बन्धाद् भामयी वृत्तिः, सैव चिद्रूपं शिवं पुरस्कृत्य चिदुपादान-कत्वेन चिदात्मकं विश्वमवभासयति, इतीममागमार्थं मातृस्तुतिमुखेन व्यनक्ति—

स्त्यायमानशिवचिद्रसात्मकं
भाववृन्दमधिरुह्य भामयी ।
खानिलाग्निजलभूमिभासिनी
शम्भुतः प्रभृति जृम्भसे शिवे ॥ १३८ ॥

हे शिवे ! भामयी स्वच्छत्वेन शिवात्मकचित्प्रतिबिम्बग्रहणात् प्रकाशमयी विमर्शात्मकबुद्धिवृत्तिरूपा त्वं स्त्यायमानशिवचिद्रसात्मकं स्त्यायमानो विषयरूपताप्राप्त्या घनीभवन् यः शिवात्मकश्चिद्रसश्चिदानन्दस्तदात्मकं तदुपादानकत्वेन तद्रूपं भाववृन्दं खानिलाग्निजलभूम्यादिपदार्थजातमधिरुह्य तदाकारतापत्त्या तेन सह संयुज्य खानिलाग्निजलभूमिभासिनी खानिलादीनां प्रकाशिका त्वं शम्भुतः प्रभृति चिद्रूपं शिवं पुरस्कृत्य जृम्भसे जगदवभासे व्याप्रियसे ॥ १३८ ॥

शक्तिरेव स्पन्दक्रमेण स्फारीभूता विमर्शात्मकबुद्धिरूपेण परिणता उपनिषदागमादिगुरूपदेशसहकारेण चिदात्मकशिवविषयकतत्तद्वर्णानुविद्धवृत्तिरूपतामाप्नुवती शिवात्मकं चिद्गगनमज्ञानरूपावरणापनयनेन विषयीकरोति, इति ह्यागमस्थितिः। वृत्तिरूपस्य प्रत्ययस्य वर्णपदाद्यनुविद्धत्वं चान्यत्राप्युक्तम्—"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥" इति । तमिममागमागतमर्थं मातृस्तुतिमुखेन विशदीकरोति—

स्फारतावकविमर्शपावक-
भ्राम्यमाणघनसारभात्मिकाः ।
पञ्चदिव्यकुलबीजविग्रहाः
त्वत्त्विषोऽम्ब ! शिवचिन्नभःप्रदाः ॥ १३९ ॥

हे अम्ब ! स्फारः प्रवृद्धो बुद्धिरूपतया परिणमन् स्थूलरूपतामाप्तो यस्तावकस्त्वदीयो विमर्शरूपः पावकः, प्रकाशात्मकत्वात् । तस्मिन् भ्राम्यमाणो यो घनसारः कर्पूरस्तस्य भात्मिका भासदृश्यः, सादृश्यात्तत्त्वारोपः, याः पञ्चदिव्यकुलबीजविग्रहाः पञ्च यानि दिव्यानि अलौकिकानि, अलौकिकत्वं च व्यवह्रियमाणवर्णविलक्षणत्वात्, तद्विलक्षणत्वं च जगत्सर्गहेतुत्वात्, कुलानि वर्गरूपाणि पञ्चाशद्वर्णरूपाणि बीजानि सर्वंजगदुपादानभूतानि तानि विग्रहः शरीरं यासां तास्तथाभूताः । तादृशबीजविग्रहवत्त्वं च तासां तादृशबीजवर्णानुविद्धत्वात् । त्वत्त्विषस्तव विर्शात्मकबुद्धिरूपायास्त्विषः, त्विट्सदृश्यो वृत्तयः, शिवचिन्नभःप्रदाः शिवात्मकं यच्चिन्नभश्चिद्गगनं तत्प्रदाः तत्साक्षात्काररूपत्वेन तत्प्रापिका इति ॥ १३९ ॥

आगमशास्त्रे षट् चक्राणि प्रसिद्धानि । तानि च मूलाधार-स्वाधिष्ठान-मणिपूर-अनाहत-विशुद्धि-आज्ञारूपाणि । तत्र पञ्चसु चक्रेषु क्रमेण मनसः स्थितौ सविकल्पः

समाधिः। तत्र बाह्यवैभवरहितोऽपि जगत्सर्गोऽन्तरेव निरस्तवैभवः सूक्ष्माभिः पञ्चेन्द्रिय-वृत्तिभिः स्वप्ने इव गृह्यमाणः समुद्योतते। षष्ठे चक्रे तु मनसः स्थितौ निर्विकल्पः समाधिः। तत्र च सर्वासां वृत्तीनामुपरमे सर्वस्यापि जगतो विषयरूपस्योपरमः। तदा हि निर्विकल्पचित्स्वभावस्य शिवस्य स्वरूपेणावस्थितिः। तदुक्तम्—"तदा द्रष्टुः स्वरूपेऽवस्थानम्" ( यो० १।३ ) इति। तमिममागमार्थं व्यक्तीकुर्वन् सर्ववृत्तिमूलीभूत-बुद्धिरूपत्वेन मातरं संबोध्य स्तौति—

**पञ्चचक्रतनुरेष जृम्भते**
**निर्विकल्पशिवबोधसत्फलः ।**
**पञ्चसु क्रममहीरुहः शिवे**
**त्वन्मरीचिषु निरस्तवैभवम् ॥ १४० ॥**

हे शिवे ! एष पञ्चचक्रतनुः प्रागुक्तचक्रपञ्चकशरीरः, तत्र भासमानत्वात्; क्रम-महीरुहः क्रमेण जायमानो भासमानश्च संसारवृक्षः, निर्विकल्पशिवबोधसत्फलः निर्विकल्पो निर्विषयो यः शिवात्मको बोधः स एव सत् शोभनं फलं यस्य स तथाभूतः, सविकल्पस्य निर्विकल्पपूर्वभावित्वेन निर्विकल्पहेतुत्वात्। पञ्चसु त्वन्मरीचिषु बुद्धि-रूपायास्तव वृत्तिषु। बुद्धिवृत्तिषु प्रकाशात्मकत्वाद् विषयप्रकाशत्वाच्च मरीचित्वारोपः। निरस्तवैभवं निरस्तं वैभवं विभुत्वं यस्मिन् कर्मणि तद् यथा भवति तथा जृम्भते ॥१४०

यानि षट्चक्राणि प्रागुक्तानि, तेषु चक्रपञ्चकस्य यथाक्रमं पञ्च अधिष्ठात्र्यो देवता ब्रह्मविष्णुरुद्रेश्वरसदाशिवरूपाः, यद्वा डाकिनी-राकिणी-लाकिनी-काकिनी-शाकिनीति पञ्चदेवताः। षष्ठचक्रे तु चिद्रूपः शिवः समवस्थितः। एताश्च पञ्चदेवता ऐङ्काररूपेण शक्तिबीजेन सृज्यन्ते, शक्तिसृष्टत्वात्तासाम्, बीजबीजिनोरभेदात्। ऐङ्काररूपं बीजं च अकारेकारयोः शिवशक्त्यभिधानयोः समवायेनाभिनिर्वृत्तं शिवोप-सर्जनशिवाया अभिधायकमिति शिवसामरस्यापन्नायाः शक्तेः स्रष्टृत्वमित्यागमस्थिति-मनुरुद्ध्य मातरं स्तौति—

**बीजमम्ब ! तव पञ्चधोदित-**
**स्फारितप्रगुणदेवताक्रमः ।**
**सिद्धिदोऽयमपरीतजृम्भणो**
**यः प्रकाश इह सोऽन्तचक्रगः ॥ १४१ ॥**

हे अम्ब ! पञ्चधोदितस्फारितप्रगुणदेवताक्रमः पञ्चसु चक्रेषु पञ्चधा उदित आविर्भूतो यः स्फारितः स्थूलात्मनाऽऽविर्भावरूपां वृद्धिं बीजेन नीतः प्रगुणः प्रकृष्ट-गुणयुक्तश्च देवताक्रमो देवतानां प्रागुक्तानां पञ्चानां क्रमस्तद्रूपं यत्तव बीजम्, कार्यकारणयोरभेदात्सामानाधिकरण्यनिर्देशः, अयम् इदं बीजं सिद्धिदो भोगमोक्ष-रूपसिद्धिप्रदो विद्यासिद्धिप्रदः। तदुक्तम्—

ऐङ्कारप्रञ्जरशुकीमुपनिषदुद्यानकेलिकलकण्ठीम् ।
आगमविपिनमयूरीमहमित्यन्तर्विभावये गौरीम् ॥ इति ।

अयमिति देवताक्रमापेक्षया पुंस्त्वनिर्देशः । यस्तु अपरीतजृम्भणो । विषयसम्पर्कराहित्यादपगतविकासः शिवाख्यः प्रकाशः, स इह षट्चक्रमध्येऽन्तचक्रग आज्ञाचक्रगत इति ॥ १४१ ॥

चिद्गगनरूपं शम्भुधाम सामरस्येनाधिष्ठाय स्थिता शक्तिरम्बरेश्वरीति, ज्ञक्तिरूपे धाम्नि तद्विकृतिरूपेण स्थिता शक्तिः खेचरीति, तदनु योगरूपे ( सविकल्पसमाधिरूपे ) धाम्नि स्थिता सूक्ष्मेन्द्रियवृत्तिरूपा शक्तिर्भूचरीति, ततो मन्त्ररूपे धाम्नि तत्तद्वर्णरूपेण स्थिता शक्तिर्दिक्चरीतीममागमार्थमुपदर्शयन् मातरं स्तौति—

**शम्भुधाम्नि पतिताम्बरेश्वरी**
**शक्तिधामनि ततोऽनु खेचरी ।**
**भूचरी त्वमनु योगधाम्न्यतो**
**दिक्चरी तदनु मन्त्रधामनि ॥१४२॥**

श्लोकोऽयं निगदव्याख्यातः ॥ १४२ ॥

प्रागुक्तानां चतसृणां शक्तीनां पञ्चमी शक्तिर्गोचरी नाम, सा च स्थूलेन्द्रियवृत्तिरूपे ज्ञाने स्फुरति । स्थूलाया इन्द्रियवृत्तेर्ज्ञानत्वं च प्रकाशात्मकरुद्रवैभवात् । एवं प्रागुक्तरीत्या पञ्चसु धामसु शक्तेः क्रमसत्त्वेऽपि यत्र शिवशक्त्योः सामरस्यं तस्मिन् निराश्रये पदे न शक्तेः कश्चन क्रमः, तत्र शक्तेः पार्थक्येनावस्थानादित्यागमसिद्धान्तं विवृण्वन् गोचरीरूपतया मातरं स्तौति—

**पञ्चमं झटिति पातुकक्रमा-**
**दीयुषी स्फुरसि रौद्रवैभवात् ।**
**ज्ञानधाम्नि निखिलेशि गोचरी**
**न क्रमस्तव निराश्रये पदे ॥१४३॥**

हे निखिलेशि ! पातुकक्रमात् प्रागुक्तक्रमचतुष्टये पातुकः पतितो यश्चतुर्थः क्रमस्तस्मादनन्तरं पञ्चमं क्रममीयुषी प्राप्तवती त्वं ज्ञानधाम्नि प्रागुक्तस्वरूपे ज्ञाने एव धाम्नि गोचरी भूत्वा रौद्रवैभवात् स्फुरणात्मकस्य रुद्रस्य यद् वैभवं सामर्थ्यं तद्बलात् स्फुरसि । एवं पञ्चसु धामसु तव तत्तद्रूपैः क्रमसत्त्वेऽपि निराश्रये पदे शिवशक्त्योः सामरस्यवान् तव क्रमो नास्ति, तदानीं तव शिवात् पृथक् सत्ताया अभावात् तव तत्तद्धामसु क्रमापादिकानामिन्द्रियवृत्तीनां तदानीं तत्राभावाच्चेति ॥ १४३ ॥

प्रागुक्ताः पञ्च गोचरीप्रभृतयः शक्तयस्तत्तद्धामसु इन्द्रियवृत्तिविशेषा एव । तत्र च पञ्चवाहानां प्राणरूपाणां वृत्तिविशेषा अपि अनुगताः । अत एव उपनिषत्सु

इन्द्रियाण्यपि तत्र तत्र प्राणपदेनोपदिश्यन्ते। ते च द्वयेऽपि वृत्तिविशेषा व्युत्थाने सविकल्पसमाधौ च वर्तन्ते। निर्विकल्पे निद्रायां च प्राणानां वृत्तय एवावशिष्यन्ते। इन्द्रियवृत्तयस्तु विषयैः सह तत्र न भवन्ति। निर्विकल्पे प्राणस्य निरोधेऽपि तस्मिन् देशे प्राणस्य निरुद्धस्यापि तत्रैव कश्चन दुर्लक्ष्यो व्यापारोऽस्त्येव, प्राणस्य स्वरूपलोपाभावात्। तस्यां चावस्थायां निलीना गोचर्यादिशक्तयः पञ्चवाहमयशक्तिरूपा एव। ताश्च शक्तीर्गर्भीकृत्य इन्द्रियवृत्तीस्तद्विषयाश्च सुसंहृत्य महाशक्तिः स्वप्रकाशसंवित् सामरस्यमापन्ना भासत इत्यागमनसिद्धमर्थजातमुपन्यस्यन् मातरं स्तौति—

**ज्ञानतः प्रभृति पञ्चमं शिवे**
**यत् त्वमत्र परचिन्नभस्तनुः।**
**पञ्चवाहमयशक्तिगर्भिणी**
**भाससे प्रथनकेतघस्मरी ॥१४४॥**

हे शिवे! सविकल्पे समाधौ व्युत्थाने च ज्ञानतः प्रभृति पञ्चमं शम्भुधाम यावत् यत् शक्तिपञ्चकम्, अत्र अस्मिन् शक्तिपञ्चके या त्वं स्थिता, सैव निर्विकल्पे निद्रायां च परचिन्नभस्तनुः परं प्रकृष्टं निर्विषयं यच्चिन्नभस्तत्तनुस्त्वं पञ्चवाहमयशक्तिगर्भिणी गर्भीकृतपञ्चप्राणशक्तिः सती प्रथनकेतघस्मरी प्रथनं स्फुरणमेव केतो लक्षणं ज्ञापकं येषां ते प्रथनकेता विषयास्तेषां घस्मरी त्वं भाससे स्वप्रकाशसंविद्रूपतया स्वयं प्रकाशस इति ॥ १४४ ॥

निर्विकल्पे समाधौ निद्रायां च शिवशक्त्योर्नैरन्तर्यं सामरस्यरूपं सम्पद्यते। अत एव तदानीं शक्तिर्निरन्तरचिदम्बरात्मिका भवति। तदानीं च नैरन्तर्यमापन्नया शक्त्योपरुद्धः शिवोऽर्थप्रकाशरूपं सर्गं न करोति तदानीं शक्तिश्चिदर्णवरूपस्य शिवस्य वेलेति व्यपदिश्यते। यथा वेलयोपरुद्धो महोदधिर्न बहिः समुपसर्पति। तदानीं च स्वोपादानभूतानां बुद्धीनां शक्तौ प्रविलयान्निराश्रयाः संविद्रूपा बुद्धिवृत्तयोऽपि आपगास्थानीयाश्चिदर्णवनैरन्तर्यवत्यां शक्तावेव लयं यान्तीत्येतामागदर्शनस्थितिमुपदिशन् तन्मुखेन मातरं स्तौति—

**त्वं निरन्तरचिदम्बरात्मिका**
**वेलयाऽम्ब तुलिता दयाम्बुधेः।**
**त्वय्यमूर्झटिति संविदापगाः**
**पूर्णतां दधति निर्निकेतनाः ॥१४५॥**

हे अम्ब! निद्रायां निर्विकल्पसमाधौ च निरन्तरचिदम्बरात्मिका त्वं निरन्तरं व्यवधानरहितं चिदम्बरं प्रकाशात्मकं शिवतत्त्वं यस्याः सा तथाभूता तदात्मिका तद्रूपा त्वं दयाम्बुधेर्दयासमुद्रस्य शिवस्य अर्थप्रकाशरूपसर्गोपरोधेन वेलया तुलिता वेलेव तदानीमसि। किञ्च, तदानीम् अमूः सविकल्पसमाधिकाले प्रबोधकाले च अनु-

भूताः संविदापगा बुद्धिवृत्तिरूपसंविद्रूपाः सरितः, निर्निकेतनास्तदानीं बुद्धेरपि प्रविलयाद् बुद्धिरूपस्वाश्रयरहिताः सत्यः, झटिति त्वय्येव निरन्तरचिदर्णवरूपायां पूर्णतां समाप्तिं दधति धारयन्तीति ॥ १४५ ॥

व्युत्थाने प्रबोधे सविकल्पसमाधौ यदम्बरेश्वरीप्रभृतिगोचरीपर्यन्तं पञ्चधा चक्रमिह प्रागुपवर्णितम्, तन्निर्विकल्पे समाधौ निद्रायां प्रलये वा शिवसामरस्यापन्नात् संहृतवृत्तितद्विषयग्रामात् शक्तित्त्वान्न पृथग् भवति। किन्तु सविकल्पे व्युत्थाने निर्विकल्पे च निद्रायां प्रवोधे च सर्गे प्रलये च स्वरूपेण कारणात्मना च शक्तितत्त्वे स्थितमेव सदा भवतीत्यागममार्गं मातृस्तुतिमुखेनोपदर्शयन्नाह—

पञ्चधा प्रभृतवैभवं शिवे
चक्रमेतदिह गोचरीकृतम्।
विश्वभक्षनिरुपाख्यचिन्मयात्
त्वत्पदाद् गलति नैव जातुचित् ॥१४६॥

हे शिवे ! पञ्चधा पञ्चभिः प्रकारैरुपलक्षितं यत् प्रभृतवैभवं प्रकर्षेण भृतंधृतं स्वस्वकार्यानुकूलसामर्थ्यं येन तत्तथा। तच्चक्रमिह अस्मिन् प्रकरणे यत्प्राग् गोचरीकृतं प्रागुपवर्णितं तद् विश्वभक्षनिरुपाख्यचिन्मयात् त्वत्पदाद् निद्रायां निर्विकल्पे समाधौ प्रलये वा विश्वभक्षं विश्वसंहर्तृत्वान्निरुपाख्यं वाङ्मनसागोचरं चिन्मयं चिद्रूपं तत् शिवसामरस्यापन्नं तव पदम्, तस्माद् जातुचित् कनाचिदपि नैव गलति नैव विभागं प्राप्नोति। अर्थाद् यथासंभवं स्वरूपेण कारणात्मना वा सदा शक्तौ विद्यमानमेवावतिष्ठत इति भावः ॥ १४६ ॥

यानि प्रागुपवर्णितानि शम्भुधामादीनि पञ्चधामानि याश्चागमेषु प्रसिद्धा बहुविधा मुद्राः या च निर्विकेतने शिवतत्त्वे चितिरूपा संवित्, या च अणुभावाक्रान्ता जीवरूपा शिवस्य कला, अर्णभावाक्रान्ता वा वर्णमातृकारूपा शक्तेः कला, तत्सर्वं शक्तेर्वृन्दचक्रान्तर्गतमेवेति शाक्तागमस्थितिमुपदर्शयन् मातरं श्लोकयति—

धाम यद् भवति मुद्रया समं
या च संविदनिकेतनाश्रये।
याऽणुभावकलिता कला च तत्
सर्वमम्ब तव वृन्दचक्रगम् ॥१४७॥

अत्र धाम यदिति, मुद्रयेति, कलेति च पदत्रयेऽपि जातावेकवचनम्। हे अम्ब ! आगमशास्त्रे मुद्रया समं यद् धाम भवति, आगमशास्त्रप्रसिद्धाभिर्मुद्राभिः सह यानि धामानि सन्ति, या च अनिकेतनाश्रये अनिकेतने आधारशून्ये शिवरूपे आश्रये चितिरूपा संविद् भवति, या चाणुभावकलिता अणुभावेनाक्रान्ता जीवरूपा शिवस्य

कला भवति, यद्वा याऽर्णभावेनाक्षरभावेन कलितावर्णमातृकारूपा शक्तेः कला भवति, तत्सर्वं तव वृन्द चक्रगं वृन्दचक्रान्तर्गतमेव । वृन्दचक्रस्वरूपं त्वत्रैव १२६ लोके प्रागुपवर्णितमिति तत एव बोध्यमिति ॥ १४७ ॥

नादः शक्तिरूपः, तस्माच्चादौ सर्ववर्णाग्र्यस्य अकाररूपस्य स्वरस्योद्गमः । स च नादः सर्वेषां वर्णानां सर्गादौ सृज्यमानानां भावानां च कारणत्वादग्रिमः, उपादानत्वाच्च बीजमिति व्यपदिश्यते । तस्मिंश्च वर्णानां प्रक्षयाद् वर्णानुपूर्वीरूपवपुर्विरहितः सः । अत एव वर्णक्रमशून्यश्च । किञ्चैष संवित्स्वरूपे शिवे शक्तिरूपत्वादर्थविमर्शरूपः । संविद्विमर्शयोरन्योन्यतादात्म्यभावापत्त्या च ईश्वरः शिवस्वरूपः । ईश्वरत्वं च तस्य संवित्सम्बन्धाद्वा सर्वस्रष्टृत्वाद्वा । व्यापकत्वाच्च विश्वदैशिको विश्वस्मिन् देशे भवः, अथवा ईश्वररूपत्वा‌द् विश्वदेशिको विश्वेषां देशिकानामपि देशिक आचार्यः । तदुक्तम्—"स पूर्वेषामपि गुरुः कालेनानवच्छेदात्" (योगसूत्रे १।२६) इति । एवमलौकिकत्वात् कोऽप्यलौकिकोऽद्भुतः शक्तेः स्वरूपभूतो नाद इति हि आगमिकी स्थितिः । तां विवृण्वन्नम्बां स्तौति—

**अस्वरोल्लसनबीजमग्रिमो**
**क्षीणतोऽवपुरपाकृतक्रमः ।**
**नाद एष तव विश्वदैशिकः**
**कोऽपि संविदि विमर्श ईश्वरः ॥१४८॥**

हे अम्ब ! एष वर्णविभागेन गृह्यमाणस्तव स्वरूपभूतो नादः, अस्वरोल्लसनबीजम् अकाररूपस्य स्वरस्योल्लसनमुद्गमो यस्मात् तत्तथाभूतं बीजमिति कर्मधारयः । बीजत्वं चोपपादितमवतरणावसरे । यद्वाऽस्वरोल्लसनस्य बीजमिति षष्ठीतत्पुरुषः । अग्रिमः सर्वकारणत्वात् सर्गादिभूतः । क्षीणतोऽवपुरिति पदच्छेदः । क्षीणमिति नपुंसके भावे क्तः । क्षीणत इत्यस्य क्षयादित्यर्थः । वर्णानां तदानीं क्षयादभावादवपुर्वर्णानुपूर्वीरूपवपुर्विरहितः, अत एवापाकृतक्रमोऽपाकृतो निरस्तः क्रमो वर्णक्रमो यस्मात् स तथाभूतः । विश्वदैशिको विश्वस्मिन् देशे भवः, अध्यात्मादित्वाट्ठञ्, शिवभागवतवद् वृत्तिः । विश्वदेशिक इति पाठे विश्वेषां देशिक इति षष्ठीतत्पुरुषः । शेषाणि पदानि निगदव्याख्यातानि ॥ १४८ ॥

साम्प्रतमौपनिषदमतानुगतमागममतं विवृण्वन् मातरं स्तौति—

**ग्रन्थिपञ्चकविभेदिनी चितिः**
**पञ्चतारलिपिवृत्तिसूचिता ।**
**येयमम्ब परधाम्नि ते तनु-**
**र्योनिपञ्चकमयी निराकृतिः ॥१४९॥**

हे अम्ब ! येयमनुभवसिद्धा परधाम्नि शिवतत्त्वे निराकृतिर्निराकारा विषयसम्पर्करहितत्वेनाकारविशेषशून्या ते तनुश्चितिः, ज्ञाता सती ग्रन्थिपञ्चकविभेदिनी ग्रन्थिपञ्चकस्य शब्दस्पर्शरूपरसगन्धानां वासनापञ्चकस्य विभेदिनी विनाशिका,

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ इति श्रुतेः ।

अत्र श्रुतौ ग्रन्थिपदेन वासनाऽभिप्रेतेत्युपनिषद्भाष्यादौ व्याख्यातम् । किञ्च, पञ्चतारलिपिवृत्तिसूचिता पञ्चसंख्याका यास्तारस्य प्रणवस्य लिपयः, तिस्रस्तिर्यग्रेखाः, एका च ऋजू रेखा, पञ्चमश्च बिन्दुः, तासां वृत्तिर्यत्र प्रणवे तेन सूचिता ज्ञापिता तदर्थभूता, "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदयमोङ्कारः" इति श्रुतेः। सैव चितिरूपा ते तनुः, योनिपञ्चकमयी योनीनां जगदुपादानभूतानां पृथिव्यप्तेजोवाय्वाकाशानां यत्पञ्चकं तन्मयी तद्रूपा, उपादानोपादेययोः समानाधिकरण्यस्य मृद् घटः सुवर्णं कुण्डलमित्यादौ लोकेऽपि दर्शनात् । चितेः पृथिव्याद्युपादानत्वं च श्रूयते—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी ॥ इति ।

तव निराकारा चितिरूपा तनुरेव सर्गे पृथिव्यादिरूपेण साकारा संजातेतिभावः । योनिपञ्चकमयीत्यत्र स्वार्थे मयट्प्रत्ययः, तत्प्रकृतवचने मयडित्यत्र मयडिति योगविभागात् । यद्यपि योगविभागो भाष्यादौ न दृष्टस्तथापि प्रयोगदर्शनादभ्यूहनीयः ॥ १४९ ॥

साम्प्रतं कालीरूपायास्तस्याः संहारकर्तृत्वं नादरूपायाश्च तस्याः स्पर्शवर्णमयपञ्चवर्गजैः पदवाक्यादिविस्तरैर्जगत्सर्गकर्तृत्वं च दर्शयन् मातरं स्तौति—

**स्पर्शवर्णमयपञ्चवर्गजै-**
**विस्तरैर्जननि मुद्रिता त्वया ।**
**व्यक्तिभेदरचना समन्ततो**
**व्यक्तिधामसहिता जगन्मयी ॥१५०॥**

हे जननि ! संहारावसरे त्वया समन्ततः सर्वतः मुद्रिता पिहिता स्वस्मिन्नुपसंहृता जगन्मयी जगद्रूपा या व्यक्तिभेदरचना परस्परभिद्यमानव्यक्तिसम्बन्धिनीरचना, सा सर्गावसरे स्पर्शवर्णमयपञ्चवर्गजैः स्पर्शसंज्ञकवर्णमयास्तद्रूपा ये पञ्चवर्गास्तज्जन्यैर्विस्तरैः पदवाक्यादिरूपैः । व्यक्तिधामसहिता व्यक्तीनां यद्धाम प्रकाश आविर्भावपूर्वकस्तत्सहिता भवतीति । अयं भावः—सृष्टानां सर्वेषां प्राणिनां प्रारब्धकर्मोपक्षये सति संहारकाले त्वया स्वस्मिन् तिरोधापितं जगत् सर्गावसरे सृज्यमानसर्वप्राणिकर्मणामुद्बोधान्नादक्रमेण जायमानैः पञ्चवर्गजैः पदवाक्यादिरूपैर्विस्तरैः

पुनरप्याविर्भाव्यते, "स भूरिति व्याहरद् भूमिमसृजत्" इत्यादिश्रुतेः, "वेदशब्देभ्य एवादौ पृथकसंस्थाश्च निर्ममे" इत्यादिस्मृतेश्च। अनेन जगत आविर्भावतिरोभावावेव उत्पत्तिविनाशौ, न त्वसतो जन्म सतो वा विनाशः, स्वभावविरोधादिति सूचितं भवति ॥ १५० ॥

सर्गः सदैव शक्तिस्वरूपे वर्तते, तत एव सर्गे आविर्भावात्। प्रलये तु तस्मिन्नेव तिरोभवति। एवं सति सर्गो वस्तुतोऽक्रम एव, तथापि तस्य सक्रमत्वं सक्रमत्वेन स्फुरणं च तदाविर्भावहेतोः सक्रमाद् योनिपञ्चकादेव। योनिपञ्चकं तु भूतपञ्चकमेव। तस्य सक्रमत्वे मानं तु "तस्माद्वा एतस्मादात्मन आकाशः संभूतः, आकाशाद्वायुः, वायोरग्निरग्नेरापः, अद्भ्यः पृथिवी" इत्याद्याः श्रुतय एवेत्यागमसिद्धान्तमुपदिदिक्षुरम्बां स्तौति—

**आदितः क्रममयीभिरम्ब यः**
**पञ्चभिर्भवति योनिभिः स्वतः।**
**अक्रमः क्रममयस्त्वदाश्रयात्**
**सक्रमः स्फुरति सृष्टिलक्षणः ॥१५१॥**

हे अम्ब! त्वदाश्रयात् त्वयि सदा स्थितत्वात् स्वतोऽक्रमोऽपि यः सृष्टिलक्षणः पदार्थ आदितः, आदौ इति आदितः, आद्यादित्वात् तसिः। सर्गादौ क्रममयीभिः पञ्चभिर्योनिभिर्भूतपञ्चकैः क्रममयो भवति। क्रमप्रचुरो भवति। क्रमवान् भवतीति यावत् तत्प्रकृतवचने मयडिति प्राचुर्यार्थे मयट्। तत एव स सक्रमः स्फुरति, न तु वस्तुगत्या स सक्रम इति। योनिपञ्चकस्य क्रमवत्त्वे मानं तु प्रागुपदर्शितम् ॥ १५१ ॥

नन्वेवं किं सर्वाऽपि योनिः सक्रमैवेत्याशङ्क्याह—

**केवलं जगति योनिरक्रमा**
**योगमूर्तिरिह ते सतां मता।**
**योनिरत्र महती तदुत्तरा**
**सा यदेतदवभासनं तव ॥१५२॥**

हे अम्ब! इह जगति सतां मता सद्भिरेव ज्ञाता ते तव योगमूर्तिः शिवयोगे सामरस्येन स्थिता मूर्तिरेव केवलं नित्यत्वेन अक्रमा योनिः, सर्वोपादानत्वात्। सैव चात्र शास्त्रेषु महती योनिरिति व्यपदिश्यते। तदुक्तं गीतासु—"मम योनिर्महद् ब्रह्म" इति। तदुत्तरा तस्या महत्या योनेरुत्तरा कार्मत्वेन पश्चाद् भवा सा भूतपञ्चकरूपा योनिस्तु यदेतद् तवावभासनं तद्रूपैव, न तु त्वत्प्रकाशातिरिक्ता, तन्त्रेष्वर्थानां प्रकाशात्मकत्वाभ्युपगमादिति ॥ १५२ ॥

एवं परमकारणरूपां महतीं योनिं तत्कार्यभूतभूतसूक्ष्मपञ्चकरूपयोनिपञ्चकं च निरूप्य तदुत्तरं योनित्रयं निरूपयन् विश्वसर्गस्थितिसंहारकर्तृत्वेनाम्बां स्तौति—

शङ्खयोनिरत उत्तरा धृता
वृत्तिरम्ब तव यत्तु चर्वणम् ।
कालविग्रहविलासनं पुनः
पद्मयोनिरपि ते विकस्वरा ॥ १५३ ॥

हे अम्ब ! अत उत्तरा योनिपञ्चकादुत्तरा या वृत्तिर्यः परिणामस्त्वया धृता सा शङ्खयोनिः शङ्खोपलक्षिता योनिः स्थितिकारणीभूता विष्णुरूपा। यत्तु तव चर्वणं वृत्तिस्तत्पुनस्तत्तु कालविग्रहविलासनं कालस्य यो विग्रहः शरीरं तस्य विलासनं विलासानुकूलो व्यापारः। एतेन रुद्ररूपेण संहारकर्तृत्वं दर्शितम् । किञ्च, ते तवैव विकस्वरा स्थूला पद्मयोनिरपि पद्मोपलक्षिता हिरण्यगर्भरूपा सर्गकारणीभूता योनिः । एतेन हिरण्यगर्भरूपेण सर्गकर्तृत्वं दर्शितमिति ॥ १५३ ॥

संहारावस्था शक्तेः स्वभावः, क्रमशून्यत्वात् । सर्गस्तु तस्या न स्वभावः, सक्रमत्वात् । इतीममागमसिद्धान्तमुपदर्शयन् स्तौति—

निस्तरङ्गजलधिक्रमा स्थिता
कालि धाम्नि तव भेदघस्मरे ।
दिव्ययोनिरिह स्वस्वरूपिणी
निःस्वभाव उदयः परस्तव ॥ १५४ ॥

हे कालि ! इह जगति भेदघस्मरे भेदानां सर्गावस्थायां त्वत्तो भिद्यमानानां विभज्यमानानां परस्परं वा व्यावृत्तानां सर्वेषां भावानां घस्मरे भक्षके तव धाम्नि स्वस्वरूपिणी चिद्गगनरूपा निस्तरङ्गजलधिक्रमा निस्तरङ्गो यो जलधिस्तस्य क्रमः सादृश्यं यस्यां सा तथाभूता शान्तसमुद्रसदृशी दिव्ययोनिः प्रागुक्तयोनिपञ्चकयोनित्रयो-भयविलक्षणत्वाद् दिव्याऽलौकिकी योनिर्या महती योनिरिति प्राग् व्यपदिष्टा सा स्थिता । यस्तु तव परः संहारावस्थातोऽन्य उदयः सर्गरूपेणाविर्भावः स निःस्वभावः । तव अक्रमात् स्वभावान्निर्गतो बहिर्गतः, सक्रमत्वादिति ॥ १५४ ॥

पञ्चसूक्ष्ममहाभूतानि पञ्चयोनयः, ताश्च पञ्चीकरणप्रक्रियया स्थूलता-मापन्ना ब्रह्माण्डादिभौतिकसृष्टिं विदधते । भूतसूक्ष्मपञ्चकसद्भावे मानं च सिद्धाना-मनुभव एव । इत्येवं सर्गप्रकारमुपदर्शयन् तादृशसर्गस्य परमकारणत्वेनाम्बां स्तौति—

स्वस्वरूपमयविश्वमूर्तिदृक्-
सिद्धगाढपरिरब्धविग्रहाः ।
स्पर्शमूर्तिमधिरुह्य पञ्च ते
योनयो विधृतसृष्टिमण्डलाः ॥ १५५ ॥

हे अम्ब ! स्वस्वरूपमयविश्वरूपदृक्सिद्धगाढपरिरब्धविग्रहाः स्वस्वरूपमयीं विश्वमूर्ति ये पश्यन्ति, शिवस्य सर्वोपादानत्वेन विश्वस्य प्रकाशात्मकस्य चिद्रूपशिवरूपत्वात्, सिद्धानां च स्वस्मिन् शिवाभेददर्शित्वात्। तादृशा ये सिद्धास्तैर्गाढं यथा भवति तथा परिरब्धा आलिङ्गिताः स्पृष्टाः, स्वानुभवगोचरीकृता इति यावत्, विग्रहाः स्वरूपाणि यासां ताः तथाभूताः। ताः पृथिव्यादिपञ्चभूतात्मिकाः पञ्चयोनयो विश्वोपादानकारणानि भूतसूक्ष्माणि स्पर्शमूर्ति स्पर्शप्रधानं स्थूलं स्वरूपमधिरुह्य पञ्चीकरणेन प्राप्य विधृतसृष्टिमण्डला विविधविकाररूपैर्धृतं स्थापितं सृष्टिमण्डलं सृज्यमानानां भावानां समूहो याभिस्तास्तथाभूताः सन्तीति ॥ १५५ ॥

आगमशास्त्रे परमशक्तिरेकैव, परमशिवश्चैक एव, तयोः सामरस्यं विसर्गे ( प्रलये ) सर्गे तु वैषम्यम्। अवान्तरशक्तयस्तु परिमिता अपरिमिता वा। एवं रुद्रा अपि बहवो मिता अमिता वा पतिपदवाच्याः। एवं सिद्धत्वमाप्ता जीवा अपि बहवः। तेषां प्रलयेऽद्वयरूपे शिवशक्तिद्वैतरहिते तयोः सामरस्यापन्ने स्वरूपे लयः। सर्गे तु अद्वयस्य रूपस्य प्रागुक्तद्वैतात्मनोन्मेषे जायमाने प्राग्भवीयमातृसमाराधनसमुपार्जितसुकृतप्रभावेण मातृलक्षणप्राप्तास्तत्तदधिकारान् बिभ्रते। तेषां च जाग्रत्स्वप्नसुषुप्तितुरीयावस्थाभेदेन चतस्रोऽवस्था भवन्ति। तत्र सर्गे जागरावस्था, सर्गविसर्गयोः सन्धौ स्वप्नावस्था, प्रलये सुषुप्तिः, मोक्षे तु तुरीयावस्थेति प्रसिद्धिमाश्रित्य मातरं स्तौति—

**जागरामुखचतुःपदाऽद्वयो-**
**न्मेषसंस्फुरितमातृलक्षणा ।**
**निर्द्वयाद्वयगतिर्महाखगे**
**द्राक् तवाम्ब पतिसिद्धमण्डली ॥१५६॥**

हे अम्ब ! हे महाखगे ! महत् खं चिद्गगनं तद्गते। प्रलयकाले द्राग् झटिति तव निर्द्वयाद्वयगतिर्निर्द्वयं शिवशक्तिद्वैतरहितं यदद्वयं शिवशक्तिसामरस्यापन्नं रूपं तस्मिन् गतिर्लयप्राप्तिर्यस्याः सा तथाभूता। पतिसिद्धमण्डली पतय रुद्राः सिद्धाश्च ये तेषां मण्डली। सर्गकालेऽद्वयोन्मेषसंस्फुरितमातृलक्षणा अद्वयस्य प्रागुक्तस्य रूपस्य य उन्मेषः शिवशक्तिद्वैतात्मना वैषम्यस्याविर्भावः, तेन संस्फुरितं सम्प्राप्तिपूर्वकं ज्ञानं मातृलक्षणं मातृभावो यस्याः सा तथाभूता, समुत्पद्य जागरामुखचतुःपदा जागरामुखानि जागराणादीनि तुरीयान्तानि प्राङ्निर्दिष्टानि चत्वारि पदानि प्राप्तव्या अवस्थाबिशेषा यस्याः सा तथभूता भवति।

यद्वा—अवान्तरशक्तिपतीनां पशुपतीनां वा रुद्राणां सिद्धानां च जाग्रत्स्वप्नसुषुप्तिनिर्विकल्पकसमाधिरूपतुरीयावस्थोपन्यासमुखेन मोक्षप्राप्ति सूचयन् मातरं स्तौति—जागरेत्यादि। हे अम्ब ! या जागरामुखचतुःपदा जागरामुखानि तुरीयान्तानि चत्वारि पदानि अवस्था यस्याः सा तथाभूता। पतिसिद्धमण्डली पतीनां सिद्धानां च मण्डली सा जाग्रत्स्वप्नयोः सविकल्पसमाधौ द्वयोन्मेषसंस्फुरितमातृलक्षणा द्वयस्य

शिवशक्तिद्वैतस्य य उन्मेष आविर्भावस्तेन संस्फुरितं प्रकाशितं मातृलक्षणं शक्ति-स्वरूपं यस्याः, एवंभूता सती मातृस्वरूपसंस्फुरणप्रभावेण समुपजाते निर्विकल्पे समाधौ द्रागेव झटित्येव तव त्वत्सम्बन्धिनि महाखगे महत् खचिद्गगनं तद्गते शिवे निर्द्वयाद्वयगतिर्निर्द्वयं शिवशक्तिसामरस्यात्मकं तस्मिन् गतिर्लयो यस्याः सा तथा-भूता भवति। निर्विकल्पसमाध्यभ्यासक्रमेण सिद्धे निर्विकल्पे सद्यो मुच्यत इति भावः॥ १५६॥

हृदयं कुण्डलिन्या परिवृतमिति तत्र स्थितं मनोऽपि तया परिवृतमिति व्यव-ह्रियते। तत्र मनसि सर्गादौ स्वरचतुष्टयं 'ए ओ ऐ औ' इत्येतद्रूपं स्थितम्। तच्चतुष्टये च जगत्क्रमः समवस्थितः। तस्य च जगत्क्रमस्य व्यक्तितः प्रभृति गोपकः शक्तेरवतारो विष्णुः, स चापि मातुस्तेन रूपेण प्रथारूप एवेत्यागमिकीं स्थितिमुप-वर्णयन् मातरं प्रवणोकरोति—

**कुण्डहृत्स्वरचतुष्टये स्थितो**
**व्यक्तितः प्रभृति यो जगत्क्रमः।**
**तस्य गोपक उदग्रवैभवो**
**योऽवतार इह साम्ब ते प्रथा॥१५७॥**

हे अम्ब! स्वव्यक्तितः प्राग् यो जगत्क्रमः क्रमवत्त्वेन ज्ञायमानं जगत् कुण्ड-हृत्स्वरचतुष्टये स्थितः कुण्डेन कुण्डलिन्या परिवृतं यद् हृदब्जं तत्र स्थितं मन इति यावत्। अत्र कुण्डपदेन कुण्डलिनी, हृत्पदेन च लक्षणया हृदयाश्रितं मनो बोध्यते। तत्र यत् स्वरचतुष्टयं तस्मिन् स्थितः। अत्र निर्दिष्टस्य स्वरचतुष्टयस्य सन्ध्यक्षरत्वेन जगदुपादानत्वेन जगल्लयाधिष्ठानत्वं स्थितपदेनोच्यते। तस्य क्रमवतो जगतो व्यक्तितः प्रभृति आविर्भावादारभ्य गोपको रक्षक उदग्रवैभव उत्कटसामर्थ्यसम्पन्नो य इहाव-तारो विष्णुरूपः, सोऽपि तव तेन रूपेण या प्रथा तद्रूप एवेति॥ १५७॥

यथा लोके हंसः खगः पक्षिविशेषः, हन्ति प्रशस्तं गच्छतीति व्युत्पत्तेः। सूर्योऽपि तीव्रगतिमत्त्वाद्धंसः खगश्च, आकाशे सदा गतिमत्त्वात्। तथाऽऽगमेषु हंसः प्राणः, सूर्यरूपत्वाद् अनारतगतिमत्त्वाच्च। खगश्च, देहाभ्यन्तराकाशे गतिमत्त्वात्। स्पन्दमूर्तिश्च, सदागतिमत्त्वात्। किञ्च, प्राणः स्पन्दरूपः शक्तेराद्यः परिणामः। किञ्च, प्राणस्त्रिपथः। तस्य हि त्रयः पन्थानः प्रसिद्धा एव—अपानो मुखं नासिका चेति। हंस इति शब्दवत्त्वाच्च प्राणो हंसः। प्राणस्यान्नं सर्वं प्राणो भोक्ता भोग्यं च तदन्नं सर्वमपि जगद् भोग्यभोक्तृभावेन द्विधा व्यवस्थितम्। प्राणस्य च भक्ष्यधाम नाभिः, प्राणेन हि भुक्तमन्नं तत्र प्राप्यते। नाभौ चाग्नेरौदर्यस्य सन्धुक्षणाय प्राणस्तत्र नित्यं सन्निहितः। तत्रैव च औदर्यं तेजः संधुक्षयतः प्राणस्याचेतनस्य यमयिता ईश्वरः प्राणमाक्रम्य स्थितः। स च स्पन्दमूर्ति योगप्रभावे सत्यविनश्वरं कल्पान्तस्थायित्वाद्वा तथाभूतं शरीरान्तराकाशचारित्वात् खगं प्रागुक्तव्युत्पत्त्या हंसं प्राणमधिष्ठाय शरीरा-

न्तस्तन्नियमनाय सदा स्थितः। अत एव खगस्य प्राणस्य सदा नियमनात् खगेन्द्रता-रूपो धर्मः सदा तं श्रयत इत्यागमिकमर्थं विवृण्वन् स्वपरिणामप्राणमधिष्ठात्रीश्वर-वर्णनमुखेन मातरमुपस्तौति—

**स्पन्दमूर्तिमविनश्वरं खगं**
**स्पर्शशून्य इह हंसमास्थितः।**
**ईश्वरस्त्रिपथभक्ष्यधामगो**
**यस्तमम्ब भजते खगेन्द्रता ॥१५८॥**

अत्र हंसरूपस्य प्राणस्याविनश्वरत्वं योगप्रभावेण बोद्धव्यम्। तथा च श्रुतिः—"न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम्" इति। त्रिपथभक्ष्य-धामग इति। त्रयः पन्थानो यस्यासौ त्रिपथः प्राणः, तस्य यद् भक्ष्यमन्नं तस्य धाम नाभिप्रदेशस्तद्गत इत्यर्थः। इयमत्र श्लोकपदयोजना—हे अम्ब ! स्पन्दमूर्तिमविनश्वरं खगं हंसमास्थितः स्पर्शशून्यस्त्रिपथभक्ष्यधामगो य ईश्वरस्तं खगेन्द्रता खगेश्वरत्व-रूपो धर्मो भजत आश्रयत इति। अर्थस्तु अवतरणेनैव अवगतप्राय इति ॥ १५८ ॥

शक्तेर्जगत्सर्गसंकल्पस्य प्रथमं कार्यमिच्छैव। तयैव च वियदादिक्रमेण विचित्रो जगत्सर्गः। सा चेच्छा शुद्धाध्वनि निवेशिता संकोचमञ्चति, "शुद्धेऽध्वनि शिवः कर्ता" इति शिवस्यैव तत्र कर्तृत्वस्मरणात्। एवं चेच्छाया न शुद्धाध्वनि कर्तृत्वम्। अयमेव च शक्तेराद्यस्पन्दरूपाया इच्छायाः संकोच इति निगूढमागमार्थमाविष्कुर्वन्नम्बां स्तौति—

**प्रातिभः प्रथम उद्यमोऽम्ब य-**
**श्चित्रविश्वरचनादरोऽद्वयः।**
**कूर्मवृत्तिमनुकृत्य कूर्मतां**
**यात्यसौ तव निवेशितः पथि ॥१५९॥**

हे अम्ब ! यस्तव प्रातिभः, प्रतिभानं प्रतिभा संकल्पस्तस्या अयं प्रातिभः, संकल्पजन्यस्तव प्रथम उद्यमः प्रथमो व्यापार आद्यः स्पन्द इच्छारूपः, संकल्पापेक्षया इच्छाया द्वितीयत्वेऽप्यन्येभ्यो जगत्सर्गसाधनेभ्यः प्राथम्यमस्त्येव। तस्यैव विशेषणं चित्रविश्वरचनादर इति, अद्वय इति च। अयमर्थः—चित्रा चित्रकर्मसहकारेण विचित्रा या विश्वरचना तस्यामादरो यस्य स तथाभूतः। अद्वयः स्वसजातीयसाधनान्तररहितः, असौ पथि शुद्धाध्वनि निवेशितः, कूर्मवृत्तिं कूर्मस्याङ्गसंकोचनरूपं व्यापारमनुकृत्य अनुसृत्य कूर्मतां संकोचं याति, शुद्धाध्वसर्गान्निवर्तत इति भावः ॥ १५९ ॥

यथा शिक्षितो मेषः पालयितुश्छन्दोऽनुवृत्त्या प्रचरति, एवं संस्कृतं मनोऽपि कर्तुश्छन्दोऽनुवृत्त्या विषयेषु प्रचरतीति मनसि संस्कृते मेषत्वमारोप्याज्ञाने च तमो-

बाहुल्येन मालिन्येन च इभत्वमारोप्य मातृधाम्नि स्थितस्य मेषस्य इभादपि बलवत्त्व-मुपदर्शयन् मातरमुपश्लोकयति—

मेष एष उदयः परो मम
छन्दतोक्षतनुतां वहत्युमे ।
नित्यतुर्यमहिमा ग्रसन्निभं
मेष एति तव धाम्नि संस्थितिम् ॥१६०॥

हे उमे ! एष स्वानुभवसिद्धः, उदय आत्मग्रहणाय विषयेभ्य उत्थितः, परः संस्कृतत्वादशुद्धमनोऽपेक्षया प्रकृष्टः, मेषो मेषत्वारोपविषयीभूतं मम मनो मम छन्दतो ममेच्छातो विषयग्रहणेऽक्षतनुताम् अक्षाणां तनुत्वं वहति प्रापयति । मम मनसः संस्कृतस्य विषयविरागे तदधीनानामक्षाणामपि विषयवैमुख्यरूपं तनुत्वं भवतीति फलितम् । एवं ससहायस्य मनसो विषयवैमुख्ये सति नित्यतुर्यमहिमा नित्ये तुर्ये जाग्रदाद्यवस्थात्रयातीते आत्मनि तद्ग्रहणे महिमा माहात्म्यं यस्य स तथाभूत एष मेष इभं प्रागुक्तरीत्या गजमज्ञानम् आत्मविषयया वृत्त्या स्वपरिणामेन ग्रसन् सर्वान्ते तव धाम्नि चिदात्मके त्वद्रूपे संस्थितिं प्रविलयरूपामेति प्राप्नोतीति ।। १६० ।।

संस्कृतं मनो यत्प्राङ् मेषत्वेन निरूपितं तन्न निराश्रयपदाद् बाह्यानि पदानि ब्राह्मयादीनि सिद्धिश्च नानाविधा योगशास्त्रोपदर्शिता अभिलष्यति, न च तस्य वृत्तयस्तानि गोचरीकुर्वन्ति, किन्तु तेभ्यो विरज्य मातुर्निराश्रयं पदमेव गोचरीकुर्वन्तीति निराश्रयमहिमप्रख्यापनमुखेन मातरं स्तौति—

छन्दतो मम निराश्रये पदे
मुक्तबाह्यपदसिद्धिकल्पनाः ।
संविदो वसत यूयमित्यमूः
शास्त्यसौ तव निरर्गलः शिवे ॥१६१॥

हे शिवे ! असौ प्राङ्मेषत्वेन निरूपितः संस्कृतो मनोमेषः, निरर्गलः संस्कारेण मलापगमान्निराश्रये पदेऽवारितप्रसरः सन्, हे संविदः, मम परिणामभूताश्चिदाभासवत्यो वृत्तयः, यूयं मम मनसः, छन्दत इच्छातः, मुक्तबाह्यपदसिद्धिकल्पनाः मुक्तास्त्यक्ता निराश्रयात् पदाद् बाह्यानां भिन्नानां पदानां ब्राह्मयैन्द्रादीनां सिद्धीनां चाष्टविधानां कल्पना याभिस्तास्तथाभूताः सत्यः, तव निराश्रये पदे सर्वस्य जगतोऽधिष्ठानभूते स्वयं तु आधारशून्ये चिद्गगनाख्ये पदे वसत तदेव विषयीकुरुत, इत्यमूः संविदः शास्ति आज्ञापयतीति ॥ १६१ ॥

विमर्शशक्तेः कामत एव निस्तरङ्गपरमाद्वयप्रथाम्भोनिधेर्जगतो निर्गमरूपः सर्गक्रमः, संहारकाले च तस्याः संहारेच्छारूपात् कामादेव जगतः प्रतिनिवर्तितक्रम-

स्तत्रैव लय इत्यागमिकार्थनिरूपणेन विमर्शशक्तिरूपाया मातुर्माहात्म्यं ख्यापयन् तां स्तौति—

**निस्तरङ्गपरमाद्वयप्रथा-**
**म्भोनिधौ प्रतिनिवर्तितक्रमः ।**
**विश्वमन्नमुदरं नयत्युमे**
**मीन उत्कटविमर्शवक्त्रगः ॥१६२॥**

हे उमे ! निस्तरङ्गपरमाद्वयप्रथाम्भोनिधौ निस्तरङ्गः शान्तकल्लोलो यः परमाद्वयप्रथाम्भोनिधिः, परमं च तदद्वयं शिवशक्त्योरद्वैतं सामरस्याख्यम्, अद्वये परमत्वं च लेशतोऽपि भेदराहित्यरूपम्, यद्वा परमा या अद्वयस्य प्रथा समाधिकालिकी सैव अम्भोनिधिर्बृहत्वाद् दुरवगाहत्वाद् जगल्लयाधिष्ठानत्वाच्च, तत्र प्रतिनिवर्तितक्रमः प्रतिकूलं प्रतिस्रोतो निवर्तितो जगतः सृज्यमानस्य सृष्टस्य च क्रमो येन स तादृशः । उत्कटविमर्शवक्त्रगः कालसाहाय्येन उत्कटा भीषणा या महाकालीरूपा विमर्शशक्तिस्तस्या वक्त्रगः, तया कामस्यापि ग्रासात्, एवंभूतो मीनः कामः संहारेच्छारूपः । यद्यपि मीनकेतन इति कामस्य संज्ञा, तथापि "विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वा वाच्यः" इति वार्त्तिकबलादुत्तरपदस्य लोपे मीन इति कामस्य संज्ञा । विश्वरूपमन्नमुदरं स्वोदरं नयति प्रापयतीति । एवंभूतं संहारेच्छारूपं कामाख्यं मीनमपि स्ववक्त्रस्थितं महाकालीरूपा विमर्शशक्तिर्ग्रसतीति सूचितमुत्कटविमर्शवक्त्रग इत्यनेनेति ॥१६२॥

चितिरूपायाः शिवशक्तेरवभासनक्रमः सर्वाधारत्वेन स्वयं निरधिष्ठानो भूमरूपश्च । रूपादिरहितत्वाच्च निराकृतिः । किञ्च, शिवशक्तेर्व्यापकत्वाद् विषयेष्वपि सा शक्तिरस्ति, तथा च विषयाणां जडानामपि विविधा गतयः । तादृशगतिमद्भिश्च विषयैरवभासनक्रमे तत्तत्कार्यानुकूलः शक्तिनिवहः समुत्पाद्यमानो जृम्भत इत्यागमसम्मतमर्थं प्रदर्शयन् मातरं स्तौति—

**निर्निकेतमहिमा निराकृति-**
**स्तावकोऽयमवभासनक्रमः ।**
**स्वस्थशक्तिविसरत्समाहितो**
**यत्र शक्तिनिवहोऽम्ब जृम्भते ॥१६३॥**

हे अम्ब ! तावकस्त्वदीयः, अयमनुभवगोचरोऽवभासनक्रमः, अवभासनेऽपि क्रमसत्त्वात् । निर्निकेतोऽधिष्ठानरहितो महिमा भूमरूपो निराकृती रूपादिरहितत्वादाकारशून्यः । यत्र अवभासनक्रमे । स्वस्थशक्तिविसरत्समाहितः स्वस्था व्यापकत्वाद् विषयेषु अनुगता या शक्तिस्तया विसरन्तो विविधगतिमन्तो ये विषयास्तैः समाहितः सम्यगुत्पादितः शक्तिनिवहः कृत्रिमस्तत्तत्कार्यानुकूलो जृम्भते जृम्भां वृद्धिमाप्नोतीति ।

महिमेति धर्मधर्मिणोरभेदेन निर्देशः। यथा—"भूमा त्वेव विजिज्ञासितव्यो यो वै भूमा तत्सुखम्" इत्यादौ ॥ १६३ ॥

अनादौ वर्णमातृकाचक्रेऽकारादिभिः क्षकारान्तैर्वर्णैरक्षचक्रं भवति। तत्र षण्ढानां स्वराणां चतुर्णां संसृतिक्रमे संहृतिक्रमे वा षण्ढत्वादेवाप्रयोजकत्वेनाक्षचक्रान्निरासे, धकारस्य ईकारस्य च प्रागुक्ते क्रमद्वये स्वभावादेव औदासीन्येन ततो निरासे, संसृतिक्रमेण संहृतिक्रमेण वा अकारादिक्षान्तानां वर्णानामक्षचक्ररूपाणां मध्ये एकादशभिरेकादशभिर्वर्णैः खण्डचक्रं भवतीत्यागमस्थितिमनुरुध्य तेषु चक्रेषु संहृतिक्रमेण स्थितेषु उपास्यत्वेन ध्येयत्वेन च कालीशक्तिमुपविवर्णयिषुर्महाकालीं स्तौति—

क्षान्त आदिकलिताक्षचक्रगो
धीनिरासकृततद्विचारणः।
खण्डचक्र उदितोऽम्ब ते क्रमो
रुद्रसंख्य इह संहृतिक्रमः ॥१६४॥

हे अम्ब ! क्षान्त आदिकलिताक्षचक्रगः क्षान्तैः क्षकारान्तैः, आदिभिरकारादिभिश्च, वर्णैः कलितं यद् आद्यन्ताभ्यां वर्णाभ्यामक्षचक्रं तद्गतः। धीनिरासकृततद्विचारणो धश्च ईश्च ध्यौ धकारदीर्घेकारौ तयोर्निरासेन कृतं तस्याक्षचक्रस्य विचारणं विचालनं स्वरूपाद् भ्रंशनं यत्र स तथाभूत इति खण्डचक्रविशेषणम्। इह अक्षचक्रे, रुद्रसंख्य एकादशसंख्यो यः संहृतिक्रमः संहृतिक्रमानुसारेण कल्पितः क्षादीनामकारान्तानां वर्णानां क्रम एवंभूतः, ते तव संजिहीर्षोर्महाकालीरूपायाः क्रमः खण्डचक्र उदित उक्तस्तन्त्रेष्विति तत्र खण्डचक्रे साधकैरुपास्या ध्येया च त्वं विजयसे ॥ १६४ ॥

प्रागुक्तं खण्डचक्रस्वरूपमेव विशेषणान्तरैः प्रकारान्तरेण निर्दिशन् तत्रोपास्यां मातरं स्तौति, यद्वा पूर्वश्लोके चतुर्थपादे संसृतिक्रम इति पाठमाधृत्य संसृतिक्रमेण खण्डचक्रं निर्दिश्येह संहृतिक्रमेण खण्डचक्रं निर्दिशन् मातरं स्तौति—

निश्चितग्रहनिदेशवर्जितो
युक्त्ययुक्त्यतिगतोऽक्रमः परः।
सत्पथोदितखधामगः शिवे
खण्डचक्रविसरस्तवोत्कटः ॥१६५॥

हे शिवे ! तव संहृतिक्रमेण खण्डचक्रविसरः खण्डचक्रस्य संहारोन्मुखत्वादेव भीषणः। कथंभूतः ? निश्चितग्रहनिदेशवर्जितो निश्चितो ग्रहस्य खण्डचक्रज्ञानस्य निदेश इदमीदृगिति निर्देशस्तेन वर्जितोऽक्रमत्वाद् ग्रहनिर्देशशून्यः। युक्त्ययुक्त्यतिगतः, युक्तिरनुमानम्, अयुक्तिः शब्दः ( वर्णमातृका ), ते द्वे अपि अतिक्रान्तः, लये सति अव्यक्तत्वात्। किन्तु समाधौ स्वानुभवैकवेद्यः, अत एवाक्रमः क्रमशून्यः, परः परस्मिन्

परशिवे चिद्रूपे लयात्तद्रूपतां प्राप्तः। एतदेव स्फुटं दर्शयति—सत्पथोदितखधामगः सन् संसारदोषानालिङ्गितत्वात् शोभनो यः पन्थाः शुद्धाध्वरूपः, तत्रोदितमाविर्भूतं यत् स्वधाम चिद्गगनरूपं शिवाख्यं धाम तेजस्तल्लयेन गतः प्राप्त इति ॥ १६५ ॥

शक्तेः पराम्बाया जगत्यन्वयक्रमः, जगतः स्थितिक्रमस्य गुप्तिकृत् संहृतिक्रमस्य च निवर्तकः। सर्वस्मिन् जगत्यणुषु महत्सु चार्थेषु संसृतिकालेऽशेषजगद्रक्षानुकूलां वृद्धिं प्राप्य स्थित इत्यागमसिद्धान्तानुसारेणान्वयक्रममुपवर्णयन् तत्प्रतियोगितया मातरं स्तौति—

**व्यक्तिमत्तदितरक्रमप्रथा-**
**गुप्तिकृत् क्षतबहिर्जगत्क्रमः।**
**निर्गताधममहार्थजृम्भितः**
**संभृतौ जननि तेऽन्वयक्रमः ॥१६६॥**

हे जननि ! व्यक्तिमत्तदितरक्रमप्रथागुप्तिकृद् व्यक्तिमान् व्यक्तो यस्तदितरक्रमस्ताभ्यां संसृतिसंहृतिक्रमाभ्यामितरो यः क्रमः स्थितिक्रमस्तस्य या प्रथा प्रख्या प्रकाशः, तस्याः गुप्तिकृद् रक्षकः,। क्षतबहिर्जगत्क्रमः क्षतो निवारितो बहिर्जगद् जगतो बहिर्भूतः संहृतिरूपः क्रमो येन स तथाभूतः। इदमपि अन्वयक्रमविशेषणमेव। किञ्च, निर्गताधममहार्थजृम्भितो निर्गताश्चिद्रूपात् तत्त्वाद् बहिर्गता येऽधमा लघवो महान्तश्चार्थास्तेषु जृम्भितस्तदनुकूलां जृम्भां वृद्धिं प्राप्य स्थितः। जगतः संभृतौ स्थितौ कार्यायां ते तव अन्वयक्रमो जगति सम्बन्धरूपः क्रमोऽस्तीति शेषः। तव सम्बन्धानुभावादेवेदं जगत् संहारमप्राप्य आकल्पं तिष्ठतीति भावः ॥ १६६ ॥

इह श्रावणप्रत्यक्षगोचरीभूतौ द्वौ शब्दौ ध्वन्यात्मकः पदात्मकश्च। तत्राद्यो व्यञ्जकः, द्वितीयस्तु व्यङ्ग्यः। तदुक्तं हरिणा—

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते ॥ इति।

स च यदा संहारकाले चिद्रूपे शिवशक्तिसामरस्ये विश्रमोन्मुखो भवति, तदा खण्डचक्रक्रमेणैव तत्र तल्लयो न तु साक्षादित्यागमसिद्धान्तमुपदर्शयन् मातरं स्तौति—

**ग्राह्यतद्ग्रहविधातृसंभ्रमो**
**नादयुग्म इह विश्रमोन्मुखः।**
**रुद्रसंख्य इममत्तुमीहते**
**तावके तव मरीचिरम्बिके ॥१६७॥**

हे अम्बिके ! ग्राह्यतद्ग्रहविधातृसंभ्रमो ग्राह्याणां तद्ग्रहाणां च यद् विधातृ चितितत्त्वम्, तस्मात् संभूय भ्रमतीति तथाभूतः। किञ्च, तावके त्वत्सम्ब-

न्धिनि इह चितितत्त्वे विश्रमोन्मुखो विश्रमाय लयाय उन्मुखो यो नादयुग्मो व्यङ्ग्य-व्यञ्जकभेदेन प्रागुक्तशब्दद्वयम् । इमं, तं (नादयुग्मम्) तव मरीचिः शक्तिः, रुद्रसंख्यः प्रागुक्तः खण्डचक्ररूपः वर्णरूपः स्वररूपो वा अत्तुं स्वस्मिन् प्रविलापयितुमीहते चेष्टते ॥ १६७ ॥

ज्ञानेन्द्रियपञ्चके कर्मेन्द्रियपञ्चके च निविष्टा विषयाः शब्दादिपञ्चकं तदाश्रयी-भूतं भूतपञ्चकं च, इन्द्रियदशकनिरोधेन तेषां बहिरिन्द्रियदशकनिरोधेऽप्यन्तःकरणे तेषां सूक्ष्मरूपेण स्थितिरूपो लयो भवति, तत्रापि तेषां सुषुप्तिकाले प्रलये वाऽवस्थानात् । क्षये तु महाकालीरूपाया मातुरिच्छैव कालकर्षिणीरूपा नियामिकेत्यागमशास्त्रसिद्ध-मर्थमुपन्यस्यन् मातरं स्तौति—

**यो दशेन्द्रियनिविष्ट उद्धृतोऽ-**
**त्यर्थमात्मजडभेदविप्लुतः ।**
**तत् क्षयाय बत कालकर्षिणी**
**त्वत्समुल्लसति तावकी रुचिः ॥१६८॥**

यः पदार्थवर्गः, अत्यर्थमत्यन्तम्, आत्मजडभेदविप्लुत आत्मनां जडानां च यः प्रत्येकं परस्परं वर्गद्वयस्य च मिथो भेदस्तेन विप्लुतः, तद्रूपं विप्लवमुपसर्गं प्राप्तः, अतोऽभिन्नोऽपि भिन्न इव लक्ष्यमाणो दशेन्द्रियनिविष्टो ज्ञानेन्द्रियकर्मेन्द्रियरूपदशेन्द्रिय-संबद्धः, इन्द्रियाणां बहिर्विषयेभ्यो निरोधेन च इन्द्रियदशकादुद्धृतो बहिर्निष्कासितः। अत एवान्तःकरणे वासनारूपेण तत्कार्यस्मृतिरूपेण च स्थितः । बतेति हर्षे खेदे वा । विषयसत्त्वे दुःखसंभावनया तत्क्षये हर्षः, खेदस्तु विषयाणां प्रक्षये उपभोगः । तत्क्षयाय तस्य पदार्थवर्गस्य मानसस्य विनाशाय । कालकर्षिणी कालमपि या कर्षति संहाराय सा तादृशी । तावकी रुचिस्तवेच्छा । त्वदिति पञ्चम्यन्तम् । भवत्याः सकाशात् समु-ल्लसति स्फुटमाविर्भवतीति ॥ १६८ ॥

यावज्जीवोऽक्षचक्रनिवहेन ( इन्द्रियसमूहेन ) विषयानुपसेवते, तावत् शिवैक्य-लक्षणं तत्पदं न गच्छति । तदुक्तम्—"पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥" इति । यदा तु आत्मनः स्वप्रकाशचिदानन्दरूपं शिवैक्यं साक्षात्करोति, तदा तादृश-चिच्चमत्कारपूर्णस्तत्पदं गतः सन्नुल्लसतीति "तत्त्वमसि", "अहं ब्रह्मास्मि" इत्यादि-महावाक्यसंवादितमागमसिद्धान्तं दर्शयन् स्वप्रकाशानन्दचितिरूपां मातरं स्तौति—

**अक्षचक्रनिवहोऽर्कसंख्यया**
**स्वं स्वमर्थमिह यो ग्रसत्युमे ।**
**चिच्चमत्करणनिर्भरः स ते**
**प्रत्यगुल्लसति तत्पदं गतः ॥१६९॥**

हे उमे ! अर्कसंख्यया द्वादशसंख्यया परिच्छिन्नो योऽक्षचक्रनिवह इन्द्रियसमूहः, इह जगति स्वं स्वमर्थं विषयपञ्चकं ग्रसति भुङ्क्ते, स तदुपाधिकः, प्रत्यग् देहादि-विलक्षणः सच्चिद्रूपो जीवः, ते तव चिच्चमत्करणनिर्भरः स्वाभेदेन साक्षात्कृतं यच्चिद्रूपं तेन यच्चमत्करणं विस्मयस्तेन निर्भरः परिपूर्णः सन्, अत एव तत्पदं गतस्तस्य शिवस्य पदं गतः सन् उल्लसति उल्लासं परमानन्दं विन्दतीति ॥ १६९ ॥

अक्षचक्रगतो जीवो यदाऽभ्यासवैराग्याभ्यां विषयेभ्यश्चित्तवृत्तिसन्तती-रपनयति, तदा झटिति तत्पदं प्रेक्ष्य तव तुर्यं धाम विशति। तदा तस्य प्रशान्तपरमचिद्-गगनगताश्चिद्रूपा दीप्तयश्चितिरूपायास्तव सामरस्यमुपयान्तीति विद्वदनुभवसिद्धमर्थं साधकानां विद्यालोभाय प्रदर्शयन् मातरं स्तौति—

**तत्पदं झटिति नीतसन्ततिः**
**प्रेक्ष्य देवि तव तुर्यधामगः ।**
**निस्तरङ्गपरमाम्बरात्मगाः**
**सामरस्यमुपयान्ति दीप्तयः ॥१७०॥**

हे देवि ! यदा जीवो विषयेभ्यो नीतसन्ततिर्नीता अपनीता चित्तवृत्तिसन्तति-र्येन स तादृशो भवति, तदा झटिति तत्पदं प्रेक्ष्य साक्षात्कृत्य तव तुर्यधामगो भवति । तदा तस्य चिद्रूपा दीप्तयो निस्तरङ्गपरमाम्बरात्मगाः प्रशान्तपरमगगन-रूपात्मगताः सत्यस्तव सामरस्यमुपयान्तीति योजना ॥ १७० ॥

अथ साम्प्रतमन्तर्बहिःस्थितचक्रद्वयाधिष्ठातृतया मातरं स्तौति—

**आदिसर्गसमखण्डवर्जित-**
**स्वस्वरात्मरुचिचक्रगामिनि ।**
**व्यक्ततत्परतया स्थितं बहि-**
**स्तावकार्थरुचिचक्रमम्बिके ॥१७१॥**

हे अम्बिके ! हे आदिसर्गसमखण्डवर्जितस्वस्वरात्मरुचिचक्रगामिनि ! आदीनां ह्रस्वाकारादीनां यः सर्गस्तेन समो यः खण्डो दीर्घेकारस्य ह्रस्वेकाररूपोऽवयवस्तेन वर्जितो यः स्वस्वरः स्वस्या मातुर्वाचको ह्रस्वेकाररूपः स्वरस्तदात्मकं यद् रुचिचक्रं प्रकाशचक्रं चक्राकारः प्रकाशस्तद्गामिनि तदधिष्ठात्रि ! तावकार्थरुचिचक्रं तावकं त्वदीयं यद् अर्थात्मकं प्रागुक्तस्वरार्थरूपं रुचिचक्रं बहिर्व्यष्टिशरीराद् बहिः समष्टि-शरीरे व्यक्ततत्परतया अर्थरूपेण व्यक्तो यः स प्रागुक्तः स्वरस्तदभिन्नतया स्थित-मस्ति । तथा चायमस्य पद्यस्य परमार्थः —व्यष्टिशरीरे ह्रस्वेकारस्वराकारेण स्थितं यद् रुचिचक्रं तदधिष्ठात्री त्वं व्यष्टिशरीराद् बहिश्च समष्टिशरीरे प्रागुक्तस्वरार्थ-रूपेण स्थितं यद्रुचिचक्रं तदधिष्ठातृरूपेण च त्वमेव अन्तर्बहिश्च स्थितेति ॥ १७१ ॥

इदानीं चिदाकाशस्थिता निर्विकल्पमरीचय एव शक्त्या करणेन स्फारिताः पूर्णत्वं दधुरिति प्रकर्षं प्रतिपादयन्नाह—

**निर्विकल्पपरमाम्बराश्रयाः**
**उज्झितेतरपदास्त्विषस्तव ।**
**स्फारिता हि यदि पूर्णतामधुः**
**संभ्रमं जगति बाह्यमीश्वरे ॥१७२॥**

हे शिवे ! निर्विकल्पे विकल्परहिते परमाम्बरे चिदाकाशे आश्रयः स्थितिर्येषां ते तव सम्बन्धिन्यस्त्विषः किरणाश्चिन्मरीचयः। कथंभूतास्ता इत्याकाङ्क्षायामाह—उज्झितं परित्यक्तं तदितरपश्यन्तीमध्यमावैखरीरूपं पदमाख्या यैस्ते त्वदीयाः प्रकाशमयूखाः, त्वया स्फारिताः स्वयमेव स्वस्वातन्त्र्यबलाज्जगदात्मना स्फुरणमास्थिताः, हि निश्चयेन, यदीति वाक्यालङ्कारे, पूर्णतामधुः प्राप्ताः। अस्यां स्थितौ ईश्वरे तद्दशामधिशयाने आन्तरत्वम्, स्वेच्छया जगदात्मना स्फुरिते त्वदात्मके जगति बाह्यत्वमिति समाकलनं त्वरया कथनम्, न तु विचारगाम्भीर्येण। संभ्रममिति क्रियाविशेषणम्। परावाग्वपुषैव विमर्शस्य पूर्णत्वम्, मध्यमादिरूपेण तत्स्फुरणं तु स्वातन्त्र्यविलासः, भेदविलाससाहित्येऽपि पूर्णतायाः क्षत्यभावात्। स्वाभाविकरूपस्यान्तरदशोद्रेकस्य विजृम्भणमात्रं जगदिति बाह्याभ्यन्तरसंज्ञाद्वयेन न कोऽप्यपूर्वः समुल्लासः सम्भावनीय इति रहस्यम्। निखिलमप्यर्थजातरूपं जगच्चिदात्मन्येव भासते, तत एव परावागात्मना बहिः प्रसर इत्युक्तं प्रत्यभिज्ञायां चिदात्मैव हि देवोऽन्तरित्यादिना। वाक्यपदीयब्रह्मकाण्डेऽप्यान्तरसत्ताया ज्ञातृरूपतयोत्प्रेक्षणं यथा—

अथायमान्तरो ज्ञाता सूक्ष्मे वागात्मनि स्थितः।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥ ( १।११२ ) इति।

प्रत्यक्चैतन्यवादिविज्ञानवादिनावपि मूलतत्त्वस्याभ्यन्तरसत्तामेवाङ्गीकुरुत इति न तिरोहितं प्रेक्षावताम्। क्रमदर्शनप्रत्यभिज्ञादर्शनरीत्या तु निरुपादानस्यार्थजातस्येच्छाप्रत्यवमर्शरूपस्य जगतोऽवभासः स्वभावविलास एव ॥ १७२ ॥

इदानीं तस्याः शक्तेर्नित्यत्वप्रसाधनपूर्वकं व्यवहारोपयोगित्वस्थापनाय स्वातन्त्र्यविजृम्भणरूपायाः कल्पनायाः स्वात्मरूपत्वमेव प्रत्याययितुं प्रक्रमते—

**चञ्चला तटिदिवाक्रमं परा**
**स्पन्दवृत्तिलहरी तवाम्ब या ।**
**सोदयात् प्रभृति कल्पनां विना**
**वृत्तिभिस्तिसृभिरुज्झिता सकृत् ॥१७३॥**

हे अम्ब ! अम्बते परावाग्रूपतोपादानतया पश्यन्तीमध्यमावैखरीतिस्वात्मभेद-विलासरूपतया व्यवहारसौकर्यप्रदानादनुगृह्णात्यणून् या साऽम्बा, तत्सम्बोधने उक्तं रूपम्। 'अवि रबि लबि अबि शब्दे' इति भौवादिकाद्धातोः कर्तर्यचि टापि अम्बार्थ-नद्योर्ह्रस्वः। तव या तटिदिव विद्युदिव पुनः पुनरवभासनप्रत्यवभासनशीला स्पन्दवृत्ति-लहरी स्वस्मिन् स्वयमुच्छलत्तारूपा शक्तिः, सैव लोकप्रसिद्धलहरीव लहरी क्रियाशक्तिः, सा अक्रमं यथा स्यात्तथा स्वरूपमास्थाय विलसन्ती परा परानाम्नी वृत्तिरेव। नहि स्वरूपे क्रमाक्रमवैलक्षण्याभिव्यञ्जनस्य काऽप्यावश्यकता। भासनात्मा क्रमस्तु अपर-प्रमातृदृशैव, देशकालाकारव्यवहाराणां लोके एव सम्पर्कसदुपयोगसम्भवात्, स्वरूपे तदनुपयोगाच्च स्वरूपतः शक्तिस्वरूपमक्रममेवेति सर्वथा निर्विचिकित्सम्। उदयात्प्रभृति प्रलयपर्यन्तं सा शक्तिः काली कलनस्वरूपाभिस्तिसृभिः पश्यन्तीमध्यमावैखरीभि-रुज्झिता रहिता, सकृद् नित्यैव। कल्प्यते वैविध्यद्योतनायाक्रमापि क्रमत्वाक्रमत्वप्ररोहोऽव-भास्यते यया सा स्वतन्त्रा विमर्शाख्या शक्तिः, तां विना स्वसामर्थ्यमासाद्य तु पराऽद्वया सा नित्यापि परापरभेदभाक्त्वं भजमाना नानात्मना विलसतीति भावः "सकृद्विभातोऽ-ऽयमात्मा" इतिवत् सकृच्छब्दोऽत्र नित्यपर्याय इति न तिरोहितं प्रेक्षावताम्॥ १७३॥

अथेदानीं पूर्वोक्तमेव शक्तिस्वरूपं निष्कलं सृष्टिक्रममनुरुध्य सकलत्वं भजदपि न स्वस्वरूपात् प्रच्यवत इति स्पष्टीकुर्वन्नाह—

**अम्ब तत्र कलना पृथक्क्रिया**
**सृष्टितः स्वपथगे क्रमे च या।**
**तद्विरूपममलं तनुक्रमो-**
**द्योगमुख्यचतुरूर्मिसश्रितम्॥१७४॥**

हे अम्ब! अम्बशब्दार्थः पूर्वमुक्तः। तत्र निष्कले तव स्वरूपे कलना पृथक्क्रियैव। सृष्टेः प्राक्स्वरूपं प्रकाशविमर्शसामरस्यापन्नं निष्कलमिति सुस्थम्। तदुक्तं मालिनी-विजयोत्तरे—

या सा शक्तिर्जगद्धातुः कथिता समवायिनी।
इच्छात्वं तस्य सा देवि सिसृक्षोः प्रतिपद्यते॥
सैकापि सत्यनेकत्वं यथा गच्छति तच्छृणु।
एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम्॥
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते।
एवंभूतमिदं वस्तु भवत्विति यदा पुनः॥
जाता तदैव तत्तद्वत् कुर्वत्यत्र क्रियोच्यते।
एवं सैषा द्विरूपापि पुनर्भेदैरनेकताम्॥
अर्थोपाधिवशाद् याति चिन्तामणिरिवेश्वरी।
तत्र तावत् समापन्नमातृभावा विभिद्यते॥

द्विधा च नवधा चैव पञ्चाशद्धा च मालिनी।
बीजयोन्यात्मकाद् भिन्ना द्विधा बीजं स्वराः मताः॥
कादिभिश्च स्मृता योनिर्नवधा वर्गभेदतः।
प्रतिवर्णविभेदेन शतार्धकिरणोज्ज्वला॥
बीजमत्र शिवः शक्तिर्योनिरित्यभिधीयते।
वाचकत्वेन सर्वापि शम्भोः शक्तिश्च शस्यते॥ (३।५-१३) इत्यादि।

तदेवं या शक्तिर्जगद्धातुः शिवस्य समवायिनी कथिता सा, सिसृक्षोः शिवस्येच्छात्वमास्थाय जगदात्मना स्फुरिता सती नानानामरूपादिव्यपदेशं भजन्ती वस्तुगत्याऽभिन्नाऽपि भेदमापद्यते। पुनश्च तनुक्रमोद्योगे मुख्या याश्चतस्र ऊर्मयः परापश्यन्त्यादयः, ताभिः सञ्चितं संघट्टात्मना समरसीभूय अमलं निर्मलं नामरूपोपाधिविनिर्मुक्तं तद्विरूपं निरुत्तरं निष्कलं पदमवाप्य स्वात्ममात्रस्थिता शुद्धचिन्मात्रया विराजत इति भावः। चित्स्वरूपायास्तस्या अवरोहक्रमे या नामरूपात्मजगदात्मना स्फूर्तिः, सैव तनुस्तस्याः क्रमः परापश्यन्त्यादिनाऽभिव्यक्तिः, यद्वा सदाशिवादिक्षित्यन्तक्रमेण षट्त्रिंशद्धा प्रसरः, यद्वा "वस्तुपिण्डोऽण्डमुच्यते" इत्युक्त्या पार्थिव-प्राकृत-माया-शाक्तभेदेन चतुर्विधोऽण्डप्रवाहः, यद्वा वर्णपदमन्त्रकलातत्त्वभुवनानां वाच्यवाचकभेदद्वयेन प्रविभागक्रमः, इत्येवमादितनुक्रमस्योद्योगः परिज्ञेयः। दृष्टित इति पाठभेदेऽपि दृष्टिरेव सृष्टिरिति नीत्या सृष्ट्युन्मुखाया एव शक्तेः सकाशात् सृष्टिप्रसारक्रमोऽवगन्तव्यः॥१७४॥

अथेदानीं विविधकालीनामाविर्भावप्रसङ्गे सर्वप्रथमं सृष्टिकाल्या आविर्भावं प्रस्तुत्य तस्याः प्रवाहस्वातन्त्र्यं सर्वथाऽनर्गलमनन्योन्मुखमिति व्याकर्तुं प्रक्रमते—

**एकमम्ब तव भात्यनावृतो**
**द्वादशक्रमचिदूर्मिडम्बरः।**
**सृष्टिकाल्युदयमेति यन्मुखे**
**यः स्फुटो निरवधिर्निराश्रयः॥१७५॥**

हे अम्ब! तव प्रकाशाद् बहिर्भूततया निरर्गलविजृम्भणसमर्थायाः क्रम एव कालः, स एव चित् चिद्रूपस्तेजसां पिण्डस्ततः स्वभावादेवोर्मयो मरीचिपुञ्जाः प्रतिक्षणं बहिर्निःसरन्ति, तासां यो डम्बरः समूह आवरणं मण्डलं वा। चिन्मरीचिपुञ्जानां द्वादश एव प्रकाराः संभाविताः। तदुक्तं तन्त्रसारे चतुर्थाह्निके—"१. संवित् पूर्वमन्तरेव भावं कलयति, २. ततो बहिरपि स्फुटतया कलयति, ३. तत्रैव रक्तिमयतां गृहीत्वा ततस्तमेव भावमन्तरुपसंजिहीर्षया कलयति, ४. ततश्च तदुपसंहारविघ्नभूतां शङ्कां निर्मिणोति च ग्रसते च, ५. ग्रस्तशङ्काशं भावभागमात्मन्युपसंहारेण कलयति, ६. तत उपसंहर्तृत्वं ममेदं रूपमित्यपि स्वभावमेव कलयति, ७. तत उपसंहर्तृस्वभावकलने कस्यचिद् भावस्य वासनात्मनाऽवस्थितिं कस्यचित्तु संविन्मात्रावशेषतां कलयति, ८. ततः स्वरूपकलनानान्तरीयकत्वेनैव करणचक्रमिन्द्रियचक्रं कलयति, ९. ततः करणेश्वरमपि कलयति, १०. ततः

कल्पितं मायीयं प्रमातृरूपमपि कलयति, ११. संकोचत्यागोन्मुखविकासग्रहणरसिकमपि प्रमातारं कलयति, १२. ततो विकसितमपि रूपं कलयति" इति। एभिरेव शक्तीनां भेदद्वादशकैः समस्तव्यस्तरूपेण सकलोऽपि लोकव्यवहारो नितरां समभिप्रचाल्यते। एकैव संविद्रूपा काली स्वस्वातन्त्र्यमहिम्ना मानमेयमातृरूपत्रिपुट्यां द्वादशधा भासते, अतस्तस्याः संज्ञा भिन्नभिन्ननामभिर्भिद्यते।

मन्त्राणामुदयहेतुरसौ व्योमरूपा व्योम्नि स्थिताऽपि तद्वर्जिता, सर्वरूपाऽपि सर्वरहिता, विश्वात्मिकाऽपि विश्वोत्तीर्णा सृष्टिकाली। तस्या लक्षणं श्रीपञ्चशतिकातोऽत्र दीयते—

मन्त्रोदया व्योमरूपा व्योमस्था व्योमवर्जिता।
सर्वा सर्वविनिर्मुक्ता विश्वस्मिन् सृष्टिनाशिनी॥
या कला विश्वविभवा सृष्ट्यर्थकरणक्षमा।
यदन्तः शान्तिमायाति सृष्टिकालीति सा स्मृता॥ इति।

श्रीक्रमस्तोत्रेऽपि—

कौलार्णवानन्दघनोर्मिरूपामुन्मेषमेषोभयभाजमन्तः।
निलीयते नीलकुलालये वा तां सृष्टिकालीं सततं नमामि॥ इति।

कालीति भगवत्या नाम्नो निर्वचनं विभिन्नतन्त्रेषु दृश्यते। तत्र महानिर्वाणतन्त्रे—

कालसंकलनात् काली सर्वेषामादिरूपिणी।
कालत्वादादिभूतत्वादाद्या कालीति गीयते॥ इति।

कामधेनुतन्त्रे—

"कालसंकलनात् काली कालग्रासं करोत्यतः" इति।

तत्रैव महाकालमहाकालीति नामद्वयस्यान्वर्थत्वसंज्ञायां कारणमपि निर्दिष्टम्—

तव रूपं महाकाली जगत्संहारकारकः।
महासंहारसमये कालः सर्वं ग्रसिष्यति॥
कलनात् सर्वभूतानां महाकालः प्रकीर्तितः।
महाकालस्य कलनात् त्वमाद्या कालिका परा॥ इति।

कालीतन्त्रे तु ज्ञानतत्त्वप्रदत्वमपि काल्याः समुपदिष्टम्—

"कालनियन्त्रणात् काली ज्ञानतत्त्वप्रदायिनी" इति।

कालमहाकालपदवाच्यस्य शिवस्यापि नियन्त्रिका काली एव। एवमेव "विद्याकामः शिवं यजेत्" इति वचनमपि शक्तिशक्तिमतोरभेदोपचारादेव। वस्तुगत्या विचारे क्रियमाणे ज्ञानतत्त्वस्य अधिष्ठात्री काली। तस्मात्तद्दात्रीत्वं तस्या एव। अत एव—"स्त्रीमुखादुद्धरेत् प्राज्ञः स्त्रीमुखे एव निक्षिपेत्" इति सम्प्रदायविदामाघोषः सार्थकत्वं बिभर्ति। मुखं निःसरणमित्यमरकोषः। गृहादेर्मुखभूतस्य द्वारप्रदेशस्य निःसरणमिति संज्ञा।

यस्य चिन्मरीचिनिवहस्य मुखे द्वारप्रदेशे सृष्टिक्रमशुभारम्भकर्त्री सृष्टिकाली उदयं क्रमं प्राप्नोति, मूलस्वरूपाद्बहिर्निःसरणमेव कलनम्। सृष्टिरप्यक्षुब्धप्रशान्तगम्भीरान्मूलाद्बहिर्निःसरणरूपं कर्मैव, तस्यारम्भिका सृष्टिकाल्येव। यो हि द्वादशधा प्रोच्छलन् क्रमरूपचिदूर्मीणां डम्बरश्चिद्रश्मिप्रवाहो विचार्यमाणो निःसीमः स्वतन्त्रश्चेति सुस्पष्टम्। स च चिद्रश्मिप्रवाहोऽनावृतः सन् भाति प्राधान्येनेति जगतः प्रकाशविमर्शरूपतैवेति फलितम्। सृष्टिकालीत्यत्र राहोः शिर इतिवत् षष्ठी अभेदे ज्ञेया। एतेन सृष्टेर्नित्यत्वकल्पनाऽपि सम्यग् युज्यते। यथोक्तं प्रत्यभिज्ञाहृदयप्रथमसूत्रे—"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इति। विश्वस्य सिद्धौ निष्पत्तौ हेतुत्वं स्वतन्त्रायाश्चितेरेवेति कार्यस्य जगतोऽपि चिद्रूपत्वमनायासेन सिद्धम्। परा, अपरा, परापरा, कालकर्षिणीति चतसृणां शक्तीनां सृष्टिस्थितिसंहारैर्गुणितया द्वादशत्वं सम्पत्स्यते। तच्च द्वादशत्वं परिणामक्रमस्य काष्ठान्तावधिः। सूर्यस्य द्वादशभेदवच्चिद्विकाररूपस्य संसारस्यापि द्वादशविधतैव कल्पयितुं शक्यते, तदधिकत्वे तन्न्यूनत्वे वा प्रतिवादिविप्रतिपत्तिसंभवात्। निरवधिनिराश्रयेति विशेषणद्वयेन चिद्वज्जगतोऽप्यनाद्यनन्तत्वकल्पना निराबाधेति संसूच्यते ॥ १७५ ॥

साम्प्रतं चिद्रश्मिसमूहस्य जगतो द्वैविध्यसंस्थापनाय प्रक्रमते—

तस्य देवि हरसंभृतेर्वशाद्<br>
दुर्निरीक्ष्यतनुरुच्छ्रिताश्रयः ।<br>
स्वस्वभावविहितक्रमाक्रमे<br>
द्वैध एष तव चित्त्विषां चयः ॥१७६॥

हे देवि! शक्तियुक्तस्य शिवस्यैव प्रभवित्वम्, तद्योगं विना स्पन्दनेऽप्यप्रभुरिति का कथा कर्तृत्वस्येति भगवत्पादैरप्याकलितपूर्वत्वात्सिद्धं यत् शिवस्य भरणपोषणादिकर्म शक्त्यायत्तम्। सर्वाकारयोगित्वरूपविमर्शस्य निरर्गलविलासोऽपि न कस्मैचिद् दूषणाय प्रभवेत् तथापि निर्वाह्यनिर्वाहैकधना मनस्विनः स्वतोऽप्यधिकं तस्मिन्नभिध्यायन्तीति प्रथितं लोके। तस्यैतस्य मनस्विवीरव्रतस्य संरक्षणाय त्वयाऽपि हरसंभरणरूपवीरव्रतपालनाय प्रतिज्ञातमिति तस्यालौकिकस्य दुष्करस्य शिवसंभरणव्रतवैवश्येन दुर्निरीक्ष्यतनुः, दुःखेन कष्टेन निरीक्षणीयं, शिष्टाचारसहकृतविचारेणापि सम्यगवबोधाक्षमं तनुः शरीरं यस्य सः, उच्छ्रितः प्रोत्कृष्ट आश्रयो विषयो यस्य सः। तव एष पुरः स्थितश्चित्त्विषां चित्प्रकाशानां चयः समूहो राशिः सृष्टिकाल्याः सृष्टं जगत्। तद्धि स्वस्वभावेन विहितक्रमाक्रमरूपमेव। नहि सृष्टिसंहारकार्याभ्यां प्राक् परं वा क्रमाक्रमयोः संभावनेति सृष्टिसंहाररूपायाः काल्याः स्वभावेन क्रमस्याक्रमस्य वा विधानं नैसर्गिकम्। तत्र निसर्गजक्रमाक्रमरूपे तव चिद्रश्मिनिचयरूपे जगति द्वैधत्वं प्रकाशविमर्शात्मकत्वं कामं निर्दुष्टम्। एतेन प्रकाशस्य विमर्शात्मकत्वं विमर्शस्य च प्रकाशात्मकत्वं सर्वथा

सर्वदाऽक्षुण्णतया वर्तत इति यामलत्वं सिद्धम्। चिदानन्दस्वरूपस्य यामलीभावस्य प्रकल्पनं तन्त्रागमदर्शनरहस्यम् ॥ १७६ ॥

त्रिकदर्शने त्रयाणां समूहस्य इच्छाज्ञानक्रियात्मनः, नरशक्तिशिवात्मनः, शाम्भवशाक्ताणवात्मनो वा भावनाकरणोपदेशः प्राचुर्येण समुपलभ्यते। सर्वमपि जगत् त्रिकदृष्ट्यैव दृश्यते, द्रष्टव्यं चेति तद्रहस्यम्। दर्शनेषु द्वैत-द्वैताद्वैत-अद्वैतभावना चिरादनुस्यूताऽनुभूयते। शैवदर्शनेऽपि शिवरुद्रभैरवभेदेनोक्तभावनायाः क्रमः संसूचितः। तत्र शिवो द्वैतस्य, रुद्रो द्वैताद्वैतस्य, भैरवश्च अद्वैतचिन्तायाः प्रतीकभावेन स्मृताः। तत्र भैरवोऽद्वैतचिन्तनपरतयाऽभ्यर्हित इति शिवे यद् भैरवत्वं तद्धेतुत्वं त्वय्येवेति ख्यापयन् शक्तिं स्तौति—

> यो मनोन्मनमनोन्मनीतरः
> स्वस्वरूपचतुरात्मभावतः ।
> द्वादशैक्यतनुरक्रमक्रमो
> भैरवस्त्वमसि देवि ते स्थितिः ॥१७७॥

हे देवि ! स्वालौकिकदिव्यशक्त्या स्वाच्छन्द्येन क्रीडनशीले ! स्वीयानुत्तर-स्वरूपपरज्योतिःस्वभावेन बाह्यान्तर्द्योतनस्वभावे वा ! यो हि भैरवभावो लोके शास्त्रे च प्रसिद्धः, सोऽपि त्वमेवासि, यतो हि तवैव सामर्थ्यमासाद्य भैरवो भैरवत्वं रक्षति प्राप्नोति प्रयुङ्क्ते समुपभुङ्क्ते च। कीदृशोऽसौ भैरव इत्यपेक्षायामाह—मनोन्मनमनोन्मनीतरः। संकल्पविकल्पात्मकमेकादशमिन्द्रियं मन इति न्यायवैशेषिक-साङ्ख्यादिदर्शनवत् शैवदर्शनेऽपि स्वीकृतम्। अमनस्कयोगस्थितिलाभायोपासका मनस ऊर्ध्वमाक्रम्य उन्मनस्कां स्थितिं लभन्ते। औन्मनसपदप्राप्तिर्योगिनां परमसिद्धानामेव, न तु सामान्यानामिति दर्शनेषु भूयो भूयः प्रतिपादितम्। तन्त्रागमदर्शने मनःशब्दोऽकारान्तोऽपि प्रयुज्यत इति न विस्मर्तव्यम्। तन्त्रागमदर्शने किमपि भिन्नमेव व्याकरणं प्रचलितं कालक्रमेण विलुप्तमिति साम्प्रदायिकाः।

अयमत्राभिप्रायः—पञ्चाशन्मातृकात्मका वर्णास्तु प्रसिद्धा एव। ततोऽन्येऽपि बिन्द्वादिमहाबिन्द्वन्तनवमात्रात्मका वर्णाः साधनामार्गे वरिवस्यारहस्य-योगिनीहृदय-स्वच्छन्दतन्त्र-नेत्रतन्त्र-श्रीविद्यार्णवादिग्रन्थेषु वर्णिताः समुपयुज्यन्ते। तद्यथा—

> हृल्लेखायाः स्वरूपं तु व्योमाग्निर्वामलोचनाः ।
> बिन्द्वर्धचन्द्ररोधिन्यो नादनादान्तशक्तयः ॥
> व्यापिकासमनोन्मन्य इति द्वादशसंहृतिः ।
> बिन्द्वादीनां नवानां तु समष्टिर्नाद उच्यते ॥ इति ।

( व० र० १।१०, १२ )

अकारोकारमकाराः प्रणवप्रयुक्ता ध्वनिविशेषाः वर्णविशेषा वा प्रसिद्धाः। बिन्द्वादयो नवापि सूक्ष्म-सूक्ष्मतर-सूक्ष्मतमकालैरुच्चार्या ध्वनिविशेषाः। अनुस्वारविसर्गादीनां वर्णत्वस्य सर्वसंमतत्वादुक्तानां वर्णत्वे न विप्रतिपत्तिः। अतः पाणिनीयशिक्षायाम्—"त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः" इति प्रतिज्ञातम्। एषां लिपयोऽपि सम्प्रदायविद्भिरन्विष्य लोकहिताय प्रकाशितास्तत्र तत्र ग्रन्थान्ते संनिवेशिताः प्रयुज्यन्ते भावनासु समुपासकैः। तस्या उन्मन्या इतरो भिन्नो भैरवाख्यः शिवः चतुःषष्टिविधतन्त्राणामधिष्ठाता। रुद्रशिवौ तु दशाष्टादशविधतन्त्राणामेवाधिष्ठाताराविति तन्त्रालोकप्रथमाह्निके जयरथः। केषाञ्चन मते व्यापिकासमनोन्मन्यः शक्तिविशेषवाचिकाः शिवत्वप्राप्तौ समुपकारिका उपायभूताः। तत्र समना विमर्शशक्तिमधिष्ठाय सृष्टिकार्यं निर्वहति। उन्मनी तु शिवमधिष्ठाय परब्रह्मणो विमर्शशून्यविश्वातीतमार्गमाश्रित्य स्वे महिम्नि विराजते।

तन्त्रालोके तु उक्तेषु द्वादशसु ध्वनिषु एकादश समनापर्यन्ताः प्राणदेशगतिशीला एव। उन्मना तु ततोऽतीता। निरामयमुपेयभूतं शिवतत्त्वमर्थात् परमशिवतत्त्वं तु ततोऽप्यतीतमिति युक्तमेवोक्तम्—तदितर इति। नित्याषोडशिकार्णवटीकाकृत् शिवानन्दमुनिस्तु ऋजुविमर्शिन्यां मुद्रासु उन्मन्याः परिगणनं चक्रे। यथोक्तम्—

चिबुकं योजयित्वा तु षोडशस्वरमण्डले।
चन्द्रसूर्याग्निरोधेन मूलशक्तिनिकुञ्चनात्॥
रसनामन्तरा कृत्वा अनच्के धारयेन्मनः।
एषा सा खेचरी मुद्रा उन्मनात्वं प्रयच्छति॥ इति।

उन्मनोन्मन्योः पर्यायतया तन्त्रागमे व्यवहारः। मनसः शून्यदेशे निवेशनाय सामरस्यप्राप्तये च उन्मनात्वप्राप्तिरपेक्ष्येति पूर्वोक्त एवार्थः परिवर्धनयुक्तो ज्ञानसारग्रन्थेऽप्युक्तः—

बिन्दुकण्ठसमायोगात् प्रविकास्य शिरोम्बुजम्।
चन्द्रसूर्याग्निरोधेन मूलशक्तिं निकुञ्च्य च॥
रौद्रीं कुञ्चिकयोद्घाट्य द्विरष्टकमलोदरे।
रसनामन्तरा कृत्वा नासाग्रे रोपयेद् दृशौ॥
यवमात्रं त्रिकोणं तु मीलनोन्मीलनात्मकम्।
लिहन् स्वरसनाग्रेण पिबन्नमरवारुणीम्॥
सदा समरसीभूतं मनः शून्ये निवेशयेत्।
एषा सा खेचरी मुद्रा उन्मनात्वप्रदायिनी॥ इति।

खेचरीमुद्रासाधनानन्तरमुन्मनी दशा प्राप्यते, येन स्वात्मशिवप्राप्तिमार्गः प्राप्येतेतिकृत्वा स्वात्मशिवस्य तत इतरत्वकथनं ग्रन्थकृतः साधु युज्यते। स्वस्वरूपेषु चतुर्षु रुद्र-शिव-भैरव-परमशिवेष्वेवात्मत्वभावनाकरणात् पूर्वोक्तद्वादशविधशक्तिस्फुरणदशासु ऐक्यभावप्राप्त्या तत्समष्टितनुर्यस्य, अथवा स्वस्वरूपे दक्षतयाऽऽत्मनि

आत्मभावो यस्य। न त्वनात्मनि आत्मभावरूढ्या भैरत्वं लब्धुमर्हम्। तुर्यं विशेषण-मक्रमक्रम इति। स्वरूपेण स्वयमक्रमोऽपि स्वस्वातन्त्र्यभरेण क्रमरूपत्वेऽपि न तस्य कापि क्षतिरित्यादिमाहात्म्यभाग् यो भैरवः, सोऽपि त्वमेवासि। यतस्ते तव स्थितिः सामर्थ्य-मेवेदृशमिति भावः। कथं भैरवपदं महत्त्वपूर्णमिति चेच्छ्रोतव्यम्—बिभर्ति विश्वमर्थाद् धारयति पोषयति च स्वात्मभित्तिसंलग्नतयेति भैरवः। अथवा विश्वेन भ्रियते धार्यते पोष्यते चेति हेतोर्भैरवः। भैरवो हि विश्वमयत्वेन सर्वत्र स्फुरतीति। अथवा शब्दनं हि भैरवाख्यदेवस्य स्वभावः, तेन स्वभावेन विश्वस्य भरणाद् रवणाच्चायं भैरव इति निरुच्यते। अन्यच्च-संसारी जनः शोकरोगसंतापादिना भीतः कमपि शरण्यं गवेषयति। भीतौ निमित्तं संसारं त्रासदातृत्वेन मन्वानः संसारोद्धरणक्षमं देवमभियाच-मानो भैरवं लब्ध्वा संतोषमनुभवतीति भीरूणां कल्याणकारित्वेनाप्यसौ भैरवः। किञ्च, भवाद्भयं भीस्तस्य रवो विवेचनं विमर्शनं तस्यानुग्रहकरणेनायं कारणमिति भैरवः। तथा च, भानि नक्षत्राणि ईरयति प्रेरयतीति भेरः कालस्तस्य तत्त्वं क्षणप्रहरा-होरात्रपक्षमासात्मकं स्वरूपं तस्य सम्यङ् निःशेषेण शोषमभिभवं कुर्वन्तीति कालं वारयन्ति इति वा भेरवाः कालग्राससमाधिदक्षतया दत्तावधाना योगिजनाः, तेषां तेषु वा स्वामित्वेन स्फुरणशीलो भैरवः। अथवा भेदज्ञाने एवाभेदज्ञानवत्तया व्यवहर्तॄणां पशूनां भिये रवणं यासां ता इन्द्रियशक्तयः खेचरी-गोचरी-दिक्चरी-भूचरीप्रभृतयः, तासां स्वामीति हेतोर्भैरवः। अथवा संहारकर्मणि दक्षतया भीषणाय आविर्भूत इति तत्रार्थे भैरवशब्दः संकेतित आचार्यैः। एतेऽर्थास्तन्त्रालोकप्रथमाह्निके ९६–९९ श्लोकै-र्निरूपिताः। विज्ञानभैरवे तु एकेन श्लोकेन सर्वश्रेष्ठकल्पनया भैरवशब्दस्यार्थो विशदीकृतः—

भया सर्वं रवयति सर्वदो व्यापकोऽखिले।
इति भैरवशब्दस्य सन्ततोच्चारणाच्छिवः॥ १३०॥ इति।

शिवोपाध्यायेन विवृत्याऽतीव शोभनं व्याख्यातश्च—

"भा + ऐ + र व इति चतुरक्षरसंयोगेन भैरवशब्दो निष्पद्यते। तत्र ऐकारः क्रियाशक्तिप्रतिरूपकः। अ आ + इ, ई इति योगे एकारः। अ आ अनयोः एकारयोगे वृद्धिसन्धिना ऐकारः। स च संवित्प्रकाशयोर्मिश्रित उभयवाचकोक्षरः। भाशब्दः प्रका-शार्थकः। भया समरसीभूतशक्तिशिवाभ्यां सर्वं रवयति, शब्दार्थकाद्रविधातोर्णिचि रूपम्, धातूनामनेकार्थत्वाद् विमृशति इतिभैरवः यद्वा भया ज्ञानशक्त्या ऐकारेण क्रियाशक्त्या सर्वं विमृशति। प्राणिनां जीवनं ज्ञानक्रियात्मकमेव, आभ्यां ज्ञानक्रियाशक्तिभ्यां सहयोगेन सर्वविधविमर्शनिर्वाहसौकर्यात्। स हि सर्वं ददातीति सर्वदः, सर्वानुगततया व्यापकश्चेति निरन्तरं तदुच्चारणात् परभैरवरूपं परमशिवत्वं प्राप्नुयात्" इति।

भरणरवणवमनकर्तृत्वेन सृष्टिस्थितिसंहृत्युपलक्षितपञ्चकृत्यकारी परशिवो भैरवः स्वाद्भुतमहीयःकार्यगुरुतया महान् सोऽपि त्वमेवासीति तवैवैष महिमा नान्यस्येति शक्तेरुत्कर्षस्तुतिः॥ १७७॥

इदानीं तुर्यपदाधिष्ठितां महाकाशस्थितां शक्तिं ब्रह्मादित्रिदेवजननीं स्तुवन् क्रमाख्यां तां सर्वोत्कृष्टगुणां स्तौति—

**ब्रह्मविष्णुहरमूर्तितां यतोऽ-**
**भ्येति तत्तव तुरीयमास्पदम् ।**
**व्योम यत् क्रममयी त्वदीरणा**
**धूयते लयखचक्रगा शिवे ॥१७८॥**

हे शिवे ! यत्तव तुरीयमास्पदं व्योम यतो ब्रह्मविष्णुहरमूर्तिताम् अभ्येति तत् तव तुरीयं पदम् । यत्तु तव क्रममयी आख्या या लयखचक्रगा सा साधकजनैः सातिशयं धूयते ।

ब्रह्माण्डपुराणोत्तरभागीये ललितासहस्रनामस्तोत्रे "आब्रह्मकीटजननी" इत्येकं देव्या नाम, येनेदं स्फुटं प्रतीयते ब्रह्माणमारभ्य कीटपर्यन्तस्याखिलविश्वस्य शक्तिरेव जननी जनयित्री । यच्च तुरीयं व्योम परमाकाशं तदेव तव आस्पदं स्थानं प्रतिष्ठाभूमिः । यतः सकाशाद् ब्रह्मविष्णुरुद्रा मूर्तितां प्राप्ताः सृष्टेः प्राक् ब्रह्मरूपत्वेन स्थिताः, किं वा अधिकारिपदे स्थिताः, अमुक्ता वा सृष्ट्यनन्तरं तत्तन्नाम्ना स्वस्व-निर्दिष्टकार्यरताः स्वास्तित्वं लभन्ते । सृष्ट्यादिकार्यनिर्वाहाय ब्रह्मविष्णुरुद्रानाविर्भाव्य त्वया महदुपकृतमिति भवत्याः प्रभावो वाचामगोचर इति किमु वक्तव्यम् । अथापि यत्तु अक्रमाया अपि तव क्रमरूपेणावस्थानं क्रमतया जगति समवभासनं प्रलये पुनः खचक्रे चिदाकाशे स्वरूपेण निष्कलतया स्थितिः, सा हि सर्वैर्लोकैरासाधकपामरैः सातिशयं धूयते प्रशस्यते । अक्रमाया अमूर्तया मूर्तत्वेनावभासनं लोकानुग्रहस्य परा-काष्ठा । एतावानुपकारः प्राणिनां तीव्रहितचिन्तनप्रवणायास्तवैव भवितुमर्हति, नान्यस्येति तात्पर्यम् । शिवशक्तीति नामद्वयसत्त्वेऽपि यामलतयाऽवस्थितस्य तत्त्वस्या-न्यतरभावेन कथितं सर्वमपि वर्णनमुभयस्मै बोद्धव्यम् । एवं चेदन्ते शिवे शक्तौ वा कीदृगवस्थानमिति प्रश्ने प्रत्युक्तं श्रीमदनन्तपादेन श्रीवातूलनाथसूत्रवृत्तौ नमस्कार-प्रसङ्गेन यथा—

सर्वोल्लङ्घनवृत्त्येह निर्निकेतोऽक्रमक्रमः ।
कोऽप्यनुत्तरचिद्व्योमस्वभावो जयतादजः ॥ २ ॥

अनुत्तरचिदाकाशं तयोः शिवशक्त्योः स्वभाव इति सर्वमपि वस्तु स्वस्वभावे एव पर्यन्ते तिष्ठतीति लये प्रलयकाले खचक्रे चिदाकाशमण्डले गतिः पार्यन्तिकी स्थितिरिति चिद्गगनचन्द्रिकाकर्तुर्वर्णनं परम्परामतिशेते । किञ्चापरं वचनमपि महाकाशसमावेशेन स्वभावस्थितिं द्योतयितुम्—

येनेह सर्ववृत्तीनां मध्यसंस्थोऽपि सर्वदा ।
महाव्योमसमाविष्टस्तिष्ठाम्यस्मिन्निराविलः ॥ ४ ॥

निराविलो निष्कलुषः ।

'धूञ् कम्पने' इति धातोः कम्पनमेव नार्थः, धात्वर्थनिर्णये तत्तदर्थनिर्णयस्तु प्रायोवादमनुसृत्यैव बोद्धव्यः। वस्तुगत्या तु दधात्यनेकार्थानिति धातुरिति नीत्याऽत्र धूयते प्रकर्षेण स्फुरतीति लौकैरपि सर्वोत्कृष्टतया मत्वा स्तूयते प्रणिपातपुरःसरं शिरसा उह्यते मनसाऽङ्गीकृत्य सास्मर्यत इत्यर्थोऽत्र ग्राह्यः। 'धूमहे' इति पाठस्तु नाभीष्टद इत्यपपाठ एवेति त्यज्यते ॥ १७८ ॥

इदानीं प्रणवमाहात्म्यं वर्णयन् बिन्दुगर्भनिहितसृष्टेः प्रक्रियां सङ्केतयन् शब्दतत्त्वस्वरूपां शक्तिं श्रद्धया स्तौति—

**बिन्दुगर्भनिहितं त्रिधामगं**
**तद्विशिष्टमुपरि प्रसर्पति ।**
**भेदनानिधनमों यदम्बिके**
**तत्त्वमेव परतत्त्वदर्शनम् ॥१७९॥**

हे अम्बिके ! समस्तवाच्याभेदमयसमस्तवाचकपदाक्षराभिन्नपरशक्तिरूपपरशिवात्मकमातृकामयि ! "स्वरव्यञ्जनयोः कृत्स्नलोकवेदाश्रयैव वाक्" इति नीत्या स्वरव्यञ्जनसंघट्टात्मकवर्णपदवाक्यात्मकतया समस्तलौकिकवैदिकतान्त्रिकेतिहासपुराणदर्शनसारभूते ! परावागात्मना पराभट्टारिकापरमशिवसामरस्यतया षट्त्रिंशत्तत्त्वप्रसरणहेतुपरसंविद्रूपे ! "ओमित्येकाक्षरं ब्रह्म" इति गीतोक्तनीत्या एकमखण्डं यद् ओमित्यक्षरं तत्त्वमेवासि। ॐकारस्यैव विशेषणप्रदर्शनमुखेन श्लोको व्याख्येयः। ओमित्यक्षरं विशेष्यतया गृहीत्वा सर्वाण्यपि विशेषणानि क्लीबे प्रोक्तानि। तत्र प्रपञ्चसारानुसारं प्रकाशविमर्शसमरसीभूतपरचिद्रूपतत्त्वस्य सृष्ट्युन्मुखत्वे घनीभूतत्वाद्बिन्दुरभिव्यज्यते। स च बिन्दुः शुद्धः। शुद्धचिन्मयस्य परतत्त्वस्य सर्वत्र प्रकाशात्मतया प्रसृतस्य घनीभूतत्वेन बिन्दुत्वापत्तिः प्राणिनां शुभाशुभकर्मरूपादृष्टवशादेवेति प्रामाणिकाः। स बिन्दुः कालक्रमेण त्रिधात्वं गतोऽपरबिन्दुनादबीजरूपतां प्रतिपद्य सृष्ट्युपयुक्ततां भजते। एतादृशे बिन्दौ प्रणवोऽप्यन्तर्भूत इति बिन्दोर्गर्भे निहितत्वं साधु संप्रतिपद्यते। स्थूलदृष्ट्या प्रणवे अकारोकारमकारा एव संभूय गुणसन्धिना स्वरूपं लोकप्रसिद्धं गृहीत्वा विराजन्ते। यद्यपि तत्र नादबिन्द्वोरपि संन्निवेशोऽनिवार्यतया साम्प्रदायिकैः स्वीक्रियत इति पञ्चमात्रात्मकत्वं प्रणवस्य। उक्तगीतावचनानुसारं प्रणवस्यामात्रत्वमेकाक्षरत्वमपि प्रामाणिकाभियुक्तानुरूपमेव। मूलोक्तत्रिमात्रगशब्दस्य व्याकरणं सुस्फुटम्।

ॐकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

इति वचनेनापि प्रणवस्याखण्डत्वध्वनिरेव प्रतिपाद्यते। भेदनाया भेदस्य, निधनमभावो यस्मिंस्तत्। ॐकारादेव सृष्टिरिति क्रमे तस्य मूलभूतत्वं सिद्धयत्येव।

'उपरि' इत्यस्य प्राथम्यं मूलभूतत्वमेवार्थः। तस्य परतत्त्वस्य मूलभूतस्य दर्शनं कर्तरि ल्युटा दर्शकं प्रणव एव। एवंभूतगुणविशिष्टमोङ्काराक्षरं त्वमेवेति तव महत्त्वं वागतीतं सर्वोत्कृष्टं तज्जपानुस्मरणकर्तॄणां लोकद्वयकल्याणप्रदमिति भावः। प्रणवावयवभूतस्याकारस्य "अकारो वै सर्वा वाक्" (ऐ० आ० २।३।६।), "अक्षराणामकारोऽस्मि"(भ० गी० १०।३३), "अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः" (संकेत० प०), "अवर्णस्थो यथा वर्णः स्थितः सर्वगतः प्रिये। तथाहं कथयिष्यामि। निर्णयार्थं स्फुटं तव ॥" (तन्त्रसद्भावः)

"वन्दे तामहमक्षय्यामकाराक्षररूपिणीम्।
देवीं कुलकलोल्लोलप्रोल्लसन्तीं परां शिवाम् ॥" (नित्या० १।१०)

इत्यादिश्रुतिस्मृत्यागमवचनेषु प्रशस्तिः श्रूयते। अकारोकारमकाराणामिच्छाज्ञानक्रियाशक्तित्वं समुत्प्रेक्षितं तन्त्रोपनिषदादिग्रन्थेषु। शारदातिलकानुसारं नादादेव विन्दुनादवीजादित्रिकस्याविर्भाव इति मते—

योऽसौ नादात्मकः शब्दः सर्वप्राणिष्ववस्थितः।
अधऊर्ध्वविभागेन निष्क्रियेणावतिष्ठते ॥
एको नादात्मको वर्णः सर्ववर्णविभागवान्।
सोऽनस्तमितरूपत्वादनाहत इहोदितः ॥

इत्येवं नादस्य प्रशस्तिः।

बिन्दुमधिकृत्योक्तं सौभाग्यसुधोदयेऽमृतानन्दनाथयोगिभिः—

वेदनरूपो बिन्दुः शिवशक्तिद्वितयसामरस्यतनुः।
वेदकवेद्यविभागस्वरूपसंकोचरूपसंस्कारः ॥

'विदि अवयवे' इति धातोः कर्तरि औणादिक उप्रत्यये बिन्दतीति बिन्दुरित्यर्थं विहायात्र 'विद् ज्ञाने' इत्यर्थमादाय बिन्दुशब्दसिद्धिर्योगिमते। अम्बिकाशान्ताशक्त्योः सामरस्येन ज्योतिर्मयरूपोऽपि बिन्दुस्तेनैव तृतीयप्रपञ्चे स्फुटीकृतः—

अस्याम्बिकांशभूता शक्तिः स्वांशेन शान्तया साकम्।
समरसभावं याता जाता ज्योतिर्मयी महाबिन्दुः ॥ (३।१) इति।

तदित्थमकारोकारमकारानन्तरं नादबिन्द्वोरपि प्रणवे सत्तां स्वीकृत्य पञ्चमात्रत्वं तस्य प्रथते। माण्डूक्योपनिषदि—"ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानभूतं भवद्भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव" इत्येवमात्मनो लक्षणमोङ्कारत्वेन मत्वा तदङ्गभूतवर्णेषु जाग्रत्स्वप्नसुषुप्तिविश्वतैजसप्राज्ञादिदशाः कल्पिताः।

अकारोकारयोर्दक्षिणोत्तरपक्षत्वम्, मकारस्य पुच्छत्वम्, ततोऽर्धमात्राया मस्तकत्वम्, प्रणवगुणानां पादादित्वं चोत्प्रेक्ष्य प्रणवशरीरं नादबिन्दूपनिषदि निर्दिष्टम्।

तदेवं सृष्टिक्रमे शुद्धबिन्दोर्बिन्दुनादबीजानि समुत्पाद्य तत्र सृष्टिस्थितिसंहारान् प्रकुर्वाणः प्रणवोऽद्वैतरूपेण परतत्त्वस्य दर्शकस्तद्रूपश्चेति तस्य सर्वोत्कृष्टत्वं सुस्थापितम्।

अत्रेयं पदयोजना—हे अम्बिके! यद् बिन्दुगर्भनिहितं त्रिधामगं भेदनानिधनमोमित्यक्षरं यद् विशिष्टमुपरि प्रसर्पति तत् त्वमेव परतत्त्वदर्शनम् (दर्शकम्) इति ॥१७९॥

इति श्रीकालिदासकृतौ चिद्गगनचन्द्रिकायां तृतीयो विमर्शः ॥

इदानीमज्ञाननाशपूर्वकमेवाणुत्वं विनश्यतीति तन्त्रागमसिद्धसिद्धान्तं विनेयजनोपकाराय प्रकटयन् मातरं स्तौति—

**सत्त्वजाश्रुतकलावधि त्वया**
**कालवह्निभुवना मरीचयः।**
**भक्षणाय जगतः प्रसारिता**
**यल्लयान्नृभिरणुत्वमुज्झ्यते ॥१८०॥**

निखिलेषु शास्त्रेषु अज्ञानस्य संसारकारणत्वं ज्ञानस्य च मोक्षैककारणत्वं बहुधा बहुप्रघट्टकेन वितत्य निगदितं जिज्ञासुभिर्दृष्टं द्रष्टव्यं च। तत्राज्ञानमेव संसाराङ्कुरकारणमित्यत्र सर्वसंमतिरेव प्रायशः। मलमज्ञानमित्यनर्थान्तरम्। अज्ञानमित्यत्राल्पार्थको नञ्। आत्मानात्मनोरन्यथाभिमानस्वभावमपूर्णं ज्ञानमेवाणवं मलम्, येनाबद्धोऽणुर्बद्धतया नात्मानमवबुध्यते। तच्च द्विधा—बोधे स्वातन्त्र्याभाव इत्येकम्, स्वातन्त्र्ये च बोधाभाव इति द्वितीयम्। उभयमप्येतत् स्वस्वरूपानवबोधादेव। शुद्धविद्योदयात् स्वरूपावबोधे जातेऽणुभिराणवमायीयकार्ममलान् विनाश्य स्वात्मस्वरूपं चिदानन्दमयत्वं लभ्यते।

अत्रेयं पदयोजना—हे अम्बिके! त्वया सत्त्वजाश्रुतकलावधि जगतः भक्षणाय कालवह्निभुवना मरीचयः प्रसारिताः। यदा च बौद्धज्ञानेन बौद्धमज्ञानं विनाश्य अज्ञानान्धकाराभिमानं प्रलीनं जायते, तदा नृभिरणुत्वमुज्झ्यते। अधुना व्याख्यानं पदानामावश्यकमिति कृत्वा व्याख्यायते। सत्त्वं लघु प्रकाशकमिति सांख्यकारिकावचनानुसारं सत्त्वगुणेन प्रकाशकं ज्ञानं जायते। तदेवं सत्त्वाज्जातं सत्त्वजं ज्ञानं तेनाश्रुतादृष्टाज्ञाता या अज्ञानकला तदवधि त्वया देव्या कालाग्निरुद्रभुवनवासिन्यो मरीचयस्तीक्ष्णविनाशिकाः शक्तय एव मरीचितयोपमिता जगतो लोकस्य संसारस्य वा भक्षणाय विनाशाय अभिमानप्रशमाय पूर्वोक्ता विघ्नकारिण्यो मरीच्याख्याः शक्तयः प्रसारिता व्यापकरूपेण सर्वत्र नियोजिताः। यासां विरोधिमरीचीनां लयात्-प्रशमात् स्वरूपज्ञानोपलब्ध्या, नृभिः चेतनाणुभिः, अणुत्वमाणवमलमुज्झ्यते त्यज्यते। यद्यपि "शिव एव गृहीतपशुभावः" इति परमार्थसारोक्तदिशा शिवः स्वयमेव स्वेच्छया करणेन प्राणिनामनुजिघृक्षया चिक्रीडिषया स्वरूपगोपनधिया वा स्वीयं नैसर्गिकं विभुत्वमपहाय गोपयित्वा वा स्वेच्छावकल्पितसंकोचं गृहीत्वाऽणुत्वं गृह-

णाति। तेनाणुत्वस्य शिवसंकल्पजन्यत्वेन तन्निवृत्तिरपि शक्तिपातापरपर्यायानुग्रह-कृत्येनैव जनिष्यते, नेतरेण जपव्रतोपवासादिचर्याशतेन, अनुग्रहस्याहेतुकत्वात्। प्रयत्नशतेनापि शिवत्वं नावाप्यते, तथापि उपायव्रातस्य नैरर्थक्यं न शङ्कनीयम्, चित्त-शुद्धिद्वाराऽऽधारस्य पावनाय तदावश्यकत्वात्। उपायजालेन चित्तनैर्मल्यं जन्यते, शुद्धान्तःकरणानां दीक्षादिनोपदिष्टस्य पौरुषज्ञानस्य द्रागेव प्रभावोत्पादकत्वात्। प्राप्तपौरुषज्ञानस्यापि बौद्धाज्ञानसत्त्वे स्वात्मावभासाप्रयोजकत्वात्। अतश्चित्प्रकाशा-वाप्तये बौद्धाज्ञानविलयः परमावश्यकः। किञ्च, अत्र शैवशाक्तदर्शने शिवो द्वारी, शक्तिर्द्वारम्। शक्तिद्वारकतयैव शिवज्ञानं लब्धुं शक्यते, अतः शक्तिं शरणीकृत्यैव निराविलः शिवः सम्यक् समधिगन्तुं शक्यो नान्यथा। तदुक्तमभियुक्तैः—स्वरूपो-पगमे संविदेव नः शाक्तानां शैवानां वा शरणमिति। अज्ञानस्य शुद्धविद्योदया-ल्लयेनाणुत्वनिवृत्तिपूर्वकमात्मसंविदुपलब्धुमर्हेति पद्यार्थसारसंक्षेपः॥ १८०॥

इदानीं वाच्यवाचकभेदेन प्रसृतस्य षडध्वनः स्वरूपं प्रकाशयितुं तज्ज्ञानेन विनेयजनेषु शास्त्रीयपदार्थं संस्तावयितुं चोपक्रमते—

**वर्णमन्त्रपदजृम्भया समं**
**याः कलास्तदनु तत्त्वमण्डलम्।**
**यानि तत्र भुवनानि चण्डिके**
**तत्र कृत्स्नमपि गृह्यते स्थितौ॥१८१॥**

हे चण्डिके! दुष्टदमनशीले साधुजनरक्षणस्वभावे च! वर्णः पदं मन्त्र इति वाचकोऽध्वा, कला तत्त्वं भुवनानीति वाच्योऽध्वा। वर्णाः पञ्चाशत्। पदानि एकाशीतिः मन्त्रा एकादश। कला पञ्च—निवृत्तिः, प्रतिष्ठा, विद्या, शान्ता, शान्त्यतीता च। तत्त्वानि शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या, माया, कला, विद्या, रागः, कालः, नियतिरित्येकादश विशिष्टानि, अन्यानि च पुरुषप्रकृत्यादीति पृथिव्यन्तानि साङ्ख्य-दर्शनवत् पञ्चविंशतिरित्याहत्य षट्त्रिंशत्। भुवनानि २२२ सङ्ख्याकानि शैवशाक्तागम-ग्रन्थेषु वर्णितानि। तत्सर्वं तत्र त्वयि सम्पूर्णमपि स्थितौ सृष्टिस्थितिकाले गृह्यते दृश्यते ज्ञायते वा। अध्वषट्कात्मकं जगद् बन्धनकारणम्। यदुक्तं जयरथेन विवेके—"अध्वा बन्धस्य कारणम्" इति। बन्धकारणानि याथात्म्येनाज्ञात्वा ततो मुक्त्युपायः कथमपि चिन्तयितुं न पार्यते, अध्वविनिष्क्रान्तस्यैव शिवत्वप्राप्तिस्मरणात्। अद्यत इत्यध्वशब्दव्युत्पत्त्या सर्वोऽप्यध्वा प्राप्तशक्तिविक्रमेण साधकेनात्मसात्कर्तुं शक्यते। अध्वनः स्वात्मीकारपूर्वकत्वेनैवाध्वविनिष्क्रान्तिः सुलभा। षडध्वसु याथात्म्येन ज्ञातेषु ज्ञातव्यं नावशिष्यते। तदायत्तीकारे तु उपेयप्राप्तिराञ्जस्येन जाजायत इति शक्त्युपासनया तान् सम्यगवबुद्ध्य इदमित्थंतया चिद्घनस्वात्मतत्त्वप्राप्तेर्विनिश्चयो भवति॥१८१॥

तत्र सम्पूर्णमपि षडध्वमण्डलं शक्तिस्वरूपे स्वाभिन्नतयाऽवस्थितं स्थितिकाले च बहिः सृष्टौ समुपलभ्यत इत्युक्तं पूर्वस्मिन् पद्ये। इदानीं शक्तिसंबद्धाद्वयविमर्शेन समुपासिता शक्तिर्योगिजनैर्निरन्तरं स्वात्माभिन्नतया भाव्यते। योगिनोऽपि षडध्वमण्डलं हृदि निधाय निरावरणयुक्त्या स्वात्मैव निरावृतचिद्रूपः स्वेच्छया बाह्याभ्यन्तररूपेण स्फुरतोति स्वाभिन्नसमावेशभावनया ध्यायन्तः संतुष्यन्तीति विमर्शापरपर्यायेच्छाशक्तेर्माहात्म्यावभासनं कुर्वन् शक्तिवैभवं भङ्गिभेदेन वर्णयितुं प्रस्तौति—

त्वं निरावणयुक्तिमास्थितै-
स्तावकाद्वयविमर्शसाधिता ।
अन्तराहितषडध्वमण्डपै-
र्योगिभिर्जननि शश्वदीड्यसे ॥१८२॥

हे जननि ! जनयति स्वस्वातन्त्र्येण प्राणिनां शुभाशुभकर्मप्रक्षालनधिया जनित्वा उत्पाद्य च स्वामिलषितकर्मणि नियुज्य तद्धिताय प्रेरयति तत्संबोधने। त्वं स्वीयाद्वैतभावनया स्वात्मोन्मुखं प्रति दृढीभूता, युगपन्निराकृतिरपि विश्वाकृतिः, अनुक्षणमद्वैतभावभावितत्वात्। आवरणं लोकव्यवहारे भोजनाच्छादनादौ महदुपकारकम्, किन्तु ज्ञानार्जनोपासनादिविधौ निरावृतस्य प्राशस्त्यकम्। तच्च युक्त्यैव निरावृतचैतन्यभावनादाढर्येन स्थिरीकर्तुं पार्यते।

क्रोधलोभमोहमदमात्सर्यादिचित्तक्षोभकहेतूनां निग्रहमकृत्वा युक्तयुञ्जानादिचित्तदशा नाधिगन्तुं शक्यन्ते। द्वन्द्वक्षोभातीता हि बुद्धिर्योगकर्मणि प्रभवति। भोगैश्वर्यप्रसक्ता सा आञ्जस्येन योगपथादपहर्तुं शक्यत इति सततनिरावृतचैतन्यध्यानप्रवणता योगिनामपेक्षिता। अतो युक्त्या निरावृतचैतन्ये देहेन्द्रियाद्यनात्मवस्तुभ्यश्चित्तं निवार्य दृढामास्थामास्थाय सततोद्युक्तैरन्तरात्मनि आहितं सर्वतः प्रतिसंहृत्य संस्थापितं षडध्वरूपं मण्डपमिव मण्डपमाश्रयस्थानं यैस्तैः। एकैकस्यापि तत्त्वस्य यथा षट्त्रिंशत्तत्त्वरूपता स्वीकृता अभियुक्तैस्तथैवाध्वषट्केऽपि षडध्वसु एकैकवस्तुनोऽपि दृढात्मप्रतिपत्त्या सर्वात्मप्रतिपत्तिः सौकर्येण प्राप्यते। यदि षण्णामेव प्रतिपत्तिदाढर्यं लब्धं किमपरं सौभाग्यमिति हेतोर्योगिभिः षडध्वानः स्वात्मन्यानीय चित्तैकाग्र्येण मुहुर्मुहुर्ध्यायिते। शाश्वतमीड्यसेऽनवरतं स्तूयसे। स्तुत्यैव संप्रीणिता माता द्रुतमनुग्रहेणाऽस्मानात्मसात्कृत्य स्वात्माभेदेन स्थापयिष्यतीति। तदुक्तं नीतिनिपुणैः—"सेवाधर्मः परमगहनो योगिनामप्यगम्यः" इति ॥१८२॥

इदानीं मूलाधाराद् द्वादशान्तं यावत्प्रसृतं जगत् स्वस्वरूपे चित्प्रकाशमये संस्थाप्य सर्वमपि प्राणिसमूहं स्वीयचिदानन्दात्मके धाम्नि नीत्वा सुखिनं शुद्धं च कुर्विति साधकप्रार्थनां सभाजयन् शिवां स्तौति—

मूलतः प्रभृति पावकाश्रयं
द्वादशान्तनिधनं शिवे जगत्।
वाहृतत्प्रथनयोर्निषेदुषी
मज्जयस्व तव धाम्नि चित्पदे ॥१८३॥

हे शिवे ! मूलतः प्रभृति पावकाश्रयं द्वादशान्तं जगद् वाहृतत्प्रथनयोर्निषेदुषी (त्वम्) चित्पदे तव धाम्नि मज्जयस्वेति पदयोजना।

मूलाधाराद् द्वादशान्तं यावच्चक्राणां द्वादशकं जन्माग्र-मूल-कन्द-नाभि-हृत्-कण्ठ-तालु-भ्रूमध्य-ललाट-ब्रह्मरन्ध्र-शक्ति-व्यापिनीत्यन्तं वर्तते। षण्ढस्वरान् चतुरः ऋ ॠ ऌ ॡ वर्जयित्वा शेषस्वरानकारादिविसर्गान्तान् संकलय्य द्वादशस्वराः कुत्रचित् कुत्रचित् प्रोक्तद्वादशचक्रेषु ध्यातव्या इत्युपदिष्टम्। कुत्रचित् प्रणवावयवभूताक्षरत्रयं गृहीत्वा बिन्दु-अर्धचन्द्र-रोधिनी-नाद नादान्त-शक्ति-व्यापिका-समना-उन्मना इत्यन्ता द्वादशवर्णा चक्रद्वादशकपदेन गृह्यन्ते। क्वचित् मूलाधार-स्वाधिष्ठान-मणिपूर-अनाहत-विशुद्ध-आज्ञा इति भ्रूमध्यान्तस्थषट्चक्राणि गृहीत्वा तत ऊर्ध्वस्थ-बिन्दु-कला-निरोधिका-अर्धेन्दु-नाद-नादान्त-उन्मनी-विष्णुवक्त्र-ध्रुवमण्डल-शिवेत्यन्तं षोडशाधारचक्रं परिकल्प्यते। अस्मिन् षोडशचक्रात्मके कल्पे यः शिवः स सहस्रारचक्रनाम्ना ब्रह्मरन्ध्रनाम्ना वा आकार्यते। शिवादूर्ध्वे परमशिवस्थानं यत्र शिवशक्तियुगलं युगनद्धभावेन सामरस्यापन्नं विराजते। तत्स्थानं परकन्दनाम्ना स्मर्यते, यत्र चन्द्रमसः षोडशकला नित्योदिताः शुद्धप्रकाशदात्र्यो विलसन्ति। तच्चक्रस्थं शिवमर्थात् परमशिवं हंसनाम्ना द्वादशकलात्मकसूर्यनाम्ना वा संस्मरन्ति साधकजनाः। केचन तमेव देवं परमहंसनाम्नाऽपि भावनातिरेकेण वदन्ति। हंसपदस्थितहसवर्णयोः पुरुषप्रकृतिरूपत्वं कल्पयित्वा पुंप्रकृत्यात्मकं जगच्चराचरात्मकमित्यपि समामनन्ति भावुकाः। किमधिकं सहस्रार्णिकायाः सर्वदेवस्थानत्वं वर्ण्यते तत्तत्सम्प्रदायभक्तिभावनारसिकैः। यथोक्तं श्रीतत्त्वचिन्तामणिधृतषट्चक्रनिरूपणे—

शिवस्थानं शैवाः परमपुरुषं वैष्णवगणा
लपन्तीति प्रायो हरिहरपदं केचिदपरे।
परं देव्या देवीचरणयुगलाम्भोजरसिका
मुनीन्द्रा अप्यन्ये प्रकृतिपुरुषस्थानममलम् ॥४४॥ इति।

गुरुपादुकाध्यानप्रसङ्गेऽपि द्वादशवर्णात्मकं चक्रं स्मर्यते। एतेन द्वादशान्त एव चक्राणामन्तस्थानं परम्परया चिरादनुवर्त्यते। षट्चक्रेष्वेव पञ्चाशद् वर्णा उपयुक्ताः, तत ऊर्ध्वं बिन्द्वादिवर्णाः समाम्नाताश्चक्ररूपाः। एतेषां बिन्द्वर्धचन्द्ररोधिनीनां मध्ये मध्ये तत्त्वद्वयान्तरे शून्यस्थानं प्रकल्प्य पञ्चशून्यस्थानानि कल्प्यन्ते। एतानि शून्यस्थानानि रिक्ततयाऽऽकाशपदवाच्यानि भवेयुरिति संभाव्यते। हृदयादेव प्राणसंचारः

प्रतीयते लोकैरनुभूयते च। मूलाधारेऽधःकुण्डलिनी सार्धत्रिवलयाकारा प्रसुप्तभुजगीव वर्तते। हुङ्कारेण सा उत्थाप्योर्ध्वं नीयते। मध्ये हृदयदेशे प्राणापानसमानोदानव्यानादिपञ्चवायूनां संगमः। यद्यपि प्राणादयः कार्यपरतया कार्योपयोगितया च तत्तत्कार्यनिर्वाहाय समस्ते शरीरे गतागतक्रमं भजमाना विभिन्नदेशावस्थिताः स्वस्वनिर्दिष्टकार्याणि विदधति, तथापि वाहतया तेषां समवायो हृद्देशेऽङ्गीक्रियत इति क्रमः। यथाऽग्निः सर्वमशुद्धानपेक्षितं भस्मसात्कृत्वा शुद्धिं विधत्तेऽतः पावयतीति पवित्रकरणतया पावकसंज्ञयाऽभिधीयते लोके, तन्नाम्ना परिचीयते च, तथैव वायुरपि पूर्वापरवस्तूनि विनिमयक्रमेण स्थानान्तरितं कृत्वा दुर्गन्धमपसार्य झटित्येव सौरभं प्रसारयतीति सोऽपि पावकपदेन स्मर्यते। ततः क्रमश उत्थिता शक्तिर्हृदयाश्रिता सती द्वादशान्तनिधनं द्वादशान्तो निधनमन्तो यस्मिंस्तत् तथाभूतं जगत्। वस्तुगत्या मूलाधाराद् द्वादशान्तपर्यन्तमेव जगत्स्थितिः सम्प्रवर्तते। अत ऊर्ध्वं जगदतीतं वर्त्म योगिजनगम्यं लभ्यं वा चिरादनुश्रियते। वाहाः प्राणापानादिपञ्चवायवः, वाहाश्च तत्प्रथनं चेति वाहतत्प्रथने तयोः। "प्राक् शक्तिः प्राणे परिणता" इति नीत्या शक्तेः प्रथमाविर्भावोऽवरोहक्रमे प्राणा एवेति तन्त्रागमशास्त्राभियुक्ताः। वाहः शक्तेः सकाशात् स्वरूपं लभते, अतः संविच्छक्तिरेव तत्प्रथनस्थानम्। तत्र निषेदुषी सुखमुपविष्टा त्वं निखिलं जगदपि तव धाम्नि चितः पदे प्रकाशविच्छुरितविमर्शाख्ये स्वे महिम्नि मज्जयस्व शुद्धं कारय देहेन्द्रियबुद्धिप्राणाद्यनात्मभावाद् विनिवर्त्य शुद्धात्मचित्प्रकाशे समुन्नीय स्वाभिन्नतया स्वक्रोडे संस्थाप्य विशुद्धात्मभावनया जीवनाय प्रबोधय। 'टुमस्जो शुद्धौ' इति तुदादिगणपठितो धातुः परस्मैपदे प्रयुज्यमानोऽप्यत्रात्मनेपदे प्रयुक्तः। तत्र "कवयो बहुलं प्रयुञ्जते" इतिनीत्या समाधेयम्। विशिष्टभावनापथमनुसरन् हि कविर्विद्वद्भिः क्षन्तव्यः। किञ्च, वैदिकप्रयोगे पदभेदेन प्रयुक्ताः क्रियाप्रयोगा यथा छन्दोवत् सूत्राणि भवन्तीत्यादिमान्यतया सह्या गण्यन्ते, तथैवात्रापि व्यवहरणीयम्। "भूयान् खलु शब्दस्य प्रयोगविषयः" इति पातञ्जलोक्त्या सर्वं कृत्स्नतयाऽज्ञात्वा परस्मैपदमेवेत्याग्रहो दुराग्रहपदमेवाञ्चेदिति केचित्।

प्रणवायवयाक्षरत्रयं जाग्रत्स्वप्नसुषुप्तिपदेनाप्यभिधीयते। सुषुप्तेः स्थानं भ्रूमध्यस्थितो बिन्दुरिति हृल्लेखापरपर्यायः। चैतन्याभिव्यक्तिहेतुर्नादस्तुरीयः। अर्धचन्द्ररोधिनी-नादात्मके त्रिके तुर्यभावनाऽऽस्थेया। तुर्यातीतदशा परमानन्दरूपा। सा नादनादान्त-शक्ति-समना-व्यापिनी-मनोन्मनीपर्यन्तमभिव्याप्य तिष्ठति। तदनन्तरं न कापि दशोन्मिषति। अमात्र-समात्र-भेदेन प्रणवे द्विविधा भावनेति पूर्वमुक्तम्। अत्र अमात्रशिवस्वरूपात् चित्कलांशो बिन्दुस्तटस्थस्थिरीभूतां मात्रां समाहन्ति। इममाघातं सोढ्वा योगी योगभूमिरूपां योगानुभूतिं निर्मांति। मात्रा विभक्ताऽर्धमात्रां जनयति। मात्राऽर्धमात्रयोः सन्धिरत्यन्तं गूढः। स्थूलविश्वानुभूतिश्चित्तस्य यस्यां मात्रायां जायते, सैवैकमात्रेत्युच्यते। स्थूला लौकिकी चानुभूतिरेकमात्रायां भवति। मात्राधिक्ये जाड्यममिवर्धते। मनो हि नैकान्ततश्चेतनं बोधात्मकं वा कृत्स्नतोऽपि तु तत्रावचेतनांशोऽपि। स्मृतौ भासमानः शब्दार्थराशिरनुभूतेः परिणामः। एषोऽनुभवो मनस एका-

ग्रताजन्यः। अतः शब्दस्मृतिवेलायां शब्दार्थोऽपि हृद्यवभासते। चञ्चलत्वान्मनस ऐक-रूप्यं नाशास्यते। परिणामतो गुरुकृपया चित्ते शक्तिपातानन्तरमर्द्धमात्रानुगमनं सुसं-भवमेव। चिद्रश्मिसंपातसमकालमेव मात्रासु भेदक्रमः प्रक्रमते। मात्रान्यूनत्ये चैतन्या-वभासः सम्प्रवर्धते। लौकिकं कृत्स्नं जगद् एकस्यामेव मात्रायामुपसंहृत्यावतिष्ठते। एकमात्रायाः क्षेत्रं सुषुप्तिपर्यन्तमेव। तत ऊर्ध्वं तुर्यतुर्यातीतयोरित्यर्धमात्राया ज्ञानं योगिनामेव न लौकिकानाम्। मनसो मात्राप्रसरणक्रमेण साकं न्यूनातिन्यूनक्रममञ्चति चित्प्रकाशः। तत्र क्रमेण प्रवृद्धः समुज्वलतरश्च भवति। बिन्दुरेव मात्रयाऽमात्र-दिशमुन्मुखीकरोतीति स एवामात्रदिक्सूचकः। अर्धमात्रास्थाने त्रिपुटी ज्ञातृज्ञान-ज्ञेयानामेकाकारा निराश्रया च। मात्राभङ्गारम्भादेव अर्धमात्राया उदयः। अत्र यज्ज्यो-तिर्मयं रिक्तं स्थानं तदेव शून्यम्। बिन्दोः सहस्रारानुकूलमार्गे कपालप्रदेशे यश्चन्द्रो दृश्यते, स एवार्धचन्द्रः। तत्र सौम्यसौराग्नेयी त्रिविधा वर्णमाला चिद्बीजरूपतया सह-स्रारपद्मदले प्रकाशते। अर्धचन्द्रादूर्ध्वं ब्रह्मरन्ध्रादधस्त्रिकोणे रोधिन्याः स्थानम्। ब्रह्म-पञ्चकं ब्रह्मविष्णुरुद्रेश्वरसदाशिवम्। ऊर्ध्वगतिनिर्वतिका रोधिन्येव। रोधिन्या ऊर्ध्वं बिन्दोर्नाधिकारः। एतदनन्तरं नादस्थानं ब्रह्मरन्ध्रस्य द्वारम्। ततः क्रमेण नादान्त-शक्त्योः स्थितिः। अनन्तरं व्यापिन्या अधिकारः। समनोन्मन्यौ क्रमेऽस्मिन्नेव वर्तेते। अतः परं शून्यषट्कमवस्थापञ्चकं विषुवत्सप्तकमतीत्य विश्वस्य परममानन्दस्वरूपं परमशिवस्य धाम। एतदेव चिद्धामपदेनात्र स्मर्यते। अत्र प्राप्तः साधकः पाशविकल्पं निर्धूय शुद्धात्मभावस्थित्या परप्रकाशविमर्शसामरस्यप्राप्त्या शश्वच्छान्ति प्राप्नोतीति प्रस्तुतश्लोकस्य निगूढोऽभिप्रायः॥ १८३॥

अथेदानीं चिदाकाशं परमाकाशं वा प्राप्य जगद्विकल्पजालं विनाश्य संसार-वासनया निःशेषं निवृत्तो भवति साधक इति वर्णयित्वा कस्यचिदाकाशप्राप्त्यधिकार इति वर्णयितुं मातृस्तुतिव्याजेन चिदाकाशं परिचाययितुं प्रस्तौति—

**ये निरावरणयुक्तिशालिन-**
**स्तान् प्रति स्फुरति तत्परं नभः।**
**यत्र मेयमितिमातृघस्मरे**
**वासनापि न जगद्विभेदगा ॥१८४॥**

पूर्वं निरावरणयुक्तिमास्थाय योगिजना निरन्तरं देवीं स्तुवन्तीति महता समारम्भेण प्रोक्तप्रायम्। अत्र तादृशयुक्तिभिर्निरन्तरस्वात्मस्वरूपध्यायिन एव चिदाकाशदर्शनलब्धसामर्थ्यबलाज्जगति भेददर्शनं सर्वथा विहाय मातृमेयमिति-साधनात्मकं विकल्पभावं रोद्धुं क्षमा इति निरावृतचैतन्यसततस्मृतिरेव स्वात्माधिगम-हेतुरिति वक्तुं प्रतिजानीते। द्वैतभावं विलाप्यान्तःप्रबोधवान् बहिर्वृत्तिपरोऽपि अन्तर्मुखः। सर्वभावेषु स्वात्मभावनया वर्तनं निरावरणयुक्तिः। श्रुतिः, स्वानुभूतिः, युक्तिश्चेति त्रय उपाया लोकयात्रानिर्वाहस्य। श्रुतिरत्र शिवशक्तिप्रोक्तप्रश्नप्रति-

प्रश्नरूपं तन्त्रागमवाङ्मयमेव। "सर्वो विकल्पः संसारः" इति स्थित्या विकल्पमूलं संसारं परित्यज्य निर्विकल्परूपे स्वात्मशिवे तदभिन्नशक्तौ वा चित्तस्य सर्वदा युक्त्या संस्थापनं निरावरणयुक्तिः। ये हि साधका निरावरणयुक्त्या शालन्ते शोभन्ते, तान् प्रति तेषां समक्षं तस्माद् भूताकाशाद् भूतभौतिकसंसारात् परम् उत्तीर्णं सर्वोत्कृष्टं च नभः चिदाकाशः स्फुरति भासते। मेयं दृश्यम्, मितिर्दृक्, माता द्रष्टा प्रमाता, तेषां घस्मरे भक्षके यत्र चिन्नभसि जगद्विभेदगा विद्याविद्यादिभावाभावाद्यनात्मदेहेन्द्रियादिषु विरुद्धभेदावबोधिका वासनाऽपि अनाद्यविद्यारूपसंकारोऽपि, न तिष्ठेद् भासेत वा। स्वयं स्वस्य विश्वात्मकत्वं ज्ञानवतो विकल्पानां सद्भावेऽपि स्वात्मैव सर्वप्राणिनामेको महेश्वरो देव इति विश्वरूपोऽहमिदमित्यखण्डानन्दनिर्भरस्य तु चिदानन्दघने स्वात्मनि न कदाप्युपेक्षेति तस्य नित्यं प्रबोधोदयान्न कापि क्षतिः। अत एवोक्तमीश्वरप्रत्यभिज्ञायां भट्टोत्पलेन—

सर्वो ममायं विभव इत्येवं परिजानतः।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता॥ १२॥ इति।

विकल्पसृष्टिरपि स्वातन्त्र्यमूलको विभव एवेति भावः॥ १८४॥

अथेदानीं शक्तिशक्तिमतोर्व्यवहारवैषम्यं प्रदर्शयन् शक्तौ चण्डित्वमभिलक्ष्य सोपालम्भव्याजेन मातरं स्तौति—

**वृत्तिसंहरणमेव मातरि**
**व्यज्यते न खलु संस्तुतिक्षयः।**
**तद्द्वयं च तव धाम्नि संभृतं**
**चण्डि केयमिति चण्डिमा त्वयि॥१८५॥**

हे चण्डि! वृत्तिसंहरणमेव मातरि (शक्तिमति) व्यज्यते, न तु संस्तुति-(परिचय)क्षयो वृत्तिसंहारसंस्मृतिक्षयौ उभावेव तव धाम्नि (तेजसि) संभृताविति का इयं चण्डिमा त्वयि, इति नावगम्यते न वोढुं पार्यंत इति पदयोजना।

अयं भावः—'चडि कोपे' इति भौवादिकाच्चण्डशब्दः कोपार्थको भावार्थकेऽचि कर्तर्यचि वा निष्पद्यते। पुरुषश्चण्डः, स्त्री चेच्चण्डीति लोके व्यवहारः, तत्संबोधने हे कोपस्वभावे! मर्यादोल्लङ्घनं दृष्ट्वा कोपस्वभावो यस्याः। मातरि प्रमातरि द्रष्टरि (शक्तिमति) वृत्तीनां शक्तीनामिच्छाज्ञानक्रियाणाम्, वस्तुतस्तु सर्वशक्तीनामुपलक्षणभूता इमास्तिस्रः। शक्तयः सन्ति अस्य अस्मिन् वेति तदस्यास्त्यस्मिन्निति मतुपि शक्तिमच्छब्दो निष्पद्यते। शक्तिमति सर्वा अपि शक्तयो नामरूपे विहाय विलीयन्त इति तासां संहार एव प्रकटतया प्रतीयते। संस्तुतेः परिचयस्य तद्व्यक्तित्वस्य तु क्षयो विनाशो लोपो वा नैव भवितुं शक्यते, स्वोपस्थित्या शक्तिमति तत्तद्गुणधर्माद्युत्पादनात्। यथा सर्वा अपि नद्यः समुद्रं संगत्य समुद्रनाम्नैवाभिधीयन्ते, न तु तत्तन्नामाकारादिप्राक्तनसंस्तवस्य परिचयस्य वा तत्र संभवः। तव धाम्नि शक्तितेजसि तु

तद्द्वयं नामरूपात्मकमस्तित्वं परिचयात्मकतद्व्यक्तित्वरूपं चास्तित्वमिति एतद्द्वयं संभृतं सुरक्षितं सञ्चितं चास्तीति । यथा नदीषु नदीनां संगमेऽपि प्रधाननदीनाम्नाऽपि संकेते नदीनां स्त्रीत्वाभिव्यक्तिः सुरक्षितैव, परिचयोऽपि सुस्थ एवेत्युभयथा शक्तौ शक्तीनां समाहारे न नामरूपव्यक्तित्वादीनां क्षतिरिति । शक्तिमति शक्तीनां संगमे शक्तिमन्नाम्नैव व्यवहारे शक्तीनां नामरूपादयो चिराय विलीयन्त एव, शक्तौ तु परिचयाभावः शक्तिसंहार इत्युभावप्यक्षुण्णतया तिष्ठत इति शक्तिमता सह शक्ति-व्यवहारः कठिनः प्रतिक्रियात्मकतया आग्रहग्रहिलतयाऽमनोज्ञ एवेति वक्तुं पार्यते। अत एतादृशी कठोरता त्वयि कथं कुतः समागतेति जिज्ञासाऽनिवार्यतयोदेति । शक्ति-मता सह शक्तिभिः सौहार्देन व्यवहरणीयमित्येव शीलसद्भाववतां समुदाचारः । परस्परं शक्तीनां समवायेऽपि शक्तित्वेन साजात्यप्रयुक्तसंग्रहसद्भावान्न संस्तुतिविनाश इति शक्तिपक्षे विशिष्टं प्रावल्यम् । शक्तिमति संन्निहिता शक्तिः शक्तिमत्त्वेना-भिहिता भवेत्, न तु शक्तित्वेनेति शक्तिमत्पक्षे शक्तिव्यक्तित्वविनाशदोषः सुस्थितः । शक्तिसंहारदोषस्तु ततोऽपि पूर्वतया समुपजाततया सुप्ररूढ इति शक्तिमत्पक्षे द्वावपि अपराधसन्निभौ दोषावपरिहर्यतया समुपस्थितौ । परस्परं शक्तीनां संगमे न संहारोऽपि तु समुपचयतया गुणाधायकत्वमेव । शक्त्या शक्तिसंगमे शक्तित्वं नापहृतमिति द्वितीय-दोषोऽपि नागत इति शक्तिपक्षः सर्वथा लोकापवादनिर्दुष्टतया प्रशस्त इति शक्तिकृतः शक्तिमति दोषद्वयोपनिपातः क्रूरकर्मतयैवाभिधेय इति शक्तेश्चण्डत्वं चण्डित्वं वा सर्वथाऽऽक्षेपयोग्यतामर्हतीति कविकल्पना सूपपादा, कविकर्मनैपुण्यद्योतिका, रवेरप्य-शक्यगन्तव्ये कवीनां प्रवेश इति प्रेक्षावदुत्प्रेक्षिततथ्यग्राहिकैव । अन्यच्च, गाङ्गोऽप्यपां प्रवाहः समुद्रं प्राप्य मधुरोऽपि क्षारो भवतीति शक्तिमत्पक्षेऽपरोऽप्ययं दोषो दुःशकोद्धार इत्यपि बहुश्रुतैर्विभावनीय एव । उग्रतायां क्रोधार्थे वा प्रयुक्तः स्त्रीलिङ्गार्थकश्चण्डि-माशब्दः । इमनिच्प्रत्ययान्तस्तु पुंलिङ्गे प्रयुज्यते । "जनिमृङ्भ्यामिमनिन्" इति सूत्रे आकृतिगणस्वीकारे टावन्तः कथञ्चिदुन्नेयः । उक्तदोषजातेन शक्तिमत्पक्षं प्रदूष्य यच्चण्डित्वं त्वया प्रकटीकृतम्, तत्तव स्वेच्छास्वातन्त्र्येण जगदात्मना स्फुरितायाः करुणारससागराया अनुरूपं शोभनं नास्तीति साश्चर्यं सानुतापं सहामह इति ग्रन्थकर्तु-राशयः ॥ १८५ ॥

इदानीं विविधाक्षराङ्कमययन्त्रैर्देवीपूजनपरम्परां लोकेऽनादिकालात् समागतां समर्थयन् तत्तच्छक्तिकुसुमैः काम्यमनोरथसिद्धये प्रचलितयागक्रमं तन्त्रमन्त्रानुगतं शिष्यशिक्षायै निबध्नन् मातरं स्तौति—

भूतयन्त्रनिलयास्तवाम्बिके
शक्तयोऽक्षरकवृन्दमास्थिताः ।
त्वत्पदं हि विषयामृतासवैः
स्वस्ववृत्तिकुसुमैर्यजन्त्यमूः ॥१८६॥

हे अम्बिके ! अक्षरकवृन्दमास्थिता भूतयन्त्रनिलयास्तव अमूः शक्तयो विषयामृतासवैः स्वस्ववृत्तिकुसुमैस्त्वत्पदं यजन्ति हीति पदयोजना ।

हे मातृकास्वरूपे ! अक्षरपदमङ्कोपलक्षणम् । अक्षरमेवाक्षरकं स्वार्थे कन् । यथा बिन्दुरेव प्रसरणशीलरेखया लिपिः, वर्णः, अक्षरं च संपद्यते, तथैवाङ्का अपि बिन्दोरुच्छूनस्वभावतया लिख्यन्त इति शक्तेः प्रतिरूपका वर्णवत्पूज्यतया दृश्यन्ते । अक्षराङ्कसमूहमाश्रित्यैव यन्त्राणि मन्त्रा वा तत्तत्कार्यपरतया लिखिता देवदेवीसमावेशभावनया ध्याता अर्चिता वाऽभीष्टमनोरथसम्पादका लोके मन्यन्ते । अक्षराङ्कवृन्दमास्थायैव यन्त्रलेखनविधिः प्रसृतः । भूतमयानि यन्त्राणि निलयो यासां ताः । प्रायो हि लोके मृत्तिकापाषाणवस्त्रकाष्ठलोहताम्ररजतसुवर्णान्याधारत्वेन यन्त्रार्थं स्वीक्रियन्ते आराधकैः । तत्तद्वस्तुनिर्मितयन्त्राधारस्य निर्देशोऽपि तत्तद्ग्रन्थेषु निर्दिष्टोऽस्ति कामनापरत्वेन त्वरितकार्यसिद्धये च । भूतमययन्त्रेष्वेवावाहितास्तत्तत्कार्यसाधका देवा देवता वा यन्त्राधारानेव निलयत्वेनाङ्गीकुर्वन्ति । एवंभूतास्तव काल्याः शक्तयो विषया रूपरसगन्धादय एवामृतं तत्प्रतिनिधिरूपा आसवा रसास्तैः । पृथक् पृथक् कालीतारापीताम्बराश्यामाछिन्नमस्ताधूमावतीप्रभृतिशक्तीनां कुसुमानि तत्प्रियत्वेनार्चायामपेक्षितानीति कृत्वा तन्त्रागमग्रन्थेषु निर्दिष्टानि । निर्दिष्टैरेवोपचारैस्तास्ताः शक्तयः समभ्यर्चिता द्राक् कार्याणि साधयन्ति, अभीष्टानि च प्रयच्छन्ति । तद्विरुद्धाचरणेन कुपिताः कार्यं नाशयन्त्यपि । यथोक्तम्—"न च मन्त्रसमो रिपुः" इति । तव पदं त्वत्पदम्, प्रत्ययोत्तरपदयोश्चेत्युत्तरपदसत्त्वे त्वदादेशः, यजन्ति देवदेव्यौ पूजयन्ति, प्रगुणितोपचारैः संपूज्य देवदेवीसंगमलाभादभीष्टं लभन्त इति तवार्चया किं किं न सिद्ध्यति तवोपासकानामिति । अमूः प्रसिद्धास्तव शक्तय इति योजनीयम् । यदि तव शक्तयोऽपि त्वामाराध्यैव लोकेऽभीष्टदात्र्यः सम्पद्यन्ते, तर्हि त्वामनाराध्य कार्यसाधनाभिलाषुकाः कथं सिद्धिमेष्यन्तीति तवाराधनमेव इहामुत्रलोकोपकारकमिति ग्रन्थप्रणेतुराचार्यस्य भक्तिनिष्ठाशिरोमणेः प्रस्तावः ॥ १८६ ॥

इदानीं खेचरी-गोचरी-दिक्चरी-भूचरी-शून्यान्तं शक्तिपञ्चकं भूतषट्कं च विमर्शशक्तितेजसि संशोध्य शुद्धात्मानः शक्तयः शिवसायुज्यलाभाय स्पृहयन्तीति तन्त्रागमरहस्यकथां विनेयबुद्धिवैशद्याय वर्णयन् स्वप्रकाशां शक्तिं स्तौति—

**गोचरीप्रभृति शून्यपश्चिमं**
**भूतषट्कमवमज्य धाम्नि ते ।**
**स्वप्रभे प्रमदनिर्भराः परं**
**शक्तयो दधति दर्पमीश्वरे ॥१८७॥**

हे स्वप्रभे ! गोचरीप्रभृति शून्यपश्चिमं भूतषट्कं ते धाम्नि अवमज्य प्रमदनिर्भराः शक्तय ईश्वरे परं दर्पं दधतीति पदयोजना ।

स्वेन आत्मना, स्वयमित्यर्थः, प्रभा स्वातन्त्र्यं प्रकाशो वा यस्यां तत्संबोधने रूपम्। हे स्वतन्त्रे! स्वातन्त्र्यं च सर्वज्ञत्वान्तर्भावितसर्वकर्तृत्वमेव। सर्वज्ञातृत्वाभावे सर्वकर्तृत्वमेव न संघटेतेति सर्वज्ञत्वमर्थात् सर्वकर्तृत्वेऽन्तर्भूतम्। स्वतन्त्रत्वं च नोच्छृङ्खलत्वमपि तु "यथा पूर्वमकल्पयत्" इति ब्रह्मकर्तृत्ववत् स्वात्मज्ञाननियन्त्रितत्वमेव। शक्तिकृतं स्वात्मज्ञाननियन्त्रितत्वं न केनापि लक्षणलक्षितेन शब्दप्ररोहोपारोहेण अवरोद्धुं प्रतिरोद्धुं वा शक्यम्। "चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इति प्रत्यभिज्ञानीत्या विश्वोत्पत्तिकारणभूता स्वतन्त्रा चितिः स्वानुशासने स्थिता न किमप्युल्लङ्घयति, न वा किमपि व्यतिरिक्तमनपेक्षितं कुरुत इति युगपदेव विश्वात्मकत्वविश्वोत्तीर्णत्वभावौतप्रोतत्वात्मिका सर्वसामर्थ्ययुता अनर्हा कस्यापि अपरिष्कृतपर्यनुयोगस्य। सर्वदा स्वान्तर्मुखतया चिदानन्दघनतया स्वेनैव स्वात्मपर्यवेक्षिकाया नास्त्यवसरः कस्यापि दोषकलङ्कलेशस्पर्शस्येति स्वातन्त्र्यं सर्वथा सुघटं सुसंस्कृतं शुद्धं निर्मलं चिद्रूपम्। खेचर्यादिभूचर्यन्तशक्तयः शिवसन्निधाने शिवहृदयविकासनपराः दीव्यन्ति। पशुसन्निधानदशायामेताश्चक्ररूपेण भिन्नामेव दशां स्वात्मतयाऽङ्गीकृत्यावतिष्ठन्ते। चक्ररूपिण्यश्चैता बन्धनमोहनादिक्रियाः कुर्वत्यः पशूनां बन्धनाय चेष्टन्ते। शिवदशायां त्वेताः स्फुरत्तायाः सारः। यत्कर्तृत्वं तदधिष्ठाय शिवाभिन्नतयाऽन्तर्मुखचैतन्यं विमृशन्त्यो निर्विकल्पकभावं विकासयन्ति। क्रमेण खेचरी-गोचरी-दिक्चरी-भूचर्यः प्रमातृ-अन्तःकरण-बहिष्करण-पदार्थस्वभावतया परिस्फुरन्ति। ग्रन्थकृता इमं क्रमं विहाय गोचरीमन्तःकरणस्वभावामादितया प्रगृह्यान्यासां नामान्यगृहीत्वा शून्यप्रमातारं गृहीत्वा निर्व्यूढम्। भूतानां स्वगुणेनोभयात्मकं मनः षष्ठतया कलयित्वा पृथिव्याद्याकाशात्मकपञ्चमहाभूतान्यादाय भूतषट्कमिति व्यवहारः। एतान् दशभावान् ते धाम्नि तेजसि अवमज्य मज्जयित्वा संशोध्य प्रमदेन हर्षेण निर्भराः पूर्णाः शक्तयः खेचर्यादिभूचर्यन्ता वयं शुद्धा भवत्समावेशपात्राणीति कृत्वा परं प्रौढं दर्पमभिमानं दधति स्वात्मनि धारयन्ति। तन्त्रागमे भूतशुद्धितत्त्वशुद्धयादिना आत्मनः केवलस्य शुद्धिं कृत्वा शिवसमावेशः प्राप्यते। अत्र पद्ये भूतषट्कमिन्द्रियादीनामन्तर्बाह्यानाम्, गोचर्यादिशून्यान्तं च तत्त्वानामुपलक्षणम्। सर्वमपि जगत् शक्तिस्वरूपमिति "शक्तयोऽस्य जगत्कृत्स्नम्" इति वचनानुसारं स्वीकृतमत्र दर्शने। अतः क्रमाधीश्वर्यां काल्यां स्वात्मानं शोधयित्वा साम्प्रतं शक्तय उत्कृष्टहर्षभरेण शिवसायुज्यपात्रताया औचित्यं प्रकटयन्ति। साधिकारकथनमेव दर्पनिवेदनं दर्पधारणं वा। कथञ्चिदर्थात् केनापि प्रकारेण न्यूनतामादधाना नहि दर्पेण कथनेऽधिकृता भवन्ति। विमर्शाख्यकालीशक्तौ तत्तेजसि निष्कलुषीभूतास्ताः शिवे समावेशार्हा इति हर्षातिशयेन स्वाभिप्रायज्ञापनं तासां दर्पनाम्ना प्रत्यपादि। संविद्रूपां कालीं विहायान्याः शक्तयो विश्वरक्षणकर्त्र्य इति विश्वसम्पर्कात् कार्यकारणयौरैक्यमाकलय्य चिदानन्दघनीभूतायां काल्यां शुद्धा भूत्वा सम्प्रति शिवेन सह ऐकात्म्यलाभरूपसमावेशं समाकाङ्क्षन्त इति संक्षिप्तोऽभिप्रायः। महार्थमञ्जरीपरिमले—व्योमवामेश्वरी-खेचरी-दिक्चरी-गोचरी-भूचरीति पञ्चशक्तयः समुपदिश्यन्ते। अन्ये पुनरासां

क्रमं गोदिग्भूरूपं भूदिग्गोरूपं चाचक्षते। एतादृशव्यतिक्रमे तत्तत्सम्प्रदायानुगुण्यमेव हेतुः। अस्माभिः प्रत्यभिज्ञाहृदयनीत्या क्रमः प्रदर्शितः। परिमलेऽपि व्योमेशीमधिकां संकलय्य एष एव क्रमोऽङ्गीकृतः। श्रीक्रमसिद्धिधृतवचनं परिमले यथा—

व्योमवामेश्वरी संज्ञा नादभूमिश्च खेचरी।
आनन्ददिक्चरी संज्ञा गोचरी मन्त्रभूमिका॥
मन्त्राणां द्रव्यरूपत्वादावलिर्भूचरी तथा। इति।

कोमलवल्लीस्तवे गोरक्षनाथेनाप्युक्तम्—

भूतले किमथ किं गवां कुले
दिङ्मुखेषु किमथो किमम्बरे।
किं ततोऽप्युपरि सर्वतश्च किं
दृश्यसे तदपि किं न मृष्यसे॥ (पृ० ८६)

तत्र व्योम्नामोमात्मकप्रणवरूपताविमर्शवैशिष्ट्यानुप्राणनानां वक्ष्यमाणसर्वपञ्चकात्मना वामं वमनं प्रतीश्वरी सामर्थ्यशालिनीति व्योमवामेश्वरी। सा च परमेश्वरस्याविकल्पभूम्यनुप्रविष्टा चिच्छक्तिः। खे बोधरूपे प्रमातरि चरणात् खेचरी। दिक्षु अन्तःकरणेषु चरणशीला दिक्चरी। गोषु बहिरिन्द्रियेषु सञ्चरणाद् गोचरी। भुवि विषयभूमौ चरणाद् भूचरीति। पारमेश्वरी हि संवित् स्वातन्त्र्यस्य शक्तिः प्रकृत्या निर्विकल्पकपदाधिरूढाऽपि क्वचित् परिमिते प्रमातरि स्फुरन्ती तदनु तदन्तःकरणानुप्रविष्टा पश्चात् तस्यैव बाह्येन्द्रियानुबन्धिनी च भूत्वा बहिर्वेद्यलक्षणं विषयोल्लासमखिलमुपयुङ्क्ते। एता एव पूर्वोक्ता पञ्च शक्तयः क्वचिच्चिदानन्देच्छाज्ञानक्रियारूपाः सत्यः, कुत्रचित् सूक्ष्मा-(परा)-पश्यन्ती-मध्यमा-वैखरीति वाग्रूपाश्चानुभूयन्ते॥ १८७॥

इदानीं सूर्यस्य द्वादशकलाभिः किरणरूपाभिः सहसा उदयसमकालमेव विश्वस्मिन् समागत्य चिदग्निचकासिते चिदाकाशे चिद्दर्पणे प्रतिबिम्बितं विश्वमलौकिकमदृष्टपूर्वमिति चकितमवलोक्य विस्मयमाप्तमिति चिद्रूपदर्पणे चिद्रूपं जगत् प्रतिबिम्बतीति तन्त्रागमदर्शनप्रसिद्धं तथ्यं शिष्यबुद्धिवैशद्याय चमत्कारानुभूतिसमर्जनाय च संसूचयन् शक्तिस्वातन्त्र्यमाहात्म्यमभिव्यञ्जयन् प्रस्तौति—

**द्वादशाम्ब! किरणात्मनो रवे-**
**र्मातृवह्निविदिते त्वदम्बरे।**
**विश्वमेत्य सहसा मरीचयो-**
**ऽश्नन्ति चिन्मुकुरबिम्बितं जगत्॥१८८॥**

हे अम्ब! अनुत्तराकुलस्वरूपादकारादारभ्य शक्तिस्फाररूपहकलापर्यन्तप्रसृताकृत्रिमाहंरूपे! मातृवह्निविदिते त्वदम्बरे किरणात्मनो रवेर्द्वादश मरीचयः सहसा विश्वमेत्य चिन्मुकुरप्रतिबिम्बितं जगदश्नन्तीति पदयोजना।

माता चितिस्वरूपा शक्तिरेव वह्निश्चिदग्निरित्येवं विदिते प्रसिद्धे तव अम्बरे चिदाकाशे, किं वा माता प्रमाता शिव एव वह्निरित्यादि पूर्वोक्तोऽर्थः। किरणा एव आत्मा स्वरूपं यस्य रवेः सूर्यस्य संख्यायां द्वादश मरीचयः। सूर्यस्य द्वादश कलाः—तपिनी, तापिनी, धूम्रा, मरीचिः, ज्वालिनी, रुचिः, सुषुम्णा, भोगदा, विश्वा, बोधिनी, धारिणी क्षमा इति। एताः कलारूपा द्वादशरश्मयः सहसा पराक्रमेण न तु अतर्कितं यथा स्यात्तथा। विश्वं संसारमेत्य समागत्य चिन्मुकुरे चिद्दर्पणे प्रतिबिम्बितं जगद् अश्नन्ति, गृह्णन्ति, उपभुञ्जते, जानन्ति इति यावत्। अशनं नहि गलबिलाधोगमन-रूपमेवापि तु करणेन ग्रहणमपि भोजनक्रियात्वेनैव गृह्यते, चक्षुषा रूपग्रहणं श्रोत्रेण शब्दश्रवणं तत्तदिन्द्रियेण तत्तद्विषयग्रहणमाहरणमाहार एवोच्यते। तथैव सूर्यमरी-चयश्चिन्मुकुरप्रतिबिम्बितं जगदाघ्राय दृष्ट्वा स्पृष्ट्वा साश्चर्यं मोदमनुभवन्ति चिन्त-यन्ति च चतुरस्रप्रकाशस्वरूपे चिति चितः प्रतिबिम्बनं सर्वथा लोकोत्तरं सर्वथा अदृष्टाश्रुतपूर्वं विस्मयावहमिति। वह्निवारिखड्गतैलभित्तिमुकुरादिपदार्थाः स्वच्छ-तया प्रतिबिम्बं गृह्णन्ति, किन्तु एकपार्श्वतयैव कस्मिंश्चिदधिष्ठाने स्वयं स्थिताः प्रति-बिम्बग्राहकाः। चिद्रूपं सर्वतः प्रकाशमानं कथं विश्वप्रतिबिम्बं गृह्णातीति बलवान् पर्यनुयोगः। यथोक्तं तन्त्रालोकविवेके—

> निजधर्माप्रहाणेन परूपानुकारिता।
> प्रतिबिम्बात्मता लोके खड्गादर्शतलादिवत्॥
> स्वरूपानपहानेन पररूपसदृक्षताम्।
> प्रतिबिम्बात्मतामाहुः खड्गादर्शतलादिवत्॥ इति।

इह दर्पणादेस्तनुत्वपरिमण्डलत्वाधेयत्वाद्यात्मनः स्वस्यासासाधारणस्य रूप-स्यापरित्यागेऽपि परस्य मुखादेर्नगरादेः सम्बन्धिना रूपेण यत्सादृश्यं तदेव प्रतिबिम्बा त्मत्वम्, न तु तद्रूपतासादनमेवेति सर्ववादिसम्मतः पन्थाः। ताद्रूप्यस्वीकारे चिक्क-णस्य दर्पणस्य निम्नोन्नतमुखप्रतिबिम्बयोगेऽपि स्निग्धत्वाभावो भवेत्। नगरादिप्रति-बिम्बयोगेऽप्यनेकरूपग्रहणप्रयुक्तदर्पणानेकत्वं स्यात्। तेन यथा चित्रज्ञानस्य बहुविध-ज्ञानत्वेऽपि प्रतिबिम्बितघटपतङ्गादौ भेदाभावेनानेकसादृश्येऽप्येकत्वमेव नानेकत्वम्, एवं दर्पणेऽपि विविधप्रतिबिम्बयोगे नानेकत्वमिति न कश्चन दोषः, सादृश्यमात्र-दर्शनात्। नहि सादृश्यमात्रेण वस्तुनस्ताद्रूप्यम्। नहि गवयसाम्यादेव गौर्गवयः। तस्मा-द्बिम्बसदृशाकारत्वमेव प्रतिबिम्बधारित्वमिति।

अन्यामिश्रत्वे सति स्वातन्त्र्येण स्वरूपमात्रनिष्ठत्वेन भासमानत्वं बिम्बत्वम्। अन्यमिश्रत्वे सति स्वातन्त्र्येण भासमानताऽशक्यत्वं प्रतिबिम्बत्वम्। एवं चेद् विश्व-वैचित्र्यप्रतिबिम्बग्राहकत्वं चिच्छक्तौ तिष्ठतीति बिम्बं विना प्रतिबिम्बस्यानुत्पत्ति-रिति कथनमप्रयोजकमत्र। यथोक्तं परात्रिंशिकाविवृतौ—"स्वतन्त्रः परिपूर्णोऽयं भग-वान् भैरवो विभुः। तन्नास्ति यन्न विमले भासयेत् स्वात्मदर्पणे॥" इति। तत्सिद्धं बहिः स्मृत्यादौ यथा बिम्बाभावेऽपि निमित्तान्तरेण प्रतिबिम्बत्वं भवेत्तथेहापि। चित्स्व-

रूपायास्तस्या अन्या ज्ञानक्रियाद्याः शक्तयो निमित्तं स्युरिति निजैश्वर्यमात्रादेवास्याः स्वात्मनि विश्वाकारधारित्वरूपप्रतिबिम्बग्राहकत्वं सुसंघटमेव। तदुक्तं महार्थमञ्जरी-परिमले—

मत्त एवोदितमिदं मय्येव प्रतिबिम्बितम्।
मदभिन्नं जगच्चेति त्रिधोपायस्तु शाम्भवः॥ इति।

सत्त्वासत्त्वाभ्यां भेदेन पदार्था द्विविधाः, किन्त्वत्र सदसद्भ्यां भिन्नत्वेन स्थितायाः शक्तेश्चिद्रूपायाः काचनान्यैव विधा तृतीया, यत्र स्वातन्त्र्यवशाद्बिम्बरहित-मेव प्रतिबिम्बं भासते। इदानीं दर्पणादिप्रतिबिम्बग्राहकवस्तु विना कदाचिदपि प्रति-बिम्बग्रहणं शक्यं नास्ति यथा, तथैव बिम्बं विनापि प्रतिबिम्बस्य संभावनाऽपि शक्य-समर्थना नास्तीति तथ्यद्वयविषये चिरप्रचलितेऽपूर्वं किमपि विज्ञापनाय पद्यान्तरं प्रारभते—

**बाह्यमीश्वरि विना सुदर्पणो**
**बिम्बमेतदनुकारिणी तनुः।**
**व्याप्ततामुपेयुषी त्वदम्बरे**
**युक्तिमर्हति न बिम्बबाह्यताम्॥१८९॥**

हे ईश्वरि! ऐश्वर्यशालिनि! बाह्यं बिम्बं विना सुदर्पणः प्रतिबिम्बं न नार्पयति, त्वदम्बरे व्याप्ततामुपेयुषी एतदनुकारिणी ते तनुर्बिम्बबाह्यतां युक्तिं नार्हतीति पदयोजना।

ईशनसामर्थ्यं विना ईश्वरी ईश्वरो वा अर्थक्रियाकारित्वाय नोपकल्पिष्यत इति नियममनुस्मरन्ती तत्सामर्थ्येन शालते शोभते, तत्संबोधने रूपम्। सुदर्पणशब्दोऽन्येषामपि वारिखङ्गतैलरत्नभित्तिप्रभृतिप्रतिबिम्बग्रहणशीलानामुप-लक्षणम्। बाह्यं विम्बं हित्वा वारिमुकुरखङ्गादर्शादयः प्रतिबिम्बं नार्पयन्तीति सर्ववादिप्रतिपन्नः पन्थाः। किन्तु चिदाकाशे व्याप्तिं प्राप्तवती चिदाकाशव्यापिनी चिद्रूपा ते तनुः, या हि पूर्वोक्तनियममनुकरोति तच्छीला, चिदाकाशे व्यापकभावेन चिद्रूपशरीरं गृह्णती त्वं पूर्वोक्तनियमं नाङ्गीकुरुषे। चिद्रूपा ते तनु र्विश्वप्रतिबिम्बं धारयत्येवेति बिम्बस्य बाह्यताया युक्तिं नार्हति। बाह्यबिम्बसत्त्वे एव प्रतिविम्बानि ग्रहीतुं शक्यन्त इति तथ्यं शैवशाक्तदर्शने शक्तिशिवविषयेऽप्रतिहतगत्या स्वीक्रियते समाद्रियतेऽनुवेलं प्रयुज्यत इति प्रतिबिम्बाय विम्बापेक्षाऽकिञ्चित्करी प्रतीयते। अत एवोक्तम्—

निरुपादानसंभारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥१८९॥ इति॥

इदानीं "मानाधीना मेयसिद्धिः" इति तन्त्रान्तरप्रसिद्धनीतिं समर्थयन् बाह्यबिम्बसत्त्वे प्रतिविम्बसत्तेति मतं निर्मूलमिति द्रढयति—

**अस्ति बाह्यमिति तत्प्रथेत चेत्**
**तादृशप्रथनगर्भितं हि तत् ।**
**न प्रवेदयति निष्प्रमाणकं**
**मानमम्ब खलु साधयेत् प्रथाम् ॥१९०॥**

हे अम्ब ! बिम्बं बाह्यमावश्यकं प्रतिबिम्बज्ञानलाभायेति तथ्यं यदि ख्यातमस्ति चेत् तत्स्वीकर्तव्यमेव । उपर्युक्ततथ्यकथनं ख्यातिपूर्वकमेव स्वीक्रियते । निष्प्रमाणकं तादृक् कथनं न किमपि प्रकर्षेण वेदयितुं प्रभवेत् । यतो हि मानं प्रमाणमेव प्रथां ख्यातिं वस्तुत्वं साधयितुं क्षमते खलु निश्चयेन । प्रमाणेनैव कापि ख्यातिः प्रथा वा साध्यते । यत उक्ततथ्यकथने प्रमाणाभावः । अतो बिम्बबाह्यत्वस्य अनिवार्यता नावश्यकी । यत्रोपादानमनपेक्षितं तत्र निमित्तस्य का कथेति तात्पर्यम् । तेन बिम्बं विनापि प्रतिबिम्बसद्भावे न कापि क्षतिः । अत उक्तं तन्त्रा लोके—

इत्थं विश्वमिदं नाथे भैरवीयचिदम्बरे ।
प्रतिबिम्बमलं स्वच्छे न खल्वन्यप्रसादतः ॥ (३।६५) इति ॥१९०॥

इदानीं मातृमानमेयरूपत्रिपुट्या अनुपालनं त्वयि नार्थक्रियां जनयतीति शक्तेरुत्कर्षं वर्णयन् शक्तिप्रकर्षवर्णनव्याजेन विनेयजनबुद्धिमुत्तेजयति—

**ईदृगेतदिति चैव मा फलं**
**तत्तथेति हि विमर्श आन्तरः ।**
**निर्विबाध उपधानशब्दवत्**
**कर्म सा त्वयि पुटत्रयी स्थिता ॥१९१॥**

लोके प्रमया प्रमितप्रमेयेण व्यवहारं निर्वाह्य पर्यन्ते प्रमातरि सर्वं निक्षिप्य जनाः सुखमासते । यथोक्तं महार्थमञ्जरीपरिमले—"पुरुषश्चोत्तमावधिः" इति । करोषि करोतीत्यादावपि करोमीत्यस्यैव पारमार्थ्यात् सर्वमपि क्रियाकदम्बकमहम्भावानुप्रविष्टतयैव पर्यवस्यति । ज्ञानं तु अहम्भावाश्लिष्टमेव कृतकार्यतामुद्घोषयतीत्यत्र न संदेहावसरः । अत एवोक्तं पूजारहस्ये—'औदासीन्यप्रहाणेन यदौन्मुख्यं महेशितुः । तदिदं स्याज्जगत्सर्वमित्यस्मिन् किन्नु युक्तिभिः ॥" इति । अयमाशयः—परप्रमातृरूपस्वात्ममहेश्वरस्य या सर्जनात्मव्यापारं प्रत्युन्मुखता, यश्च निष्क्रियत्वौमुख्यपरित्यागः, सैव जगत्सृष्टिरिति । तत्र च इदम्भावप्राचुर्येणानुभूयमानस्य भेदव्यवहारस्य सर्वप्राणिस्वसंवेदनस्वभावेऽहमि प्रलय एव । शब्दान्तरेण आदर्शे यथा स्वीयनेत्रगोलकविनिःसृततेजःपुञ्ज एव आदर्शोन्मुखं गत्वा पुनस्ततः परावृत्य स्वीयनेत्रे समागत्य प्रतिबिम्बितं स्वमुखं प्रत्यावेदयति । एष च व्यापार आदर्शावलोकनन्याय इत्याख्यायते । आदर्शावलोकनादिन्यायादस्मच्छब्दार्थ एव युष्मत्तदेतदित्याद्यर्थतयाऽवभासते । तथा चैत्रोक्तौ चैत्रः प्रणमतीत्यादिवदहम्भाव एव व्यवधानाश्रयेण

प्रथमपुरुषतया प्रतीयत इत्यहन्तैव सर्वत्रात्मतत्त्वम् । यदुक्तम्—"अस्तिशेषाः क्रियाः सर्वाः कर्तृशेषं च कारकम् । एकशेषं च वचनं पुरुषश्चोत्तमावधिः ॥" इति ।

अहन्ता नाम ज्ञानमेव । ज्ञानं नाम अहम्भावावभासनात्मा सर्वप्राणिनां स्वसंवेदनसिद्धः स्वभावः । क्रिया च करचरणाद्यनुबन्धिनी सर्वसाक्षात्कारयोग्या स्फूर्तिरेव । इच्छाज्ञानक्रियाणां सर्वोऽपि स्फुरणात्मकप्रयासविलासः प्रमातृविश्रान्ततयैव स्वाभाविकत्वं प्रतिपद्यते । तत्र प्रमा स्वव्यापारेण मेयानुबद्धं ज्ञानं प्रमात्रे समावेद्य कार्तार्थ्यं भजते । प्रमा च ज्ञानमिति स्वस्मिन्ननुपयोगितया संचितं परार्थाय प्रतिजानीते। प्रमया कीदृग् ज्ञानं किंप्रयोजनकं समर्ज्यते ? इत्याह—ईदृगेतदिति । इदमित्थमीदृगेतदिति प्रमाप्रमितज्ञानाकारः, प्रयोजनं च प्रमातृपरितोष इति प्रथितं दर्शनेषु । परार्थानुमानं परप्रतिपत्तये प्रयुज्यत इति तत्र प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः समपेक्ष्यन्ते । निगमनप्रयोजनमबाधितमिदं ज्ञानं तत्तथेति । प्रमोन्नीतज्ञानस्य 'तत्तथा' इति निगमनं केन क्रियेतेत्याह—विमर्श आन्तर इति । यथा न्यग्रोधबीजे शक्त्यात्मको महाद्रुमोऽवतिष्ठते, तथैव हृदयापरपर्यायविमर्शशक्तौ चराचरं विश्वमाभ्यन्तररूपेण विराजते । अथ केनोक्तं हृदयं शक्तिपर्याय इति चेद् भट्टोत्पलेन ईश्वरप्रत्यभिज्ञायाम्—"सा स्फुरत्ता महासत्ता देशकालाविशेषिणी । सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः ॥ (१।५।१४) इति।तदेवमान्तरविमर्शरूपा परा चितिरेव चमत्कारापरपर्याया प्रतीतिः। सा चाप्रतिहतगतिरिति सर्वत्रैव चकास्ते मातरि माने मेये चेत्येतत्कर्म उपधानशब्दवद् निर्विबोधो निर्विबाधो वा, उपधीयतेऽस्मिन् सर्वमाब्रह्मस्तम्बपर्यन्तमित्युपधानमाश्रयः, अथवा उपधीयतेऽनेनेति उपधानं मानम्, यद्वा उपधीयते यत्तद् उपधानं मेयम् । चराचराश्रयभूतायां पराचिद्रूपविमर्शशक्तौ आश्रयशब्दं प्रयुज्य यथा व्यर्थतालाभो भवति, तथैव मातृमेयमानादित्रिपुटीप्रयोगोऽप्यत्र व्यर्थ एव । यतो हि सा त्रिपुटी त्वयि स्थिता निहिता विद्यते । अतस्त्रिपुट्या कस्याप्यपूर्वस्य वाग्वैदग्ध्यस्य सिद्धिर्नैवात्र भवतीति प्रतिक्षणमविश्रान्ता, कल्पनाशतैर्मुहुर्मुहुस्त्रैलोक्यं कल्पयन्ती, निर्विकल्पा, सदा सृष्टिविनोदिनी सदास्थितिसुखासिनी, सदा त्रिभुवनाहारसंहारं कुर्वती, प्रसरद्दृक्क्रियाशक्तिरूपा, सर्वंसहा, परमप्यात्मीकरणोद्यता, आत्मानं चापि परीकरणदक्षा, एकीकृतस्य द्वयस्य विभजनरूपन्यग्भावनप्रवणा, अन्तरभिलापात्मकशब्दनस्वभावा, नादबिन्दूभयभावाधिष्ठिता, स्वरसोदितपरावाक्स्वरूपा, शिवस्य परमेष्ठिनः संहारशक्तिप्रातिनिध्येन हृदयभूता, सा कालीशक्तिस्त्रिपुटीं कवलीकृत्यैव तिष्ठन्ती न स्वप्रकाशतां व्यभिचरतीति मातृमेयमानादिकल्पनया नास्या वैभवं मातुं परिच्छेतुं वा शक्यत इत्यलं विस्तरेण ॥१९१ ॥

इदानीं पूर्वोक्त प्रघट्टकेनास्या महादेव्या हृदये बीजरूपतया स्थितस्य चराचरस्याभ्यन्तरत्वं यत्प्रतिपादितं तस्यैव बाह्यतया प्रकाशनं तन्मायवैवेति विनेयान् प्रबोधयन् तस्याश्चिच्छक्तेर्विविधवृत्तीनां स्वरूपप्रकाशनप्रयासाभिव्यञ्जनमुखेन मातुरैश्वर्यं प्रत्यभिज्ञापयितुं स्तौति—

मायया$\text{}$न्तरमपि स्थितं जगद्
वर्तमानमवभाति बाह्यवत् ।
भूतभावियुगलं यथापुरं
विद्ययाम्ब तव वृत्तिरूपया ॥१९२॥

हे अम्ब ! "कलाकाष्ठादिरूपेण परिणामप्रदायिनी" इति मार्कण्डेयपुराणोक्त-नीत्या क्रमार्थावभासनैकव्रते ! क्रमरूपिणि ! अन्तः स्थितं जगद् आन्तरमपि तव मायया भूतभावियुगलं यथापुरं वृत्तिरूपया विद्यया बाह्यवद् वर्तमानम् अवभातीति पदयोजना ।

वस्तुगत्या सर्वत्राप्यद्वैतप्रस्थाने पूर्णा सत्ता नित्यसिद्धा, आदौ सृष्टेरादौ सिद्धा नित्येत्यादिसिद्धा, आन्तरी एव स्वीक्रियते । सृष्टिसंहारौ यत उत्पद्येते तत्रैव विलीयेते चेत्तदद्वैततत्त्वमिति प्रथितं विपश्चिदपश्चिमेषु । शब्दान्तरेण सृष्टिसंहारा यत्र स्वरूपत्वेन स्थिता आम्नायन्ते, तदेवाद्वैततत्त्वमिति प्रसिद्धं तत्र तत्र । अत्र प्रमाणम्—

एवमस्य स्वतन्त्रस्य निजशक्त्युपभेदिनः ।
स्वात्मगाः सृष्टिसंहाराः स्वरूपत्वेन संस्थिताः ॥

इति बोधपञ्चदशिका । विज्ञानाद्वयवादेऽपि—

विज्ञप्तिमात्रमेवेदमसदर्थावभासनात् ।
यद्वत् तैमिरिकस्यासत्केशचन्द्रादिदर्शनम् ॥

इत्यनेन बाह्यत्वनिषेधमुखेनान्तरत्वं स्फुटं प्रतिपादितम् । ब्रह्माद्वैतवादेऽपि ब्रह्मैवैकं परमार्थतत्त्वं दृग्रूपम् । दृश्यं तु सर्वं तद्विकारजातमाविद्यकं तत्रैव तादात्म्येनाध्यस्तमविद्यापरिणामरूपम् । दृष्टिसृष्टिवाद-सृष्टिदृष्टिवादावङ्गीकृत्यापि क्रमेण प्रातिभासिकव्यावहारिकसत्तां स्वीकृत्य सर्वोपप्लवः प्रशमितः । वादवैमत्येऽपि प्रपञ्चस्य मिथ्यात्वमर्थादपारमार्थिकत्वं ब्रह्माद्वयवादस्याक्षुण्णत्वसंस्थापकम् । अजातवादस्य पारमार्थिकत्वमुद्घोषयता गौडपादेन माण्डूक्योपनिषत्कारिकासु—

भूततोऽभूततो वापि सृज्यमाने समा श्रुतिः ।
निश्चितं युक्तियुक्तं च यत्तद् भवति नेतरत् ॥ २३ ॥
नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ।
अजायमानो बहुधा मायया जायते तु सः ॥ २४ ॥
संभूतेरपवादाच्च संभवः प्रतिषिध्यते ।
कोऽन्वेनं जनयेदिति कारणं प्रतिषिध्यते ॥ २५ ॥

प्रपञ्चस्याविद्यकत्वेन ब्रह्मणो दृग्रूपतया चान्तरत्वमेव समर्थितं भवति । अद्वैतवादेषु त्रिष्वपि मायायाः सद्भावोऽपि निखिलव्यावहारिककार्योपपादनाय स्वीकृत एव । माया हि अघटिताघटमानाघटिष्यमाणघटनाघटनपटीयसी दुर्घटशक्तिः पूर्ण-

सत्तायास्तत्तन्नामभेदभिन्नायाः। प्रसिद्धे प्रस्थानत्रय एव नाद्वैतवादपक्षः। अपि त्वन्येऽपि बहवोऽद्वैतवादास्तत्तच्छास्त्रेषु साङ्गोपाङ्गसुसज्जिताः प्रभूतप्रामाणिकवचनयुक्तिविद्वदनुभवयुताः प्रशस्ताः प्रतिभान्ति। शाक्ताद्वैतोऽपि स्वीययुक्त्यनुभवाभ्यामप्रतिम एव। अत्रापि शक्तिरेवैकं मौलिकं तत्त्वं शुद्धसंविद्रूपं चिदानन्दघनमलौकिकदिव्यशक्तिसमुपोद्बलितं साधनामार्गनिष्णातैरेव भावनादाढर्येन परिशीलयितुं क्षमम्। स्वातन्त्र्यशक्तिरेवैतस्या महाबलम्। तत्कृते किमपि असाध्यमशक्यं दुरुपपादं नास्ति। वाङ्मनसयोरगोचरमप्यत्र साक्षात्क्रियते। शक्तेः शिवस्य वाऽन्तरत्वख्यापकं वचनं भूरिशः प्रयुक्तं तन्त्रागमग्रन्थेषु। एतद्भिन्नदर्शनेषुतन्मतं हृदयेनानुमतमपि कण्ठरवेण लिखितं प्रतिपादितं च नास्ति, किन्त्वत्रान्तरत्वख्यापनं महता कण्ठेन महतोत्साहेन सर्वैरपि प्रामाणिकटीकाभाष्यकृद्भिः कृतं क्रियते च। सृष्टेः प्राक् प्रलयावस्थायाश्चर्चा यथान्यशास्त्रेषु प्रभूतं वर्ण्यते, तथाऽत्र शैवशाक्तदर्शनेषु न कृतं क्रियमाणं वा दृश्यते। केवलं कामकलाविलासप्रथमपद्ये "अन्तर्लीनविमर्शः पातु महेशः प्रकाशमात्रतनुः" इत्यत्र महेशस्यान्तर्विमर्शः प्रलीनतयाऽवस्थितो वर्णितः। तुल्यवित्तिवेद्यन्यायेन शक्तेरन्तः प्रलीनप्रकाशः शिवो वर्णनीयतयाऽवशिष्यते। एतेन शिवशक्त्योर्नामभेदेऽप्यभिन्नयोर्द्वयोरन्योन्यस्मिन्नन्योन्यस्यान्तर्लीनत्वमर्थादापद्यते। सृष्टेः प्राक् शिवः शक्त्याश्रयत्वेन, शक्तिश्च शिवाश्रयत्वेन तिष्ठतीति प्रकल्पनेऽवबोधसौकर्य्याय न कोऽपिदोषः प्रेक्षावदुत्प्रेक्षाया अवधेयो विषयः। शक्तिगर्भे लीनं जगदिच्छामात्रेण बहिरात्मना भासत इति चिद्रूपशिवशक्त्योर्विभवविलास एव स्वातन्त्र्याभिधानः।

अवलोकनं प्रथनं वेदनं विद्या, शुद्धा चासौ विद्या शुद्धविद्या। तत्त्वक्रमे शुद्धविद्या पञ्चमं तत्त्वम्। शिवादिशुद्धविद्यान्तं तत्त्वं शुद्धाध्वपदेन व्याह्रियते। अत्र मायाशक्तेः प्रसरो नास्ति, शुद्धाध्वनः शिवकर्तृकत्वात्। ज्ञानिनोऽपि कर्तुर्या पदार्थेषु इदं मद्भिन्नमिति भेदज्ञानं सा माया। या तु ग्राह्यग्राहकोभयविपर्याससंस्कारे सत्त्वेऽपि वस्तुनः परमार्थत्वेन प्रथनं ज्ञापनम्। तत्र विद्याशक्तिव्यापारो योगिज्ञानिप्रभृतिषु पशुप्रमातृभिन्नेषु। मायाशक्तिरचिद्रूपे शून्ये पशौ भावजगति वाऽचिद्रूपे चिद्रूपताभिमानं स्वीयकर्तृत्वरहितेऽपि स्थलेऽहं प्रमातेति प्रमातृताभिमानं प्ररूढं कुर्वती विपरीतप्रथात्मकं ज्ञानं दधती चिन्मयान् भावानपि भेदेनाभिमानयन्ती सर्वथैव स्वरूपं तिरोदधाति विपरीतज्ञानोत्पादनेनावृणोतीतिहेतोर्विमोहिनी तिरोधानकरी। अत्र सृष्ट्यादिकृत्यपञ्चकमध्यपठितविलयरूपं तिरोधानं न ग्रहीतव्यमपि तु स्वरूपाच्छादिका विरुद्धज्ञानोत्पादिकाऽनात्मन्यात्मभावोत्पादिका शक्तिर्मायापदेनोच्यते, या तत्त्वक्रमे षष्ठं तत्त्वम्।

मायाऽपि द्विविधा—परमेश्वरशक्तिरूपा, षष्ठतत्त्वरूपा च। प्रथमा दुर्घटा भगवतः शक्तिः। द्वितीया तु मायाप्रमातृषु निजात्मन्यपि नायमहमपि तु पर इति स्वात्मानमेव परतया आभासयति। तत्र विद्यया निष्कलप्रमातारोऽनुशास्यन्ते नियम्यन्ते च, मायया तु पशुप्रमातार इति स्थूलो भेदः। स्पष्टीकृतं चैतदागमाधिकार ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यामिति तत एवावलोकनीम्।

अत्र दर्शने सर्वं शिवाद्यवनिपर्यन्तं षट्त्रिंशत्तत्त्वमयं विश्वं चिन्मयमेव, तथापि मायया़ऽचिद्रूपतया भास्यते। सुतधनदाराकुटुम्बादिषु शरीरेन्द्रियप्राणाद्यनात्मस्वात्मबुद्धिं स्वबलेनोत्पाद्यानुक्षणं विमोहयतीति तात्पर्येण मायाशक्तिविजृम्भणं दुस्तरम्। तया मायाशक्त्याऽन्तर्वर्तमानं जगद् बहिर्वर्तमानतया बाह्येन तुल्यतया न, अपि तु बाह्य इव बाह्यवत्, अत्र 'तत्र तस्येव' इति सूत्रेण वतिः प्रत्ययः। तेन तुल्यमिति सूत्रेण तु क्रियासादृश्यवाच्ये वतिर्भवति। अवभाति, इच्छामात्रेणात्रान्तरस्य जगतो बहिरवभासनम्, न तु बाह्यजगदिवात्र जगत्, किन्तु मायाशक्त्या करणेन बलाद् भौतिकवदित्यर्थे संकेताय तथा प्रयोगः। भूतभावियुगलं, भूतं च भावि च भूतभाविनी, तयोर्युगलं तथा, भूतकालिकभविष्यत्कालिकजगद्विषयेऽपि यथा पुरा इव व्यवहारः। अतीतानागतकालिकयोर्जगतोर्बोधोऽपि मायाशक्त्या बलादेव बाह्यवदेव कार्यत इति तस्या बलवद्विजृम्भणमाहात्म्यम्। एतत्सर्वं तव वृत्तिरूपया विद्ययाऽशुद्धविद्ययाऽष्टमतत्त्वरूपया क्रियत इति कवेराशयः। सर्वकर्तृत्वसंकोचिन्या कलया सप्तमतत्त्वरूपया विद्याया जन्म। तया च सर्वज्ञत्वं संकोच्यते। मायादिनियत्यन्तानि षट्तत्त्वानि षट्कञ्चुकपदेनोच्यन्ते। मायायाः सकाशाद् विश्वप्रसव इति नयेऽशुद्धविद्यया सर्वज्ञत्वं संकोच्य यत्किञ्चिज्ज्ञत्वरूपकार्यसंभारो मायाशक्तेरधिकारक्षेत्रेऽन्तर्भवतीति प्रकृतपद्योक्तार्थजातं विद्यातत्त्वाऽपरपर्यायासद्विद्यासहकारेण मायाशक्तिः करोतीति युक्तमुक्तं कविना स्तुतिकारेण कालिदासेनेत्यलमतिविस्तरेण ॥१९२॥

इदानीं शिवशक्त्योः शब्दार्थमयत्वोद्भावनपूर्वकं शब्दात्मिकायाः शक्तेर्निरूपणपूर्वकं शिवं निखिलप्राणिचक्रनगरीत्वेन रूपयन्नुत्प्रेक्षयन् वा शक्तिं गुहारूपेणोपमितां कुर्वन् गुणानुकीर्तनं स्तुतिरिति नीत्या शक्तिस्तुतिमाह—

> त्वं गुहा निखिलभावगूहनी
> भामयेन वपुषाऽवतिष्ठसे।
> यच्च यस्तव पतिर्गुहाशयः
> प्राणिचक्रमखिलं च यस्य पूः ॥१९३॥

अयि प्रकाशप्राचुर्यमन्तर्निलीय विमर्शात्मना स्फुरणशीले मातः! निखिलभावगूहनी गुहा त्वं भामयेन वपुषा अवतिष्ठसे, यथाखिलं प्राणिचक्रं तद् यस्य पूः, (एवंभूतो) यस्तव पतिः, (सः) गुहाशय इति पदयोजना।

निखिलभावानां गूहनी स्वस्मिन् स्थापयित्री रक्षिका वा त्वं गुहारूपाऽसि। गुहा च हृदयमेव। तच्चाहंरूपमित्यनेनैव ग्रन्थकृतोक्तं प्रथमविमर्शपञ्चमश्लोके—"हृद्गुहामभिलषन्नहन्तया" इति। दहराकाशो हृदयरूपो हृदय एवावस्थितः। तत्र ब्रह्म प्रकाशत इत्यौपनिषदाः। शब्दस्वरूपा परावाक्स्वरूपा शक्तिरिति शतशो वचनानि। यथा वायवीयसंहितायाम्—

शब्दजातमशेषं तु धत्ते शङ्करवल्लभा ।
अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः ॥ इति ।

शब्दस्य तेजोरूपत्वं स्मर्यतेऽभियुक्तैः—

इदमन्धंतमः सर्वं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥ इति ।

अहन्तया हृद्गुहामभिलषन्नित्यत्राहमो भावोऽहन्ता, अहमिति प्रकाशप्रतिरूपकमव्ययम्, ततस्तलन्तं रूपमन्यथाऽहत्तेति वैरूप्यं प्रसज्येत । अनुत्तरविमर्शलिप्योः समाहारद्वन्द्वेन सिद्धं रूपम् । अकारोऽनुत्तरलिपिः, हकारश्च विमर्श इति कामकलाविलासचिद्वल्ल्याम्—"अनुत्तरविमर्शलिपिलक्ष्यविग्रहा" इति । ऐतरेयेऽपि—"अ इति ब्रह्म तत्रागतमहमिति", तापनीयेऽपि—"कस्त्वमित्यहमिति होवाच । एवमेवेदं सर्वम् । तस्मादहमिति सर्वाभिधानम् । पर्यन्ते हंसः सोऽहमिति ब्रह्म भवति य एवं वेद" इति । अत एव परापञ्चाशिकायाम्—"अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः" इति । विरूपाक्षपञ्चाशिकायामपि—

स्वपरावभासनक्षम आत्मा विश्वस्य यः प्रकाशोऽसौ ।
अहमिति स एक उक्तोऽहन्तास्थितिरीदृशी तस्य ॥

इत्युक्तम् । अथ च विमर्शात्मिकायां शक्तौ अन्तर्लीनप्रकाशः स्वभावेन तिष्ठतीति भामयत्वम् । प्रचुरप्रकाशयुतत्वमेवात्र मयडर्थः, 'तत्प्रकृतवचने मयट्' इति सूत्रात् । प्राचुर्येण प्रस्तुतं प्रकृतम्, तदुच्यतेऽनेनेति प्रकृतवचनम् । न तु विकारावयवार्थे मयट् । अन्तर्लीनप्रकाशात्मकेन वपुषाऽऽकृत्याऽवतिष्ठसे स्थितिं धारयसि । केवलं चित्प्रकाशरूपस्य शिवस्य कर्तव्यकार्यमप्यानन्दात्मकविमर्शरूपया निभालयन्ती लोके लोकैर्विमर्शाख्यया प्रथसे । उभयोः शिवशक्त्योरुभयात्मकत्वमेव मनसि निधाय तन्त्रागमेऽन्यतरप्रयोगो न दोषायेति न विस्मर्तव्यम् । यच्चाखिलं प्राणिचक्रं तच्च यस्य पूः नगरमेवंभूतो यस्तव पतिः शिवश्चित्प्रकाशः, स गुहायां शेत इति गुहाशयः, अधिकरणे शेतेरिति ( ३।२।१५ ) पाणिनिसूत्रादच् । अनेन पद्येन जडाजडप्रकृतौ जडस्य संरक्षिका शक्तिः, अजडस्य रक्षकः शिव इति स्फुटं संकेतितम् । अत्र किं मूलमिति मृग्यम् । कृत्स्नं जगत् शक्तिमयमित्येवोक्तं न तु विभागेन । अथवा प्राणिचक्रवसतिरेव शिवस्य पुरीति कथनेन स्वयं च शिवस्य गुहाश्रयत्वेन जगन्नियामिका शक्तिरेवेति सर्वमनवद्यम् ॥ १९३ ॥

अथेदानीं मायाशक्त्या बहिर्भासितं बाह्यं जगत्, तदेव बिम्बतया परिकल्प्य तदाश्रितं प्रतिबिम्बं मानसमिति सर्वस्यापि प्रमातुरेतद्द्वयं बाह्यमानसभेदेन भासिष्यत इति शक्तिमाहात्म्यप्रदर्शनमुखेन शक्तिवैभवं विनेयजनेषूपदिश्य तेष्वप्यकृत्रिमभक्तिभावनोत्पादनाय तेन च बाह्याभ्यन्तरावभासनक्रमस्य सुखेनावबोधनाय मातृस्तुतिमारचयति—

भासितं जननि मायया वहि-
बिंम्बमेतदनुकारि मानसम् ।
मातुरेतदुभयं च विम्बितं
तावके वपुषि यद् द्वयं स्थितम् ॥१९४॥

हे जननि ! "इच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि" इति नीत्या जगत्सर्जनसंहार-स्वभावे ! मायया दुर्घटकार्यसम्पादिन्या ऐश्वर्यशक्त्या निमेषोन्मेषक्रियायां यथा जनस्य न कोऽप्यायासस्तथैव सृष्टिसंहारस्वभाववत्याः शक्तेः सृष्टिसंहारावनायाससाध्यावेव क्षणेनैव बाह्यान्तरतया तुलाकोटिरिव गतागतं भजेते। बहिर्भासितं बाह्यमित्याख्यया प्रथमानं जगद्विम्वम् । तदनुकारि मानसं प्रतिबिम्बात्मकम् । मनसोऽमूर्ततया ततो जातस्यान्तरत्वमिति ख्यापनेऽपि न दोषः । तदेवं सर्वस्यापि सकलप्रमातृतापन्नस्य जनस्य मायाभासितबाह्यजगदवलम्बेन बिम्बप्रतिबिम्बभावौ विम्बाश्रयमूलकौ भासिष्येते । तावके वपुषि तु यद् यस्मात् कारणादुभयमपि स्वभावभूतम्, तथापि पार्श्वपरिवर्तनवद् भासते । एकस्यैव हस्तस्य यथा पार्श्वद्वयमभिन्नतया भासमानमप्युभयं: पार्श्वयोरैक्या-पादनं लोकदृष्ट्या दुरवबोधमिव, तथैवात्रापि मन्तव्यमिति भावः । बाह्याभ्यन्तरयोः स्वभावभूततया स्वरूपदृष्ट्या न कोऽपि भेदो वास्तवः, सर्वोऽप्युपप्लवः स्वरूपाववोध-राहित्येनाप्रबुद्धभावनयैवेति कवेस्तात्पर्यम् । तत्रैष श्लोकः प्रभवति—

परीकर्तुं निजं तत्त्वं स्वात्मीकर्तुं तथोभयम् ।
एकीकर्तुं न किं कर्तुं विमर्शो जगति क्षमः ॥ इति ॥ १९४ ॥

इदानीं बिम्बप्रतिबिम्बभावस्य लोकोपयोगितया स्वच्छस्वातन्त्र्यचिदात्मनि तस्यानावश्यकत्वं प्रतिपादयन् विम्बप्रतिनियतप्रतिबिम्बसमर्पणात्मकव्यवहारस्योपेक्षैव श्रेयस्करीति वर्णयति—

वारिवह्निमुकुरादिषु स्फुटा
स्वच्छवस्तुषु कुमारि विम्वता ।
मन्त्रिता सह परिच्छदेन यत्
तेन बिम्बमनवेक्षितं तव ॥१९५॥

हे कुमारि ! "इच्छाशक्तिरुमा कुमारी" इति शिवसूत्रनीत्या इच्छाशक्तिरूपे ! कुमारीति कथने बहवोऽनुबन्धाः । कुं महामायाभूमिं मारयतीति परभट्टारकरूपमहा-योगिनः परभैरवस्य शक्तिः पराभट्टारिका कुमारीत्येव संबोध्या । वैधव्यवहारानुसारं कुमारी कन्या वा नोपभोगयोग्येति नान्यभोग्यत्वात् परभैरवस्यैवेयं भोक्त्री सहैकात्म्य-भावापन्ना शक्तिरेतत्पदसंबोधनीया स्यात् । त्यक्तसर्वसङ्गा उमानाम्नी कुमारी महेशाराधनपरेति पौराणिकमाख्यानमप्यस्याः प्रकर्षं द्योतयतीति सर्वमनुसन्धायोक्तं

कुमारि ! इति । वारिवह्न्यादिप्रतिबिम्बसमर्पकेषु स्वच्छवस्तुषु कस्यापि वस्तुनो बिम्बात्मकस्य प्रतिबिम्बं प्रतिफलति प्रतिच्छायेव । यत्र यत्र प्रतिबिम्बप्रतिफलनम्, तत्र सर्वत्रैव बिम्बसत्ताऽनिवार्यतयाऽपेक्षिता लोके । आदर्शः, खड्गः, रत्नस्तम्भादिर्यो यः स्वच्छतया बिम्बच्छायां गृहीत्वा प्रतिबिम्बं समर्पयति, स सर्वोऽपि परिच्छदरूपः । प्रतिबिम्बसमर्पकस्वच्छवस्त्वेव परिच्छदपदेनात्र गृहीतम् । नहि प्रतिबिम्बसमर्पकं किमप्येतादृग् वस्तु यन्मूर्तिमद् द्रव्यरूपं न स्यादिति मूर्तिमता द्रव्येण सह प्रतिबिम्बप्रतिफलनस्य मन्त्रिता, मन्त्रः परामर्शः सोऽस्यास्तीति, तस्य भावः, साचिव्यं व्यापकरूपेणोपक्षिप्तमनिवार्यतयाऽपेक्षितम् । अतः प्रतिबिम्बग्रहणे या हि बिम्बापेक्षा साहचर्यनियमोपक्लृप्ता दृश्यते, सा लोके कामं साधिका भवेन्नाम, किन्तु एषा साहचर्यनियमरूपपराकाङ्क्षा परतन्त्रता, असमर्थस्यासहायस्य, न तु समर्थस्य मनस्विनः । शक्तिः चित्स्वातन्त्र्येच्छारूपा प्रतिबिम्बार्थं बिम्बमपेक्षेतेति कल्पनमेव हास्यास्पदम् । अत एव त्वया बिम्बं तिरस्कृत्यैव प्रतिबिम्बनमङ्गीकृतम् । तव कृते बिम्बमनवेक्षितमनावश्यकम्, नियमपारतन्त्र्याङ्गीकाररूपकल्मषानाक्रान्तत्वाच्छक्तेः । स्वच्छातिस्वच्छचतुरस्रचिद्रूपप्रकाशमन्तर्भाव्य स्वातन्त्र्यानन्दनिर्भरा विमर्शशक्तिर्नहि बिम्बसव्यपेक्षप्रतिबिम्बनियमं सहेत । मुखं दर्पणे प्रतिबिम्बति दर्पणः कुत्र प्रतिबिम्बेदिति विचारक्रमे बिम्बसव्यपेक्षप्रतिबिम्बस्फुरणक्रम आपेक्षिकस्थूलमलिनास्वच्छादिप्रमेयात्मकजगत्येव प्रभुः, न पुनर्महाप्रकाशस्वरूपचिदानन्दमयपरप्रमातरीति बिम्बनियमः स्थूल उपेक्षणीय एवेति त्वया साधु कृतं तमुपेक्ष्येति ग्रन्थकर्तुरभिप्रायः । अत्रैते श्लोका भवन्ति—

> प्रतिबिम्बं च बिम्बेन बाह्यस्थेन समर्प्यते ।
> तस्यैव प्रतिबिम्बत्वे किं बिम्बमवशिष्यताम् ॥
> मत्त एवोदितमिदं मय्येव प्रतिबिम्बितम् ।
> मदभिन्नं जगच्चेति त्रिधोपायस्तु शाम्भवः ॥ १९५ ॥ इति ।

( म० प० पृ० १४८ )

इदानीं स्वप्नसंकल्पादौ बिम्बं विनापि प्रतिबिम्बबोधाद् बिम्बस्योपादेयत्वमल्पमिति प्रतिपादयितुं प्रक्रमते—

> **यत्स्मृतौ स्फुरति वस्तु बिम्बितं**
> **स्वप्नसंप्रथनकल्पयोश्च यत् ।**
> **बिम्बवर्जमिह तन्निदर्शनात्**
> **त्वन्निमग्नमुदितं जगत् त्वया ॥१९६॥**

अयं ग्रन्थः कालिकाशक्तिस्तुतिनिगर्भितः, क्रमदर्शनप्रस्तावपरिचायकतया तदर्थप्रस्फोरणसहायकश्चेति कृत्वा यस्मिन् पद्ये शक्तेः संबोधकं पदं वर्णमात्रादिच्छन्दोविवशतया नोपात्तं तत्रापि महाकालकलनदक्षायाः कालीशक्त्याः स्तुतिरेवेति संबोधनपदाध्याहारः समाराध्यप्रकृतदेवताप्रीणनायैवेति नात्ययः शिष्टाचारस्येति मनसि

कृत्वा यदि संबोधनपदं दीयेत, मन्ये कालीशक्तिश्रद्धालूनां विदुषामध्येतॄणां च संतोषाय न खलु द्वेषाय भवेत्। हे अम्ब ! "वागेवास्याः कारणं विश्ववृत्तेः" इति स्थित्या शब्दब्रह्मातीतपरब्रह्मस्वरूपे ! स्मृतौ यत्स्मृतं वस्तु तथ्यं बिम्बितं प्रतिबिम्बितं स्फुरति यच्च स्वप्नसंप्रथनकल्पयोः स्वप्नसंप्रथनं च संकल्पश्चेति तौ तयोः यत् स्फुरति तद् बिम्बवर्जमेव, संविदि अनाभासितं वस्तु न भासेत जाड्यापत्तेः। भासितं चाविच्छेदेनैव भासेत। संविदभेदरूपेति सर्वं संविन्मयमेव। संविदैव ग्राह्यग्राहकभेदोऽवभास्यते, अत आन्तरं बुद्धिसंज्ञं ज्ञानं भवेत्, यत्संवित्प्रमेययोर्मध्यवर्ति भवतु। अयं भावः—विरहिणः पुरुषस्य स्त्रिया वा संकल्पादौ बिम्बाभावात् तीव्रतरस्मरणादिनिमित्तकमान्तरं स्मरणं कान्ताप्रतिबिम्बावभासनं पुरुषप्रतिबिम्बावभासनं वा भवत्येव। एवमेव स्वप्नादौ बिम्बाभावेऽपि प्रतिबिम्बभानं जायते, अतो देवस्य शिवस्य ज्ञानेच्छाक्रियादयः शक्तयो विश्वप्रतिबिम्बने निमित्तकारणानि स्युरिति। अत एवोक्तं प्रत्यभिज्ञाविमर्शिन्याम्— "तत्र तु अर्पकादुपाधेस्तदाकारत्वम्, चित्तत्त्वस्य तु निजैश्वर्यात्" इति। स्वप्न-संकल्पादिदृष्टान्तात् प्रतिफलितं यत् शक्त्यैव स्वान्तर्मग्नं जगत् स्वेच्छयोद्ध्रियते, तत्रान्यस्य कर्तृत्वाभावादिति बिम्बापेक्षा नास्त्येवेति तात्पर्यम् ॥ १९६ ॥

अथेदानीं स्वप्नदृष्टस्यासदुक्तिसंभावनां निरसयन् कल्पनायाश्चापि मृषात्व-मपनुदन् गारुडमन्त्रजापोपशान्तविषोपप्लवदृष्टान्तमुखेन विनेयजनाभिमुखीकाराय शक्तिं विशिनष्टि—

**स्वप्नदृष्टमसदित्यसद्वचो**
**दिव्य एष यदिह प्रमाणितः।**
**कल्पनापि न मृषा फलं शिवे**
**यत् स्थितं गरुडभावनादिजम् ॥१९७॥**

हे शिवे ! शिवाऽभिन्नतया नामसाम्यप्रयुक्तशिवस्य सकलकार्यनिर्वाहक्षमे ! स्वप्ने दृष्टं प्रतिबिम्बदर्शनकार्यादि असदिति कथनं प्रामादिकमतथ्यम्। यद् यस्मात् कारणात्, एष क्रमो दिव्यः चित्स्वातन्त्र्यशक्तिनिजैश्वर्यप्रतिष्ठापितत्वात् शाक्तः, अतो दिव्य ऐशः, इहास्मिन् ग्रन्थे प्रमाणितः पूर्वोक्तपद्यैः। कल्पनाऽपि मानसी शक्तिर्मृषा भवितुं नार्हति। संकल्पविकल्पात्मकत्वान्मनस उपेक्षा न कस्मैचिदुदर्काय। मनसो निग्रहेण वश्यत्वमानीय तत्क्रियया निर्विकल्पावस्था प्राप्तुं शक्यते। मनोनिष्ठा चञ्चला शक्तिश्चिन्निष्ठतयैव भाति। तस्यासद्वृत्तीर्निगृह्य शुद्धप्रौढसंकल्परूपया तस्य प्रथम-वृत्त्या महान्तो महान्तः कार्यौघा निष्पाद्यन्ते। अतः कल्पनाऽपि व्यर्था नास्ति। गरुडमन्त्र-जपद्वारा स्वस्मिन् गारुडभावनाकरणेन विषापहाररूपं फलं यत्तत्र स्थितं निहितं गोपि-तम्, तत्तु प्रत्यक्षमेवेति तदपि व्यर्थमिति वक्तुं न शक्यत इति प्रोक्तनिखिलकार्यक्रमाः सत्या युक्तियुक्ताः, तानपलाप्य न किमपि साधयितुं शक्यत इति शुद्धचित्स्वातन्त्र्य-

शक्तेरेवेदं सर्वं विजृम्भणं चिद्रूपमिति भावयन् सर्वदा सर्वथा व्यवहर्तव्यमिति ग्रन्थकर्तुराशयः ॥ १९७ ॥

आत्मप्रकाशमयोऽयं विश्ववर्तिवेद्यवर्गोल्लास इति स्थिते सर्वमपि ज्ञानं चिद्रूपतया प्रमाणमिति कृत्वा पूर्वापरकालभेदेन देशाकारभेदेन च न तस्याप्रामाण्यं वक्तुं युज्यते। यदि पूर्वकालिकं ज्ञानं सदिति चेत्, पश्चात्कालिकेनापि तादृशेनैव भाव्यमिति व्यवस्थितः पन्थाः। ख्यातिशब्दो ज्ञानवाचकः। सा च ख्यातिः पूर्णापूर्णभेदेन भिद्यते। कल्पनाप्रसूतं निखिलं ज्ञानमित्येकत्र पूर्णत्वे निर्धारिते सर्वत्रैव निर्धारणीयमित्यापद्यते, घोषितचिद्रूपतापरिपालनमर्यादानुरोधात्। अर्थप्रकाशक आत्मैव प्राक् पश्चाद् वा निर्णेयः स्यादिति तर्कसाक्षिकं तथ्यं शिष्येभ्यः शिक्षयितुं मातुः स्वरूपनिर्धारणमुखेन तां स्तौति—

**ख्यातिरम्ब ! यदि याति पूर्णता-**
**मीदृगेतदिति कल्पनामयी ।**
**तत्तथेति हि विमर्श उत्तरो**
**नान्तरेति परिमर्दयोग्यताम् ॥१९८॥**

हे अम्ब ! स्वातन्त्र्यशक्तिबलेन विश्वसङ्कोचविकासशालिनि ! ख्यायतेऽनयेति ख्यातिर्ज्ञानम्। सैव सदसद्वस्तुपर्यालोचनद्वारा सत्त्वासत्त्वख्याति प्रकथयति। ख्यात्यख्यात्योः स्वरूपनिर्णयप्रसङ्गमापाद्योक्तं केनचित् सुधीशिरोमणिना—

अख्यातिर्यदि न ख्याति ख्यातिरेवावशिष्यते ।
ख्याति चेत् ख्यातिरूपत्वात् ख्यातिरेवावशिष्यते ॥ इति ।

ख्यातिर्यदि चिदैकात्म्येन प्रथमानं किमपि वस्तु ख्याति वक्ति, कथयति चेद् वस्तुनः ख्यातिरूपत्वे स्थिते पारिशेष्यात् ख्यातिरेवावशिष्यते। यदि वस्तु न ख्याति सा, तर्हि सैवावशिष्यत इत्युभयथा ज्ञानरूपतायाः शाश्वतत्वं निर्णीतप्रायम्। कल्पनामयी ईदृगेतद् इत्येतत्स्वरूपा ख्यातिर्यदि पूर्णतां याति, "द्रष्टैव हि ततो जगत्" इत्युक्त्या द्रष्टृजगतोरैक्यानुभवं प्राप्नोति, तर्हि तत्समर्थकं पश्चात्कालिकं ज्ञानं तद्विश्वं तथा परप्रमातृरूपमिति निश्चयः, अन्तः स्वरूपे परिमर्दस्योच्छेदस्य योग्यतां पात्रत्वं नैति न भजते। सर्वप्रमितिभागिनि निरन्तरप्रकाशस्वरूपे पुराणपुरुषरूपप्रमातरि यदि कश्चित् पृच्छेत् किं प्रमाणमात्मनि ? तर्हि प्रश्नकर्तुरेव प्रमातृत्वं संशयितं स्यात्। न च कश्चित् स्वात्मनि अप्रतिपन्नो दृश्यते। स्वात्मैव प्रमाता प्रष्टा चेति प्रश्नकर्तुरुन्मत्ततैव, तथैव प्रमाणानामात्मभूते परप्रमातरि स्वात्मनि प्रमाणापेक्षैव मूर्खतेति यथा, तथैव ख्यात्या पूर्वं निर्धारितोऽर्थ औत्तरकालिकेन ज्ञानेन 'तत्तथा' इति सुसमर्थ्य एव। नहि पूर्वज्ञानस्य उत्तरकालिकज्ञानेनोच्छेदः शक्यः कर्तुमिति ख्यातिरूपा त्वं विजयसे सर्वोत्कर्षेण वर्तसे इति। एतेन ज्ञानस्य पूर्णताप्रतिपादनमुखेन जगतोऽपि ज्ञानरूपता ग्रन्थकर्तुरभिमतेति द्योत्यते। पदार्थानां ज्ञानरूपत्वमेव, "नहि ज्ञानादृते भावाः केनचिद्विषयीकृताः।....ज्ञानरूपं ततो जगत्" इति देविकाक्रमवचनात् ॥१९८॥

इदानीं प्रतिबिम्बनमवभासनमात्रसारमेवेति निश्चितम्। अवभासनं च तत्तद्विषयग्राहकेन्द्रियानुग्राहकान्तःकरणाधिष्ठानायत्तम्। यतः संनिहितेऽपि दर्पणादौ यदि चक्षुरादीन्द्रियजातमन्तःकरणाश्रितं न जायते, मुखप्रतिबिम्बज्ञानं नैव जायते। चक्षुषि संक्रान्तं रूपं तदिन्द्रियसम्बन्धं विना नावभासते, तेन परिणामतः सिद्धं यत्पुरुषं विना एतज्ज्ञानकर्ताऽपि नास्ति। एतदेव तथ्यं प्रकृतपद्ये स्तुतिव्याजेन निदर्शयति—

**अस्ति तद्यदि धृतं जलस्थले**
**देवि! तद्वदनलार्कसोमयोः।**
**मारुते नभसि वा तदाकृति-**
**स्तत्कृतिं च कुरुते हि पूरुषः॥१९९॥**

हे देवि! दिव्यतेजोरूपे! तत्प्रतिबिम्बं यदि जलं च स्थलं च ते तद्रूपे धृतं निपतितं तद्वद् अनलश्चार्कश्च तयोः समाहारेऽपृथक्तयैक्यम्, ततो अनलार्कश्च सोमश्चेतीतरेतरयोगे तयोः समुपनिपतितम्, ततो वायौ आकाशे वा। वाकारश्चकारार्थे। तदेवं सूर्यसोमौ पञ्चमहाभूतानि च स्वच्छतया प्रतिबिम्बग्राहकाणि, यत्र तस्य बिम्बस्याकृतिराकारः प्रतिबिम्बति। रूपादयः प्रतिबिम्बिताः सन्तः स्वाधारोपाधिवैशिष्ट्येनैवाभासन्ते। यथा खड्गे दीर्घं दर्पणे वर्तुलं रत्नस्तम्भे पाददिशिरोपर्यन्तं विततं दीर्घं तत्प्रतिबिम्बनं जायते, तद्वद्विश्वमपि प्रकाशे प्रकाशमानत्वादितद्धर्मजातमाश्रयेत्। प्रकाशादभिन्नत्वे एव विश्वस्य प्रकाशमानत्वं स्यादन्यथा न किञ्चिदपि स्फुरेत्। प्रकाशाद्भिन्नत्वे जडस्य घटपटाद्यात्मकस्य विश्वस्य न प्रकाशः स्यादपि तु पराकाङ्क्षया, तदा पारतन्त्र्यमापतेदेव। अत एव सर्वमेवेदं प्रमेयं प्रकाशात्मनः शिवस्य शरीरीभूतम्। अत एवोक्तं प्रकृतपद्ये—"तत्कृतिं च कुरुते हि पूरुषः" इति। कृधातोर्ज्ञानमर्थः। पुरुषः शिवः, चित्प्रकाशपरमार्थस्तस्य प्रतिबिम्बनस्य कृतिं ज्ञानं निश्चयेन कुरुते। सर्वोऽपि प्रमेयवर्गश्चिन्निष्ठतयैव प्रकाशते, तस्य स्वतोऽसिद्धत्वादिति भावः॥ १९९॥

इदानीं कल्पना-धारणा-कालीदेवतातत्त्वानां स्वरूपवैगुण्ये महाननर्थः स्यादिति विनेयानभिमुखयन् मातरं स्तौति—

**कल्पना यदि मृषेति भाषिता**
**धारणा फलति केन हेतुना।**
**देवि! संकलनबोधजीविता**
**देवता किमिति कैर्न हीयसे॥२००॥**

हे देवि! चिक्रीडिषया जगदात्मना स्फुरणशीले! यदि कल्पना मृषा इति भाषिता। यद्यपि पूर्वं १९७ तमे पद्ये कल्पना मृषा नेत्यनेनैव ग्रन्थकृता कण्ठरवेणोक्तम्, तथाप्यत्र किमप्यपूर्वकथनतात्पर्येणोपक्रम्यते। चिद्रूपे स्फुटप्रकाशात्मनि प्रपञ्चोद्योते न कस्यचिद् मिथ्यात्वोपपादकादेश्छलस्यावकाश इति, वर्णेनाप्यनर्थकेन न भाव्यमिति

च उद्यनोद्घोषः शाक्तदर्शने। एवं च कल्पना सामर्थ्यरूपा वितथेति कथनमेव पूर्वापर-विचारकोटौ व्याहतमिव। कल्पनयैव पूर्वं वस्तु निश्चीयते, ततो निश्चिते वस्तुनि धारणा क्रियते। तदुक्तं योगसूत्रे पातञ्जले—"देशबन्धश्चित्तस्य धारणा" इति। कल्पनया ऊहापोहरीत्या निर्दुष्टे वस्तुनि चित्तं बद्ध्वा धारणयाऽऽराध्यस्य स्वरूपं निर्णीय साऽऽचर्यते। पूर्वस्य वैतथ्येऽस्या अपि नैरर्थक्यं सुतरां सिद्धम्। पूर्वोक्तयोर्द्वयो-र्निर्वहणे संकलनमेव बोधः। स जीवितमात्मा प्राणो वा यस्याः सा देवता कालीरूपा किम्? अर्थात् कलनबोधात्मा काल्यपि देवत्वरहितैवेति कारणमालया कैर्गुणैर्विभवैर्वा त्वं न हीयसे वञ्च्यसे, अर्थात् सर्वैरेव। इत्थमुक्तस्वरूपवञ्चिता त्वं कां दिशां देक्ष्यसि किं वोपकारं साधयिष्यसीति सर्वमन्धं तम एव स्यादिति कष्टावहं वर्त्म। अतो भङ्गि-भेदेन सर्वगुणयुक्तैव त्वमसि। नहि त्वयि पूर्वोक्तापहारकल्पना प्रभवति, कृत्स्न-जगत्स्वरूपत्वात्तवेति विशकलितार्थः॥ २००॥

इदानीं चित्सकाशादेव सर्वं जगदुत्पन्नमिति तथ्यं भङ्ग्यन्तरेण अभिदधन् कारणादेव कार्यमुत्पद्य पुनस्तस्मिन्नेव लीयत इति क्रमं किञ्चिद् व्युत्क्रमं प्राप्तमभिलक्ष्य शक्तिमुपालम्भप्रदर्शनमुखेनाधिक्षिपन् व्युत्क्रमक्रमं वर्णयति—

**तन्न जग्मुरुदधौ स्वयौक्तितो**
**विष्णुरात्मजमदर्शयच्चितः।**
**तातमम्ब तनयस्य शङ्करो**
**दग्ध एष हि बहिःक्रमस्तव॥२०१॥**

हे अम्ब! शिवस्वरूपाभिन्ने शिवे! चित इति पञ्चम्यन्तं पदमत्र पद्ये जग-त्कारणताद्योतनाय। चितः सकाशादुत्पन्नं विश्वमित्यध्याहारेण बोद्धव्यम्। उदधेश्चतुर्दश रत्नान्याविर्बभूवुरिति पौराणिकमाख्यानम्। चन्द्रोऽपि चतुर्दशेष्वन्यतमः। विष्णु-स्त्रिदेवेष्वन्यतमः प्रसिद्धो देवः। स समुद्रं तदात्मजं चन्द्रमदर्शयद् विज्ञापितवान् ज्ञातचर-मपि तं विशेषेण ज्ञापयामास। शङ्करः संहाराधिकृतो देवस्तनयस्य तातं पितरमत्रि मत-भेदेनात्मानमपि ज्ञापितवान्। अथवा शङ्करस्तनयस्य स्वात्मजगणेशस्य तातं भ्रातरं स्कन्दमपि कार्यकारणभावोलङ्घिनं जनकं प्रति सद्भावव्यतिक्रमव्यवहाराय भर्त्सयन् ज्ञापितवान्। अथवा शङ्करोऽष्टवर्गात्मकमातृकाणामीशं गणेशमहङ्कारं शिक्षितवान्। तन्नेति पदस्थे तत्पदे जातावेकवचनम्। तेन तौ ते इत्यर्थकं तत्पदमिति ध्येयम्। न तु चन्द्रः स्वपितरं समुद्रं गतो न वा शिव एव गणेशपिता विलयार्थं समुद्यतः। शिवे सर्वाणि तत्त्वान्यन्तर्भवन्ति, न तु शिवः कुत्रचिल्लयमेति। कथमेतौ कारणं प्रति लीन-भावस्योपलक्षकावित्याह—स्वयौक्तित इति। अयमाशयः—अद्वैतेऽत्र शाक्तदर्शने कार्य-कारणयोरभेदः। अतः कार्यं कारणादभिन्नमेवेति किमर्थं चन्द्रस्योदधिसकाशे गम-नायासः, शिवस्य वाऽन्यत्र कारणात्मनि चितिशक्तौ प्रयाणायासः? इति कृत्वा ते उदधौ न जग्मुरिति। द्विवचनस्यान्यत्रोल्लेखाभावाद् बहुवचनप्रयोगः सार्थक इत्येवं तव शक्ते-

रेष बहिःक्रमो बाह्ये जगति कारणं प्रति कार्यविलयक्रमो दग्धो विनष्टक्रमः क्रमातिक्रमणं गतः । हि निश्चयेन । अत्रेर्नयनसमुत्थं ज्योतिश्चन्द्र इति पौराणिकी कथाऽत्राऽनुसन्धेया । चन्द्रस्य त्रिनेत्रोद्भूतत्वमुक्तं हरिवंशे—"नेत्राभ्यां वारि सुस्राव दशधा द्योतयद् दिशः । तद्गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा ॥ समेत्य धारयामासुर्न च ताः समशक्नुवन् । स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः ॥ पपात भासयंल्लोकाञ्छीतांशुः सर्वभावनः ।" इति । एतेन चन्द्रस्त्रिनेत्रोद्भूत इति शिवस्य स्वात्मनो विज्ञापनमुचितमेव । वह्निनिष्ठ्यूतमैशं तेजः स्कन्द इति तद्विषयेऽपि रामायणम्—"ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् । अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः ॥ देवकार्यमिदं देव ! समाधत्स्व हुताशन । शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज ॥ देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः । गर्भं धारय वै देवि ! देवतानामिदं प्रियम् ॥ इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत । स तस्या महिमां दृष्ट्वा समन्तादवकीर्य च ॥ समन्ततस्तु तां देवीमभ्यषिञ्चत पावकः । सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ॥" इति । एवं स्कन्दोऽपि वह्नेस्तेज इति वह्नौ स्कन्दस्य समावेशप्रस्तावो न कुत्रापि श्रूयत इति कार्यकारणक्रमव्यत्यासः क्रमाधीश्वरीं प्रति बाह्यजगत्क्रमे क्रमोल्लङ्घनं प्रत्युपालम्भपात्रत्वं कवेः कल्पनायाः समुत्प्रेक्षणौचित्यम् ॥ २०१ ॥

इदानीं बाह्ये जगति दृष्टान्तद्वयमुपढौकयन् भूतकालिकं क्रमोल्लङ्घनं विस्मरन् विस्मारयंश्च वर्तमानभविष्यद्भ्यामेव सन्तोष्टव्यमिति विनेयानुपदिशन् मातृशक्तिं स्तौति—

**रूपमेष्यति हयाननं हरि-**
**गोंपसंज्ञमगमद् बहिः पुरः ।**
**तद् द्वयं च भजतां बहिः फलं**
**भावि चेन्न सदतीतमम्ब यत् ॥२०२॥**

हे अम्ब ! शिवशक्तिमयव्यञ्जनस्वरवर्गाष्टकाधीश्वरि ! हरिः श्रीकृष्णो हयस्याननं रूपमेष्यति ग्रहीष्यति, स एव च पश्चात् कृष्णावतारकाले गोपसंज्ञमगमदिति वहिर्बाह्यजगति पुरोऽग्रे जनसमक्षं पूर्वोक्तरूपद्वयमङ्गीकृत्य पुनश्चिद्धाम्न्यन्तर्भूय च चित्प्रवेशरूपपार्यन्तिककार्यकारणभावक्रममङ्गीकृतवान् । एतद् द्वयं भजतां चिदुपासकानां बहिः फलं मन्तव्यम् । च इत्यत्र न इति पाठे बाह्ये जगत्युक्तक्रमस्य फलं नेति काक्वा योजयित्वा फलमेवेत्यर्थः । यद्यतीतं सन्नेत्यसन्तोषः, २०१ पद्योल्लङ्घनस्मरणात्, तर्हि भावि भविष्यति २०२ पद्ये यत्सदिति सुसङ्गतं फलम्, तेन सन्तोष्टव्यमिति समाश्वासनम् । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति गीतोक्त्या हृदयं प्रतिष्ठास्थानम्, हृदयस्वरूपा शक्तिरिति पर्यन्ते चित्पर्यवसानेनावस्थेयमिति मतस्य श्रेष्ठत्वप्रकाशनार्थं पद्यम् ॥ २०२ ॥

इदानीं परमे व्योमनि चिदाकाशेऽक्षरस्वरूपायां चित्येव सर्वपर्यवसानमिति ब्रवीति—

अक्षरेऽम्ब परमे वियदृचो
यत्र यत्र सकला च देवता।
तन्न वेदयति चेदृचां फलं
तद्विदां तदिति हि स्फुटा श्रुतिः ॥२०३॥

हे अम्ब! स्वान्तरानन्दनिर्भरत्वात्करुणारससागरे! "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" (मु० उ० १।१३), "व्योम्न्यात्मा संप्रतिष्ठितः" (मु० २।६), "ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते॥" (श्वेता० ४।८) इत्येतैरुपनिषद्वचनैर्ज्ञायते यत् परमाकाशादपि सूक्ष्मा चिच्छक्तिः परमाकाशादप्यधिके सूक्ष्मे चिदाकाशे तिष्ठति। यदि परमाकाशचिदाकाशौ पर्यायौ, तथापि न नः कापि हानिः। व्योमनि परमे ऋग्रूपाश्चिच्छक्तयो देवतारूपेण देदीप्यन्ते। यदि चिच्छक्तिरूपा ऋचो न ज्ञातास्तर्हि तद्विदां वेदाध्यायिनां तदसदाचरणरूपं कर्म ऋचा सुस्पष्टतया प्रोच्यते। अक्षररूपा शुद्धाशुद्धभेदेन द्विधा व्याप्ता मातृकाशक्तिर्ज्ञातव्या ज्ञानात्मचित्स्वातन्त्र्यात्मा मातृकाशक्तिरात्मसात्कर्तव्या। यदि न क्रियते चेदत्र श्रुतिस्तु स्फुटोपदेशकरणान्निर्दुष्टा, पशुप्रमातैव प्रमादाधिक्यवशात् प्रमत्ततयाऽसदाचरणस्य दोषभागिति। श्रुत्यन्तरेणाप्येष एवार्थः स्फुटं निगद्यते—"इह चेदवेदीदथ सत्यमस्ति नो चेदवेदीद् महती विनष्टिः" (के० उ० ४।१३) इति। एवं परमव्योमनिवासिनीं मातृकारूपिणीं पराशक्तिमृग्रूपां ज्ञात्वा ध्यात्वा निदिध्यायैव च सर्वज्ञत्वसर्वकर्तृत्वरूपं ब्रह्मज्ञानमवाप्यते मुमुक्षुभिरिति पद्यार्थः॥ २०३॥

इदानीं चिदाकाशनिवासिनीं मातृकाशक्तिमुपास्य प्राप्ताधिकारमाहात्म्यान् देवनक्षत्रेशादीन् वर्णयति—

वह्निभानुशशिविद्युदातपं
ज्योतिरिङ्गणनभश्चरादयः।
याः स्फुरन्ति हृदयेऽपि सारवाः
तैस्तदम्बरगतैर्हि भूयते ॥२०४॥

हे परमेष्ठिनः शिवस्य हृदयभूते! वह्निरग्निः, सूर्यः, शशिश्चन्द्रः, विद्युत् तडित्, आतपः प्रकाशः, ज्योतिषि प्रकाशमये रिङ्गणाश्चलनशीला नभश्चरा जीवा देवगन्धर्वयक्षप्रभृतयः, याश्च हृदये हृद्देशनिवासिन्यः, अपिशब्दाद् बहिश्चराः प्राणिनिवहाः, सारं बलं तदुपयिकांश्च बलवतो जीवान् वान्ति प्रापणक्रमेण जानन्ति

मोचयन्ति वा सारवाः शक्तयः। 'वा गतिगन्धनयोः' इति धातोः कर्तरि विचि विश्वपावदाकारान्तशब्दः। तदेवं बाह्याभ्यन्तरचारिणो देवगन्धर्वशक्त्यादिसम्पन्नाश्चराचरव्यापाः प्राणिनस्ते सर्वे तत्तल्लोकनिवासशीलाः सन्तोऽपि सर्वाधारतया चिदाकाशगता एव विराजन्ते। यथा कश्चन ग्रामवास्तव्यो ग्रामाधिष्ठितोऽपि नगरप्रदेशक्रमेण राष्ट्रवास्तव्यः संन्नन्ते विश्वस्मिन् निवसतीत्यपि वक्तुं शक्यते, तथैव स्थावरजङ्गमात्मकाः सर्वेऽपि प्राणिनः काममूर्ध्वाधरभावेन स्थितेषु लोकलोकान्तरेषु निवसन्तोऽपि चिदाकाशस्था अपि वक्तुं युज्यन्ते। त्रिलोक्यां चतुर्दशभुवनेष्वपि वा निवसन् आब्रह्मस्तम्बपर्यन्तो जीवराशिश्चिदाकाशेश्वर्याः क्रोडाद् बहिर्नास्ति, न वा भवितुं शक्यत एव, तस्याः सर्वाधिष्ठानत्वात्। तदुक्तमजडप्रमातृसिद्धावुत्पलदेवेन—"यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते। जीवे निरुद्धा तत्रापि परमात्मनि सा स्थिता॥" इति। प्राणबुद्धिदेहेन्द्रियनियन्त्रिते जीवेऽर्थक्रियाकारित्वं यद्यपि, तथापि युगपदेव परमात्मन्यपि तदस्ति। परमात्मा शिव एव स्वेच्छयाऽणुत्वं जीवत्वं गृहीतवान्, अतो जीवस्य शिवाख्यपरमात्मनोऽभेद एव। शैवशाक्ताद्वैते द्वितीयस्य पारमार्थिकतयाऽसत्त्वात् तदतिरिक्तस्य सद्भाव एवासिद्धः। सिद्धसत्ताके वस्तुन्येवार्थक्रियाकारित्वम्, न तु परतन्त्रे। तस्माच्चिद्गगनचन्द्रिकायाः शक्तेः क्रोडे एव सर्वस्यावस्थितिरिति प्रेक्षावन्तः प्राहुः। अत एवोत्पलेन सम्बन्धसिद्धावुक्तम्—एवं च सति वस्तूनां चिन्मात्रवपुषा सताम्। मायानिर्मितभेदानामप्यैकत्वमदुर्घटम्॥" इति॥ २०४॥

अथेदानीं सप्तभिः पद्यैः स्मृतिस्वरूपनिरूपणमुखेन दृक्-स्मृति-अपोहन-रूपासु तिसृषु शक्तिष्वन्यतमरूपां स्मृतिशक्तिं स्तौति—

देशकालमवभासि यादृशं
यत्तयाऽनुभवितुर्विभेदिनः।
तत्तया सकलमीक्ष्यते स्मृतौ
मत्कृतस्मृतिमवेक्षते क्षणम्॥२०५॥

अत्र दृगित्यनुभवपर्यायः। सा च स्वप्रकाशा, अन्येन केनापि ज्ञानेन ज्ञेया नास्ति। यथा रूपज्ञानेन रसज्ञानं न संभवति तथा। अनुभवसंस्कारजा स्मृतिरिति सर्ववादिसंमतः पन्थाः। अनुभवश्च विषयेन्द्रियसम्बन्धादर्थात् संयोगादुत्पद्यते। तच्च विषयेन्द्रियसंयोगजं ज्ञानं भिन्नं भिन्नं जायते। अनुभवितरि पुरुषे विभेदात्मकं ज्ञानं येन प्रकारेण येन संबन्धेन प्रकारेण वा जन्यते, तदेव यत्, यस्य भावो यत्ता, तया यत्तया विभेदिनोऽनुभवितुर्देशकालविषयकं यादृशं ज्ञानं जायते स्मृतौ तेन प्रकारेणार्थात् तत्तया तस्य भावस्तत्ता तया। अन्यत्र प्रकृतिजन्यबोधे प्रकारीभूतं ज्ञानमेव भावपदेनोच्यते। यत्तदोर्नित्यसंबन्ध इति न्यायेन येन प्रकारणेत्यर्थे यत्ताशब्दः, अनुभवात्मके ज्ञाने येन प्रकारेण देशकालौ भासिष्येते, तेनैव प्रकारेण स्मृतौ सर्वमीक्ष्यते ज्ञायते ज्ञासिष्यते वा। नह्यनुभवं विहाय स्वातन्त्र्येण स्मृतिः स्वज्ञाने प्रभुः। तदुक्तमीश्वरप्रत्यभिज्ञाकारिका-

 

याम्—"अथानुभवविध्वंसे स्मृतिस्तदवरोधिनी" (१।१।३) इति। अनुभवध्वंसानन्तरं तमनुरुध्य जायमाना स्मृतिः। कोऽपि जनोऽनुभवज्ञानस्य पश्चात् क्षणं स्मृतिं प्रतीक्षते, अनुभवसंस्कारेण स्मृतेराविर्भावनियमात्। अवशिष्टं तृतीयं ज्ञानं विकल्पः। स च "सर्वो विकल्पः संसारः" इति नीत्या, "मातृकया संसारोत्पत्तिः" इति, मातृका च शब्दरूपा, अतः शब्देभ्यः, अर्थाद् वर्णेभ्य एव तत्तत्तत्त्वक्रमेण जगदाविर्भावान्नहि शब्दमन्तरा विकल्पः संभवी। विकल्पोऽपि शुद्धाशुद्धभेदेन द्विविधः। शुद्धविकल्पो नाणुं प्रतिरुणद्धि। स हि शक्तिस्वरूप एव। शुद्धविकल्प एव अविकल्पनिर्विकल्पशब्दाभ्यामनूद्यते। अनुभवात् स्मृतिरिति क्रमेऽनुभवे ध्वस्ते क्षणं प्रतीक्ष्य पश्चात् स्मृत्याऽनुभवमविकलं विकलं वा यथास्थिति लभेतेति भावः॥ २०५॥

इदानीं स्मृतेरुज्जीवनप्रकारमभिधत्ते—

**यद्यनङ्क्ष्यदनुभूतिरीश्वरे**
**सा स्मृतिस्तदितिना प्रथिष्यते।**
**संस्तवो ह्यनुभवस्मृतौ स्थित-**
**स्तत्क्षयेऽनुभव एव न स्मृतिः॥२०६॥**

ईश्वरे ईश्वरविषयकज्ञाने सम्पादनीये यदि अनुभूतिः दृक्, अनङ्क्ष्यत् नष्टाऽभविष्यत्, तर्हि तस्याः प्राक्तन्या अनुभूतेः पुनरासञ्जनं सेयमनुभूतिरिति विधिना करिष्यते। तदित्यत्र तच्छन्दे लिङ्गोऽविवक्षितः। तेनानुभवस्मरणे स एवायमिति, दृशोऽनुकरणप्रक्रमे सा इयम्, अनुभवात्मकज्ञानस्य स्मरणे क्रियमाणे तदितिना आसञ्जनं भवेदित्याशयेनाह—सा स्मृतिस्तदितिना प्रथिष्यते। नष्टस्यानुभवस्य स इति, स एवायमिति दर्शनान्तरप्रसिद्धानुव्यवसायात्मकं ज्ञानम्। किं वा तस्यैव प्रत्यभिज्ञानाम्नापि वेदान्तादौ व्यवहारः। तत् तदितिना क्रमेण तज्ज्ञानं स्मृतौ स्मरिष्यत इति भावः। हि प्रसिद्धौ। अनुभवस्य स्मृतौ स्मरणात्मनाऽऽसञ्जने कर्तव्ये प्रत्यभिज्ञात्मक एव संस्तवः परिचयः स्थितः प्रसिद्धो निश्चितः। अनुभवक्षये तदनन्तरं स्मृतिरेव नानुभवः। यदि तच्छब्दस्य पूर्वपरामर्शकत्वे तस्याः क्षये पुनः किमात्मकं ज्ञानमासञ्जनाय कर्तव्यमिति जिज्ञासा चेद् यथाश्रुतमेव चतुर्थचरणं पठित्वाऽर्थः करणीयः। स्मृतौ नष्टायां सत्यां पुनरनुभव एव भवेत्, न तु स्मृतिरिति। किन्त्वेषा पद्धतिर्नादृता न वादरिष्यते। अनुभव एव स्वतन्त्रः स्वप्रकाशो वा स्फुरति, ततः स्मृतिरित्येष एव क्रमः शास्त्रेषु चर्चितः। न हि नष्टां स्मृतिं पुनरनुभव उज्जीवयति। अपि तु स्मृतिरेव नष्टानुभवमिति, अनुभवसंस्कारमात्रजन्यत्वात्तस्याः। नह्यनुभवः स्मृतिसंस्कारज इति क्वचिदपि श्रूयते। "मत्तः स्मृतिर्ज्ञानमपोहनं च" इति गीतोक्तिस्तु ज्ञानत्रैविध्यस्य भगवत्कर्तृकत्वे प्रमाणम्, न तु स्मृतेरनुभवजनकत्वे इति ध्येयम्। गीतोक्त्या स्मृतेः स्वाभासरूपत्वाग्रहे प्रमाणं मृग्यं सुधीभिः॥ २०६॥

इदानीमनुभवस्मृत्योः स्वरूपनिरूपणस्फुटीकाराय पद्यान्तरं प्रस्तौति—

संस्मृतिः सदृशवस्तुबोधिका
दृष्ट एव विषयः स्मृतेतरः ।
दृक् शिवे विषयभानविग्रहा
तत्प्रथा स्मृतिरियं यदाहृता ॥२०७॥

हे शिवे ! क्रमदर्शनसर्वस्वे ! संस्मृतिः स्मृतिशक्तिर्दृक्शक्तिप्रयोज्यज्ञानसादृश्यबोधिका । सादृश्यं तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । अतोऽनुभव एव स्मृतेर्विषयः । विषयः क्षेत्रं देशो वेत्यर्थेऽप्यनुभवस्मृत्योः समानविषयकत्वमेव । स्मृतादितरः स्मृतेतरो दृष्ट ( अनुभवविषयः ) एवेत्यर्थः । शक्तिदृष्ट्या देशकालावेव तयोरैक्यव्यवधायकौ । दृग्भिन्नदेशे काले च जाता स्मृतिः पश्चात्काले स्मरति । आम्, उभयोरैक्यं प्रमातृदृष्ट्या भवेदेव । 'अहं प्रागन्वभूवम्, इदानीं स्मरामि' अत्रैक एव प्रमाता प्रागनुभूतस्येदानीं स्मर्त्यात्मारूढतयैव तयोर्ज्ञानादैक्यं सुघटम् । विषयस्य भानमेव विग्रहो यस्याः सा दृक्, अनेन दृशो विषयप्राधान्यम् । तदेव प्रथनं यस्यां तत्प्रथा तत्स्मर्त्री स्मृतिरियं या आहृता व्याहृता उक्ता । कालव्यवधानस्याल्पत्वेऽविकलं विषयं स्मृतिरुपस्थापयति, तद्भूयस्त्वे तु वैकल्यं स्वाभाविकम् । दृक्स्मृत्युभयरूपा त्वमिति शक्तेः स्तुतिरभिव्यज्यते ॥ २०७ ॥

अथेदानीं त्रिपुट्यात्मकस्य संसारस्येच्छाशक्तेरुन्मेषनिमेषाभ्यां सृष्टिलयौ भवत इति कालीशक्तेरिच्छात्मिकाया वैभवं स्वभावो वा कृत्यपञ्चकमिति व्याहरति—

द्रष्टृदृश्यदृशिलक्षणं जगत्
प्राक्स्मृतेस्त्वयि तदम्ब संहृतम् ।
उन्मिषत्यपि पुनस्तदुद्गमे
तल्लये निमिषति त्वदिच्छया ॥२०८॥

हे अम्ब ! कुलाधिष्ठात्रि ! दृशिरित्यत्र "इक्श्तिपौ धातुनिर्देशे" इतीक्प्रत्ययः । दृशिर्दृक् । द्रष्टा च दृश्यं च दृशिश्च लक्ष्यतेऽनेनेति लक्षतेः करणे ल्युट् । एतत्त्रिकमेव त्रिपुटीशब्देन व्याह्रियते । "त्रिपुट्यात्म जगत्", "सर्वो विकल्पः संसारः" इति नीत्या विकल्पात्मकमेव । तज्जगत् स्मृतेः प्राक् त्वयि संहृतं लीनमासीत् त्वदभेदेन स्वभावात्मना स्थितमासीत् । पुनः सृष्ट्युन्मुखत्वे तस्या उद्गमे स्मृतिशक्त्युदये उन्मिषति । अपिरेवार्थे । तस्याः स्मृतेर्लये तवेच्छया करणेन निमिषति लीयते । लये निर्विकल्पात्मके त्वयि तदपि लीयत इति सृष्टिलययोस्तवेच्छैव कारणम् । त्वं च स्मृतिशक्तिरूपाऽसि ज्ञानशक्तेरेव स्मृतिः, अपोहनमिति भेदद्वयम् । एतेन जगतो ज्ञानरूपत्वमपि स्फुटतयोपपादितम् । ज्ञानमेव परिवृद्धं ज्ञेयं स्वात्मन्यात्मसात्कृत्य प्रमातरि लीयत इति "ज्ञानरूपं ततो जगत्" इत्यायातम् ॥ २०८ ॥

इदानी दृक्स्मृत्योः शक्तौ लयक्रमं स्पष्टयन् शक्तेः स्वगोपनक्रीडैव दृक्स्मृत्योरस्तित्वनास्तित्वे इति द्रढयति—

**सा प्रमातुरिह जीवितं स्मृति-**
**र्यत्नतां प्रकटयत्यमुष्य या।**
**या च दृग् जननि निह्नुतेन ते**
**अप्युभे सह पुनर्विरूपताम् ॥२०९॥**

हे जननि ! इच्छया जगज्जननसंहरणरूपक्रीडाशीले ! इह जगति सा स्मृतिः प्रमातुर्जीवितम्। या अमुष्य प्रमातुर्यत्नतां प्रकटयति। या च दृग् सा ते। निह्नुतेन उभे अपि सह पुनर्विरूपतां प्राप्नुत इति पदयोजना।

इह विकल्पात्मके संसारे सा प्रसिद्धा पूर्वं महता कण्ठेन वर्णिता स्मृतिः प्रमातुर्व्यवहरणोद्यतस्य यस्य कस्यापि जीवस्य जीवितमात्मा प्राणाः। या पूर्वोक्ता अमुष्य प्रमातुर्यत्नतां प्रयासं प्रकटयति आभासयति। आभास एव वस्तुभूतः संसारः। आविर्भूते तस्मिन् जीवानामायासाः प्रारभ्यन्ते। या च दृक्शक्तिस्तस्या अपि सैव कथा। उभे अपि दृक्स्मृती तव निह्नुतेन गोपनेन, अपनयनेन वा "ह्नुङ् अपनयने" इत्यादादिकाद्धातोः क्ते प्रत्यये रूपम्। निह्नुतेन निह्नुवेन गोपनेन। उभे ते सहैव विरूपतां गच्छतः। दृक्स्मृती कालीशक्तेर्विलासरूपे। तस्या उदयास्ताभ्यां जगत् सृष्टिलयतां यातीति शक्तिस्तुतिर्व्यज्यते ॥ २०९ ॥

अथेदानीं दृक्स्मृत्योः सृष्टिस्थितिरूपतामुक्त्वाऽवशिष्टानां संहारनिग्रहानुग्रहाणां व्यवस्थापिकात्वं शक्तेर्निरूपयन् शक्तिस्तुतिमाह—

**दृग् विधत्त इह विश्वमम्बिके**
**तत्पुनः स्थिरयति स्मृतिस्तव।**
**तन्मिथोपनिहिता निषीदसि**
**त्वं तु योगतमसीत्यनाश्रिता ॥२१०॥**

हे अम्बिके ! पञ्चाशद्वर्णमातृकाचक्राधिष्ठात्रि ! इह जगति दृक्शक्तिर्विश्वं विधत्ते निर्मिमीते, तव स्मृतिः सृष्टं जगत् पालनेन स्थिरं करोति। तन्मिथोपनिहिता, मिथशब्दोऽत्राकारान्तः प्रयुक्तः, छन्दोभङ्गभयात्। सान्तमिथस्शब्दोऽन्योन्यरहस्यार्थकः। तयोर्मिथोऽन्योन्यमध्ये स्वात्मानं निधाय संहारनिग्रहानुग्रहाणां कृत्यानां व्यवस्थायै त्वं योगश्च तमश्चेतीतरेतरयोगद्वन्द्वः। योगेनेच्छानुग्रहयोस्तमसा च संहारस्य नियमनाय तिष्ठसे। जीवात्मपरमात्मनोरैक्यमेव योग इत्याख्यया स्वात्माभेदेनावस्थापनमेवानुग्रहः। "निग्रहोऽप्यनुग्रहायैव" इति वचनान्निग्रहोऽप्युक्तार्थत्वेन ग्रहीष्यत इति योगतमसी आस्थाय कृत्यद्वयं तमसो बाहुल्येन संहारं च कुर्वती निषीदसि सुखेन

स्वाभिन्नं कृत्यपञ्चकं निर्वहसि। स्वरूपतस्तु त्वं युगपदेव निश्चयेनानाश्रितरूपतया विराजसे। न आश्रितं कृत्यपञ्चकात्मकं जगत्कृत्यं यस्यां सा तथोक्ता। शिवस्याप्यनाश्रित इति नाम प्रथते। प्रलीनक्षोभात्मिका निस्तरङ्गमहोदधिकल्पा स्वात्मोन्मुखी विश्रान्त्यवस्थाऽनाश्रितेत्युच्यते। युगपदेव विश्वमयविश्वोत्तीर्णावस्थापन्नायाः किं दुष्करम्। अनाश्रितावस्थायाः प्रविभागशः परिज्ञानाय न कोऽप्युपायः प्रभुः। प्रक्रियात्मके हि पथि मतभेदेन व्याख्यानसंभावना गर्जति, अनाख्य-अनाश्रित-अनुत्तरादिशब्दबोध्यायास्तस्याः किं स्वरूपं कश्चोपायः परिज्ञानस्येत्यादिजिज्ञासायां मौनमेव वरम्। अत उक्तं केनचिन्मर्मज्ञधुरन्धरेण भक्ताग्रगण्येन—

अपरोक्षे भवत्तत्त्वे सर्वतः प्रकटे स्थिते।
यैरुपायाः प्रतन्यन्ते नूनं त्वां न विदन्ति ते॥ इति॥ २१०॥

इदानीं जगन्मय्यास्तदुत्तीर्णस्वरूपायाश्च देव्या भेदं पद्यान्तरेण प्रबोधयन् शिष्यबुद्धिवैशद्यफलकं पद्यं प्रस्तौति—

**सृष्टिपालननिरोधलक्षणा**
**रूपतां वहसि बिन्दुलक्षणा।**
**तद्विलक्षणपदा त्वमम्बिके**
**चिन्मयी पुनररूपमुच्यसे॥२११॥**

हे अम्बिके! परावाक्स्वरूपे। सृष्टिपालननिरोधा लक्ष्यन्ते यया सा तथोक्ता बिन्दुलक्षणा त्वम्। पारमार्थिकमूलप्रकृतेरविभक्ताऽन्तर्मुखी या सत्ता, सा सृष्ट्युन्मुखत्वे ततो निष्क्रम्य तरङ्गमूलभूतप्रेरकमारुतव्याप्तसमुद्रक्षोभजन्यस्थूलत्वलाभाद् घनीभूततया बिन्दुतां लभते। स च बिन्दुरनादिशुभाशुभकर्मप्रवणप्राणिचक्रादभिन्न इति मन्यते। तस्मादेव कालक्रमेण पुनस्त्रैविध्येऽपरबिन्दु-नाद-बीजक्रमेण सृष्टिविधिर्विकसितः बिन्दोः सकाशाद्द्रवस्तेन च महदादिपृथिव्यन्ततत्त्वनिवह इति। शक्तिसङ्गमतन्त्रानुसारं कुण्डलिनीशक्तिरेव काली। सा स्वबिम्बं प्रेक्षमाणा मायात्वेन रूपान्तरिता मानसिकं शिवं भर्तृरूपं सृष्ट्वा तेन समं चिरमरमत। तयोराश्लेषादुत्पन्नेन बिन्दुना काऽपि मानसी शक्तिः परात्पररूपा महाकालीसंज्ञया लोके प्रसिद्धाऽभवत्। एतत्सर्वमभिप्रेत्योक्तं बिन्दुरूपा रूपतामाकारवत्तां वहसि धारयसि। तथोक्तया तयैव प्रपञ्चप्रवाहः प्रासरदिति वक्तुरभिप्रायः। अन्तर्मुखतया तस्माद्विलक्षणं भिन्नं पदं स्वरूपं यस्यास्त्वं चित्प्राचुर्या चिद्रूपा जाता। अस्यां परिणतौ पुनररूपं यथा स्यात्तथा लोकेऽभिधीयसे। एतेन सरूपारूपभेदेन द्विधा भूता त्वं क्रमतयाऽक्रमतया चैकदा एव भाससे। तेन साधारणबुद्ध्याऽसंलक्ष्यगतिका दुरूहतयाऽसंवेद्या पुण्यविकलैरिति महामहनीयेति काल्याः स्तुतिः॥ २११॥

अतः परं सृष्टिप्रलययोः प्रमातुर्भोक्तुर्जीवस्य का स्थितिरासीदस्ति चेति भेदं प्रस्तुवन् मातरं स्तौति—

**भोग्यभोक्तृमयगा विमर्शगा**
**देवि मां चिदुदरे दृढां दशाम् ।**
**आर्पयदनलसोममिश्रण-**
**स्त्वद्विमर्श इह भानुजृम्भणः ॥२१२॥**

हे देवि ! स्वीयसहजतेजोभिः प्रकाशशीले ! सृष्टेः प्राक् स्वरूपदशायां भोग्यभोक्तृमयदशां स्वस्मिन् विलाप्य स्थिता त्वं स्वस्वाभाविकचिद्घनविमर्शात्मकस्वरूपमास्थाय मां जीवमणुं चिन्मये स्वोदरे हृदि दृढां निश्चलां शोकसंतापरहितां दशां स्थितिम्, आर्पयत् दत्तवती आसीः । इह सृष्टौ जगति अनलसोमाभ्यां मिश्रणो मिश्रितः, भातीति भानुः सूर्यः, तस्य जृम्भा प्रसारो यस्मिन् स तव विमर्शः सर्वाकारयोगित्वरूपस्तव उल्लासः, दृश्यते अनुभूयते ।

अत्रेदमाकूतम्—पुरा प्रलयदशायां जीवाः स्वाचरितशुभाशुभकर्मसंस्कारसमवेताः शक्तिसामीप्यं गताः सुखदुःखमोहादिविरहिताश्चिदाकाशे लीना आसन् । जातायां तु सृष्टौ "वागेव विश्वा भुवनानि जज्ञे" इति श्रुत्या वाचः सकाशादेव सृष्टिर्जतेति सिद्ध्यति । तत्र वर्णाः केचन सौराः स्वरादयः, केचनाऽऽग्नेया ऊष्माणः, केचन सौम्याः स्पर्शादयः, तेषामेव सहयोगसंयोगबलेन—"अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः । हकारोऽन्त्यकलारूपो विमर्शः परिकीर्तितः ॥" इति सङ्केतपद्धतिदिशाऽकारहकाराभ्यामेव वर्णा समुत्पद्यन्ते । तैश्च तत्त्वकलाभुवनादिरूपवाच्याध्वनः प्रसारः अकारादिस्वरवर्णेभ्यो वर्णपदमन्त्ररूपवाचकाध्वनो विकास इति षडध्वमयं जगत् प्रकाशविमर्शाभ्यामाच्छुरितं समुल्लसति । अतः सृष्टिदशायामेते सूर्यसोमानलाः सृष्टिकलाविकासकाः । तेऽपि त्वदुज्जृम्भणावलम्बिता इति वर्तमानजगदवभासनमपि त्वदिच्छापरिकल्पितमेव । अन्तःस्थितवतां भावानां बाह्यावभासनसारैव सृष्टिरद्वैतशाक्तसम्प्रदाये । सृष्टिप्रलययोरिच्छैव चित्स्वतन्त्रस्वच्छन्दा स्वयं निमेषोन्मेषनिष्पादनक्रमेण संघटयति विघटयति चेत्यत्रत्याऽनुभूतिः पूर्वावस्थातो भिन्नेति वर्णोपादानिका सूर्यसोमानलात्मिका भिन्नभिन्नावभासदर्शनक्लेशावहा विलसतीति पर्यन्ते कल्पितकार्यकारणात्मिका । वस्तुगत्या तु चित्संवित्स्वतन्त्रा सती स्वेच्छया तत्तद्घटपटादिरूपेण स्फुरिता प्रतिभातीति युक्तमुक्तं तन्त्रागमवाङ्मये—

निरुपादानसंभारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ इति ।

कलाभिः श्लाघ्यत्वं जगच्चित्रकर्तुः शिवस्य तदभिन्नायाः शक्तेर्वेति नात्र सामग्रीसंभारसंग्रहार्थः कोऽपि प्रयास इति दिक् ॥ २१२ ॥

इदानीं दृष्टिरेव सृष्टिः, सृष्टिरेव दृष्टिरिति वादं विनेयजनबुद्धिविनयनाय प्रस्फोरयन् पूर्वं लयात् सृष्टिविकासक्रम उक्तः । अत्र सृष्टेः प्रलयक्रमः समुपदिष्ट इति सूचयन् मातरं स्तौति—

**दृष्टिरूपमिदमम्ब भावितं**
**स्थेमरूपकरणांशुभिर्जगत् ।**
**स्यादनाख्यमनिकेतयुक्तित-**
**स्तत्पुनर्लयमनेन चात्मना ॥२१३॥**

हे अम्ब ! "वागेवास्याः कारणं विश्ववृत्तेः" इति न्यायप्रतीकभूते ! स्थेम स्थायि, रूपमिति तदुपेक्षितविषयिवस्तु गृह्यते, वस्तुन आकारादितदुपयोगिदेशकालानुकूलगुणादयश्च ग्राह्याः, करणानि विषयग्राहकाणीन्द्रियाणि, तेषामंशुभिः प्रकाशैर्भावितं भावनया सह तद्रूपगुणादीनामनुभवस्तद्विषयीकृतं दृष्टिरूपं ज्ञानरूपमिदं पुरोवर्ति जगत् । एतेन सृष्टिभावनाविषये—"ज्ञानादृते नार्थसत्ता केन चिद्विषयीकृता ।''''ज्ञानरूपं ततो जगत्" इति मतं पोषयन् ज्ञानरूपत्वं जगतः स्पष्टीकृतं ज्ञातव्यम् । कः पुनः प्रलय इत्यत आह— अनिकेतयुक्तितः तत्तद्वस्तुप्रकाशनाश्रयरूपस्थूलदृश्यापनयनमेव युक्तिरुपायः, ततोऽनेनायमहमिति प्रतिवचनीभूतसमुपस्थितपिण्डरूपचेतनाधिष्ठित आत्मा, तेन सह तत्पूर्वानुभूतं जगत्पुनरनाख्यमिति दशामधिगतं स्यात् संभवेत् । पुरो वर्तमानदृश्यवस्तुकलापस्येच्छयाऽन्तर्धानेन केनापि नामरूपात्मना वक्तुमनर्हं भवेदितितत्संभावनैव प्रलयस्थितेर्वर्णनं वाचिकम् । इह सृष्टिप्रलयौ बुद्धिवृत्तिवेद्यतया बौद्धावेव ॥ २१३ ॥

अधुना स्वेच्छया गृहीतपशुभावायाः शक्तेर्गमकं बिन्दुं प्रतिपादयन् मुद्रादेरनावश्यकत्वोपपादनसरण्या मातृवैभवं प्रशंसति—

**अक्षमूलपशुभेदविग्रहा**
**न्यायसंभृतिहृतार्धरूपिणी ।**
**त्वत्पदे ग्लपितकल्पने लयाद्**
**भाति बिन्दुरिति किं नु मुद्रया ॥२१४॥**

हे अम्ब ! अनुपादानेऽपि स्तुतिप्रकरणतया तदौचित्यात्, स्वरसोदितपरावाग्रूपे ! पशुपरमात्मनोरिन्द्रियसापेक्षनिरपेक्षतया ज्ञाननिष्पादनमेव भेदकम् । अक्षाणीन्द्रियाणि तान्येव मूलं पशुपरमात्मनोर्भेदे । तत्पशुत्वं शक्त्या स्वेच्छयैव गृहीतम्, प्राप्तकामायास्तस्याः सृष्टिकार्ये निमित्तान्तराभावात् । अक्षमूलपशूनां भेदो विभेदो बहुत्वं विग्रहः शरीरं यस्याः, त्यागो हानं संभृतिरादानं हानादानाभ्यां हृतं विभक्तमर्धरूपं यस्याः सा तथोक्ता । यद्यपि गीतायामेकांशेन कृत्स्नमिदं जगद् विष्टभ्याहं स्थित

इत्युक्तम्, अत्र तु जगतो हानादानाभ्यामर्धं तस्या रूपं हृतं भवतीत्युक्तम्, तथापि तत्र शक्तेः प्रसङ्गे प्रकृतिरेव निर्दिष्टा, कण्ठरवेण भगवता प्रोक्ता च—"मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्" ( गी० ९।१० ) इति। नहि तत्र कापि चित्स्वरूपा शक्तिर्जगत्कर्त्री स्वीकृता। तत्र तु सर्वं भगवतैव क्रियते—"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना" (९।४) इति। अत्र तु चिच्छक्त्या करणेन जगदाविर्भाव्यते। शिवस्तु प्रकाशमात्रशरीरः स्वातन्त्र्यरहितः किमपि करणेऽप्रभुरिति कृत्वा कर्तृत्वं शक्तिनिष्ठमेव। महाकालस्य स्वाभिन्ना शक्तिर्महाकाली अर्धार्धभागेन प्रकाशविमर्शाभ्यां विभज्य कार्यं निर्वहति। अतः पशुस्वरूपग्रहणेऽर्धं तस्या अपहृतं भवेच्चेद् नाश्चर्यं मन्तव्यम्। इदं सर्वं शास्त्रविवृतिमूलकं पशुजनकल्याणाय। वस्तुगत्या तु बोधस्वातन्त्र्ययोर्यामली स्थितिः क्षणमपि वियुक्ता न भवति। केवलं पशुसकलप्रमातृसन्धानेन षट्त्रिंशता तत्त्वैः स्फूर्तिः स्वीकृता। लयक्रमे लयाद्धेतोः ग्लपिता क्षीणहर्षा कल्पना यस्मिंस्तत्तस्मिन् तव पदे, पदमत्र स्थानं न तु चरणौ, लीनावस्थायां व्यापकतया तत्सत्ताया अनुमानात्। व्याप्नोति सर्वं जगदित्यर्थेऽत्र बिन्दुः, न तु वेत्ति विन्दत्यर्थं। अत आह—बिन्दुरिति कृत्वा भाति प्रकाशते। यदि व्याप्तिमूलकतयैव त्वत्सत्ताऽवगम्यते, तर्हि काऽऽवश्यकता मुद्रादीनाम्? धाममुद्रावर्णकलासंविदिति पञ्चापि प्रकाराः शक्तिसत्तोद्गमका उन्नायकाः स्वीक्रियन्ते। तत्र करङ्किणी-क्रोधनी-भैरवी-लेलिहाना-खेचरीति मुद्राणां पञ्च प्रभेदा मुख्याः। काय-कर-वाक्-चित्तभेदेन मुद्रायाश्चातुर्विध्येऽपि खेचर्या एव परिवारभूता अन्याः सर्वा मुद्राः। तदुक्तं जयरथेन विवेके—

एकं सृष्टिमयं बीजमेका मुद्रा च खेचरी।
द्वावेतौ यो विजानाति स वै पूज्यः कुलागमे॥

प्रकाशरूपबिन्दुनैव सर्वव्यापिकायास्तव स्वरूपे ज्ञाते सर्वेष्टसिद्धेरन्यप्रकारान्वेषणप्रयासो व्यर्थ एवेति तात्पर्यम्॥ २१४॥

अथेदानीं शक्तेर्मन्त्ररूपत्वप्रसिद्धौ हेतुमुद्भावयन् विनेयजनोपदेशद्वारा शक्त्युपासनस्य महत्त्वं प्रयोजनवत्त्वं च प्रतिपादयन् मातरं स्तौति—

**या दशासु निखिलासु सर्वथा**
**सर्वतः स्फुरति चित्परा सकृत्।**
**गुप्तभाषितजगद्विजृम्भणा**
**मन्त्रतां भजसि तत्त्वमम्ब सा॥२१५॥**

हे अम्ब! प्राणिहिताय जगदात्मना स्फुरणशीले! या प्रसिद्धा परा चित् 'परास्य शक्तिर्बहुधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इतीच्छाज्ञानक्रियासंघट्टरूपा नैसर्गिकी शक्तिः सकृत् नित्यम्, "सकृद्विभातोऽयमात्मा" इत्यत्रायमात्मा एकवारं विभातः प्रकाशितः सोऽद्यापि प्रकाशते, न द्वितीयवारस्य प्रयोजनमाजगामेति कृत्वा सकृच्छब्दो नित्यार्थकः कल्प्यते। निखिलासु दशासु सर्वप्रकारेण, सर्वस्मै इति सर्वतः,

चतुर्थ्यन्तात्तसिः, सर्वजनहिताय स्फुरति। स्फुरणं नामरूपात्मनाऽवभासनम्, "जगद्रूपं ततो द्वयम्" इत्यभियुक्तोक्तेः। 'मन्त्रि गुप्तपरिभाषणे' इति धातोर्मन्त्रशब्दो निष्पन्नः। शिवेन सह यद् गुप्तं भाषणं "लोकहिताय जगदवभासनं कुर्यामित्यात्मकं सम्मन्त्रणम्, तदेव जगद्विजृम्भणं जगदवभासनं यस्याः, "स भूरिति व्यावहरत् स भूमिमसृजत्" इत्यत्र मानससंकल्परूपोक्तशब्दप्रयोगरूपं भाषणम्। या स्फुरत्ता सैव जगदिति शैव-शाक्तसमाम्नायः। तत् तस्मात् कारणात् त्वं मन्त्रताम्, मननात् त्रायत इति मन्त्र-स्तद्धर्मताम्, भजसि अलङ्कुरुषे। यत्त्वं गुप्तमन्त्रणां कृत्वा जगदाविश्चकार, आविष्कृते च जगति विविधमनोरथसिद्धये जनानां तव मननं मननोत्पन्नतोषात्तेषामभीष्टसाधन-मिति त्वया सह साधकानां रागात्मकः सम्बन्ध इत्येतत्सर्वोऽपि स्तुत्यस्तोत्रस्तावक-क्रमो जगत्स्थित्यनन्तरमेव। तदभावे त्वं मन्त्ररूपेति को जानीयात्? कथङ्कारं त्वां भजेत। जगत्प्रतिष्ठापिकया त्वया सुमहदुपकृतमिति स्तुत्या त्वमिति तात्पर्यम् ॥२१५॥

साम्प्रतं वह्निसूर्यौ प्रकाशकरौ यत्र तत्र विन्यस्य स्वयं शक्तेरेव वैभवं जगति विराजत इति वक्तुमुपक्रमते—

**अक्षिमात्रविसरच्छिखं शिवे**
**वह्निमुग्रमुदरे वितन्वती।**
**ग्रस्तकालतनुभानुमत्कला**
**स्वोदये दिशसि शक्तिजृम्भणम् ॥२१६॥**

हे शिवे! कल्याणपरम्परावितरणशीले! अक्षिमात्रे नेत्रे विसरन्ती प्रसरन्ती शिखा अर्चिर्यस्य तं वह्निमग्निम्। कथंभूतम्? उग्रं दुर्लङ्घ्यं तेजो यस्य तं तथोक्तम्, उदरे जठरे वितवन्ती नियमयन्ती। ग्रस्तोऽसौ कालस्तेन तनुः कृशो निस्तेजा भानुमतः सूर्यस्य कला यया सा तथोक्ता। लोके त्रयस्तेजोवन्तोऽग्निसूर्यचन्द्राः। तत्र चन्द्रस्तु सूर्य-तेजसैव प्रकाशं लब्ध्वा प्रकाशत इति नाम न गृहीतम्। अवशिष्टयोर्द्वयोर्नियमनं तेन तेन प्रकारेण कृत्वा त्वं स्वस्योदये आत्मनः प्रकाशेऽवशिष्टे शक्तेर्जृम्भणम्, स्वस्य वैभवं दिशसि उपदिशसि, लोके समुद्घोषयसि। सूर्यो हि अस्तं गच्छन् स्वं धामाग्नये समर्प्य गच्छति। उभावपि पर्यायेण दिनरात्र्योः प्रकाशं कुरुतः। इयं शक्तिस्तु रात्रिन्दिवमनारतं प्रकाशत इत्यस्याः प्रशस्तिः। अत आह रहस्ये—'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति॥" (६।१४) इति ॥ २१६॥

अथेदानीं सकलप्रमाताऽस्मदादि सदृशः साधकः शाश्वतानन्दविश्रमभूमौ लयाय प्रार्थयमानः शक्तिमातरं स्तौति—

तत्र ते सदसदर्थशून्यता
निर्वृतिर्जयति यत्र विश्रमः ।
मातृतत्करणगोचरोज्झिता
काल्यकालमनु तल्लयोऽस्तु मे ॥२१७॥

हे अम्ब ! अघटमानघटनापटीयसि ! माता सकलप्रमाता सर्वोऽपि जगज्जायमानो जनश्चैतन्यप्रयोगचतुरः । तस्य करणानि त्रयोदश, तेषां गोचरा विषयास्तैरुज्झिता रहिता प्रमात्रिन्द्रियविषयक्षमताबहिर्भूताः सन्तश्चासन्तश्च येऽर्था भावास्तैः शून्यता रिक्तता, एवंभूता निर्वृतिः सुखमानन्दो जयति सर्वोत्कर्षेण वर्तते अतः स शरण्यो यत्र ते तव चिच्चक्रेश्वर्या विश्रमः स्वरूपेणावस्थानतया केवलं चिदानन्दयोः प्राचुर्यानुभवः, एतादृशो निकेतः पुरुषार्थतया सर्वेषां स्पृहणीयः, सर्वपाशापहान्या विश्वमायानिवृत्त्या च चिदानन्देच्छाज्ञानक्रियाशक्तिसामरस्यास्पदत्वात् । कालो जगद्भक्षकः प्रसिद्धः, तस्मादनपेतः काल्यः, अनपेतार्थे बाहुलकाद्यत् । प्रसिद्धजगद्भक्षककालादभिन्नः प्रारब्धकर्मभोगादनन्तरं देहपातानन्तरं सर्वेषामनुग्राहकः, काल्यो यः कालस्तमनु तत्पश्चात् तत् पूर्वोक्तस्पृहणीयतायाः कारणात् प्रार्थये तत्र मे साधकजीवस्य लयो लीनता जीवनावसानप्राप्तिः, अस्तु भवतु, प्रैषायां लोट् । मातृतत्करणगोचरोज्झिता सदसदर्थशून्यता रूपा निर्वृतिर्जयतु ॥ २१७ ॥

अथेदानीं शिवस्याक्रमत्वमपेक्ष्यैव शक्तेरक्रमत्वमिति प्रतिपादयन् पञ्चधा प्रसृतं कलनशब्दार्थं निरूपयन् कालस्यापि कलयित्रीं कालीशक्तिं स्तौति—

क्षेपमम्ब वितनोति संख्यया
तद्‌ग्रहश्च सहसा परत्रये ।
अक्रमः स खलु काल ईश्वरे
प्रत्यमुष्य भवती च काल्यसौ ॥२१८॥

हे अम्ब ! कालग्रासकारिणि ! तत्र कालकालीशब्दयोरर्थावगमाय कलनपदार्थावगमः परममपेक्षित इति कृत्वा प्रथममत्र तदेव व्याख्यातुं प्रयस्यते । 'कल किल बिल क्षेपे, कल गतौ, कल संख्याने, कल शब्दे' इति धातुचतुष्टयस्य पञ्चार्थाः सम्पद्यन्ते— "क्षेपो ज्ञानं च संख्यानं गतिर्नाद इति क्रमात्" इति । तत्राकुलशिवस्य कौलिकी शक्तिर्विश्वावभासनाय स्वातन्त्र्याख्यस्वीययेच्छाशक्त्या स्वात्मनो भेदं कृत्वा भिन्नान् प्राणिनः शुद्धये यद्बहिरुल्लासयति तदेव क्षेपः । बहिरुल्लासितस्यार्थाद्भेदितस्याविकल्पकतया स्वाभेदेन परामर्शो ज्ञानम् । भेदितस्य प्रमातृप्रमेयाद्यर्थस्य इदं नेदमिति प्रतिनियततयाऽवस्थापनाद्धेतोः संख्यानं विकल्पः । गतिश्चात्र प्राप्तिः । तद्भेदितोऽर्थः संविल्लक्षणं स्वरूपमारोहति प्राप्नोतीति स्वरूपारोही, तस्य भावस्तत्त्वम् । न चैतद्

भेदप्रधानम्, अपि तु प्रतिबिम्बवद् भेदाभेदप्रधानम्। प्रतिबिम्बं बिम्बादभिन्नमपि भिन्नतयैवावभासते, यथाऽनात्मनि प्ररूढात्मभावस्यात्मन्यात्माभिमानो न प्रथमतो दृढसत्ताकः, अपि तु भेदसहिष्णुरेव। स्वात्मपरामर्शो नादः। यदि स्वात्मपरामर्श एवाहमित्यात्मकः शिष्यते, तर्हि क्षेपादिचतुर्णां परित्यागोऽर्थाज्जायते। अविकल्पकं ज्ञानं विलोप्य एते भावाः संवेद्यन्ते। किं बहुना, कलनाऽनाक्रान्तं किमपि स्थानं वस्तु वा जगति नास्ति, न वा संभाव्यते। किमर्थं सा क्षेपं कुरुत इत्यत आह—संख्ययेति। संख्या विकल्पस्तया, "अयं मत्तः पृथक् स्यात्" इति संकल्पात्मकः शब्द एव विकल्पः। तेन क्षेपं पृथक्करणं वितनोति बुद्धिपूर्वकं करोति। एतद्विकल्पात्मकक्षेपक्रियाया ग्रहो ज्ञानं चावशिष्टेषु त्रिषु ज्ञानगतिनादेषु सहसा जायते। प्राणिनां स्वस्वरूपात् पृथक्करणानन्तरं जायमानज्ञानगतिनादेषु भेदबुद्धेरेव प्राधान्यमितिध्येयम्। एक-स्याद्वयस्य तत्त्वस्य शिवशिवाख्यस्य क्रमाक्रमज्ञानं सकलप्रमातृतात्पर्येणैव। न तु स्वरूपे तज्ज्ञानस्य कोऽप्यवकाशः। अत आह—ईश्वरे स कालः क्रमवान् अनपेक्षित इत्यतः स अक्रमः, खलु निश्चयेन निर्णीयते निर्णीतप्रायश्च। अमुष्य शिवस्याभेदं क्रमराहित्यमभिलक्ष्याऽसौ प्रसिद्धा क्रमस्वरूपा काली कलनस्वभावा एतन्नामिका च भवती प्रकाशनात्माऽप्यक्रमैवेति लोके व्यवहारः। 'अमुं प्रति' इति वक्तव्यत्वेऽमुष्य प्रतीति कथनं शिष्टप्रयोगात् सोढव्यम्। क्रमरूपापि त्वं शिवमपेक्ष्याक्रमेति स्मर्यसे चेन्न तव स्वरूपे यूनताऽऽशङ्कनीया, स्वातन्त्र्यबलात् त्वमुभयधा भासितुं समर्थाऽसीति तात्पर्यम् ॥ २१८ ॥

इदानीमाकाशद्वये कालीरूपद्वयं हास्यास्पदमिति शिष्यबुद्धिवैशद्याय समुप-वर्णयन् कालीचर्चोपदेशेन मातरं स्तौति—

**खे बहिर्घनवृते रुचिस्तमो-**
**हारिणी वहसि हास्यरूपताम्।**
**त्वं च चिन्नभसि मायया वृते**
**तद्धि काल्यसि परैस्त्वमीक्षिता ॥२१९॥**

हे अम्ब! चिद्गगनचन्द्रिके! मायया महामायया वृते आवृते, "मायोपरि महामाया" इति परात्रिंशिकाविवृत्तौ स्मरणात्। चिन्नभसि चिदाकाशे त्वं तमोहारिणी अज्ञाननाशिनी बाह्यान्धकारनाशिनी च, रुचिः शुभ्रा शुक्लवर्णा समाधिधनैः परमसाधकैः प्रत्यक्षीक्रियसे। बहिः खे भूताकाशे, चिन्नभसोऽनुपादानादत्र भूताकाश एव ग्रहीतुमुचितः, परैरिति विशेषणाच्च। कथंभूते? घनैर्मेघैर्वृते मेघ-मालयाऽऽच्छादिते त्वं काली कृष्णवर्णा "कृष्णे नीलासितश्यामकालश्यामलमेचकाः" इत्यमरः, असीति परैः साधारणजनैः, न त्वन्तर्मुखैः, ईक्षिता दृष्टा। तत् तस्मात् कार-णात्, द्वयोः परस्परविसंवादपरकस्वीयानुभवप्रकाशनाद् हास्यरूपतां हास्यरसालम्बन-ताम्, वहसि धारयसि। कृष्णवर्णत्वं तस्या महानिर्वाणतन्त्रे—

श्वेतपीतादिको वर्णो यथा कृष्णे विलीयते।
प्रविशन्ति तथा काल्यां सर्वभूतानि शैलजे ॥
अतस्तस्याः कालशक्तेर्निर्गुणाया निराकृतेः।
हितायाः प्राप्तयोगानां वर्णः कृष्णो निरूपितः ॥(१३ उल्लासे) इति।

योगवासिष्ठेऽपि—"शिवयोर्व्योमरूपत्वादसितं लक्ष्यते वपुः" इति। त्रिपुरासार-समुच्चयेऽपि तस्या नीलवर्णत्वं यथा—"मोक्षे साक्षादपेताम्बुदगगननिभां भावयेद् भक्तिगम्याम्" इति। अन्यच्च—"कालसंकलनात् काली सर्वेषामादिरूपिणी। कालत्वादादिभूतत्वादाद्या कालीति गीयते ॥" इति। मन्त्रमहार्णवे ध्यानश्लोकेऽपि तस्याः श्यामाङ्गत्वं यथा—"श्यामाङ्गीं कृतमेखलां शवकरैर्देवीं भजे कालिकाम्" इति। ज्ञानिनां साधकानां सारस्वतप्रकाशयुतायास्तस्याः शुभ्रवर्णत्वमेव भासते, भावनाप्रकर्षात्। यथोक्तम्—"येन येन स्वरूपेण भाव्यते तस्य तन्मयी" इति ॥२१९॥

इदानीं कल्पनातोऽपि परां चण्डीशक्तिं वर्णयन् स्तौति—

**द्वादशात्मरविकालघस्मरी**
**कालकालिशिवभूमिका वरा।**
**यादृशी भवसि चण्डि! तादृशीं**
**त्वां विदुः कलितकल्पनापराम् ॥२२०॥**

हे चण्डि! चण्डविनाशिनि! द्वादशात्मा रविरेव कालः कालकृत्त्वात् काल इत्युपचारः। दिनं कालघटितं वस्तु तत्करोति दिनकृत् सूर्यः। अहस्कर-अहर्पति-इति-पर्यायशब्दाभ्यामपि तत्कर्तृत्वं स्पष्टम्। सूर्यस्य द्वादश भेदाः सनामकाः पुराणादिषु स्पष्टाः, तस्या घस्मरी भक्षिका कालस्यापि कलयित्री, तत्संबोधने रूपम्। शिवस्य भूमिका सोपानं शक्तिसोपानमवलम्ब्यैव शिवः प्राप्तुं शक्यः। सोपानत्वे वरा श्रेष्ठा। तदुक्तं तन्त्रालोकविवेके—"शक्तिरेव तज्ज्ञप्तावुपायः।

यथालोकेन दीपस्य किरणैर्भास्करस्य वा।
ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये ॥ इति।

यादृशी भवसि तादृशीं कलिताः संकलिताः स्वस्वबुद्धिवैभवेनोद्भाविता याः कल्पना आत्मस्वरूपोपेयप्राप्तये विचिन्तिता मार्गाः. ताभ्यः परामतीत्य स्थितां त्वां विदुः कथयन्ति, "यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह" इत्याद्युपनिषद्वाक्यैः। परतत्त्वं केनापि वाग्वैभवेन मनसा कर्मणा वा ज्ञातुं न शक्यम्। तद्रूपां त्वां कथमहं ज्ञातुं प्रभुरिति स्वसामर्थ्यं विचिन्तयन् केवलं शरणं प्रपद्य इति ग्रन्थकर्तुराशय ॥ २२० ॥

साम्प्रतं प्रकाशार्णवरूपशिवस्य तरङ्गरूपतां शक्तेः प्रतिपादयन् कुलस्वरूप-मुद्घाटयन् शक्तिं स्तौति—

यत्कुलं त्रिविधमम्ब तद्भवो
यः प्रकाश उपलक्ष्यते महान्।
तत्र यो निखिलकल्पितोऽर्णव-
स्त्वं यदूर्मिरसि कृत्यलालसा ॥२२१॥

हे अम्ब ! कुलार्णवेशि । त्रिविधं मेयमातृमितिलक्षणं कुलं यज्जगति चकास्ति तैस्त्रिभिः कुलावयवैः, भव उत्पन्नोभिव्यक्तो वा यो महान् प्रकाशः, उपलक्ष्यते सर्वैरवलोक्यते। यद्यप्यत्र ग्रन्थकृता द्वितीयविमर्शोक्ताः कुलशब्दस्य त्रय एव प्रकारा उक्ताः, तथापि कुलशब्दस्यान्येऽप्यर्थाः प्रसङ्गप्राप्त्या वर्णनीयाः, येन कुलोत्पन्नो महान् प्रकाशो बुद्धिविषयीकृतो भवेत्। तत्र तन्त्रालोके एकोनत्रिंशाह्निके कुलशब्दस्यानेकेऽर्थाः प्रकटीकृताः। तद्यथा—

कुलं च परमेशस्य शक्तिः सामर्थ्यमूर्ध्वता।
स्वातन्त्र्यमोजो वीर्यं च पिण्डः संविच्छरीरकम् ॥ इति।

एष श्लोको जयरथेनाधोलिखितरीत्या व्याख्यातः—"कुलं हि परमा शक्तिः" इति, "लयोदयश्चित्स्वरूपस्तेन तत्कुलमुच्यते" इति, "स्वभावे बोधममलं कुलं सर्वत्र कारणम्" इति, "सर्वकर्तृ विभु सूक्ष्मं तत्कुलं वरवर्णिनि" इति, "सर्वेशं तु कुलं देवि सर्वं सर्वव्यवस्थितम्" इति, "तत्तेजः परमं घोरम्" इति, "शक्तिगोचरणं वीर्यं तत्कुलं विद्धि सर्वगम्" इति, "कुलं च परमानन्दः" इति, "कुलमात्मस्वरूपं तु" इति, "कुलं शरीरमित्युक्तम्" इति च। ललितासहस्रनामस्तोत्रव्याख्याने—"कुलं सजातीयसमूहः। स चैकज्ञानविषयत्वरूपसाजात्यापन्नज्ञातृज्ञेयज्ञानत्रयात्मकः। घटमहं जानामीत्यत्र त्रिपुट्यात्मकज्ञानाकारस्त्र्यवयवः स्फुटमुदाहृतः" इति। इममेवार्थं भगवानादिशङ्कराचार्योऽप्याह—"जानामीति तमेव भान्तमनु भात्येतत्-समस्तं जगत्" (द० स्तो०) इति। अत्र जानामीत्येतेन प्रमाता, भान्तमनु भातीति मितिः, जगदिति मेयमिति त्रिपुट्या स कुलमेव सङ्केतितवान्। स्वच्छन्दसंग्रह-कल्पसूत्र-आगम-भविष्योत्तरपुराणादिषु क्रमेण–अधस्तनं पद्मम्, आद्याचक्रम्, सुषुम्णामार्गः, कुलशास्त्रम्, कुलपुस्तकम्, कुलदर्शनम्, आचारः, पतिव्रत्यादिगुणराशिशीलो वंशः, जनपदम्, गृहम्, सजातीयगणः, गोत्रम्, देहः, रक्तम्, सहस्रदलकमलमित्यर्थेषु कुलशब्दप्रयोगः। पूर्वोक्तार्थककुलपदात् सामान्यार्थे तद्धितप्रत्ययात् कौलमिति पदं सिद्धयति। दत्तात्रेय-संहितानुसारं चक्रषट्कं कुलमिति। पूर्वोक्तार्थसद्भावेऽपि काल्युपासकस्य कौल इति संज्ञा चिरात् प्ररूढा लोके। मूलाधारचक्रे सुषुम्णामार्गं कुलपदेन गृहीत्वा आधारपूजकाः कुलपूजकाः कौला इत्युच्यन्ते। कौलमार्गे शरीरस्य सर्वतीर्थभूमित्वादाधारचक्रस्थित-कुण्डलिनीशक्तिरूपकाल्या उपासना कौलोपासनारूपेण प्रसिद्धेति शक्तिसंगमतन्त्र-मतमपि नोपेक्षणीयम्। विचारेण त्रिपुट्यामेते सर्वेऽप्यर्था अन्तर्भवितुं शक्याः। एते निखिलाः पदार्थाः संगृहीताः समुद्र इव लक्ष्यन्ते, समुद्रस्यानन्तपदार्थभाण्डागारत्वरूपे-

णानुमतत्वात् । एष समुद्रः शिवेनोपमितः, तत्र निखिलोक्तपदार्थानां सन्निहितत्वात् । यद् यतः कृत्यलालसा कार्यंव्यापारसंलग्ना समुत्सुका च त्वम् ऊर्मिरूपा असि। अत्र पद्ये शिवस्यैव माहात्म्यं शक्तिस्तस्योर्मिरिति तदाश्रितैव वर्णिता । पक्षान्तरेण कार्यसंचालनाधिकृता शक्तिरेव महनीया। अर्णवस्तु स्वरूपेणावस्थितः सर्वाधारभूमित्वेन वर्णितोऽपि निष्क्रियः शान्त इति निष्कलनिराभासचिद्रूपतयाऽवस्थापितः । प्रकाशमात्रतयाऽपूर्णत्वमेव, कर्तृत्वविरहादिति प्रकाशविमर्शरूपता शिवशक्त्योः साधु निर्वाहिता विलसति ॥ २२१ ॥

अथेदानीं सृज्यमानसंह्रियमाणरूपविश्वद्वयमुदरे निदधती शक्तिर्लहरीसादृश्यं भजत इति तथ्यं प्रकटयन् शिवाम्बुधेर्लहरीत्वं शक्तेः साभिप्रायकमिति साधयति—

**उन्मिषन्निमिषदप्युत द्वयं**
**विश्वमेतदुदरे धृतं यया ।**
**सा त्वमम्ब लहरी शिवाम्बुधेः**
**क्षेपसंप्रकटनग्रहोन्मुखी ॥२२२॥**

हे अम्ब ! वाक्चतुष्टयरूपत्वेऽपि तत्परे ! उन्मिषत् सृज्यमानं निमिषत् संह्रियमाणम् । अपिश्चार्थे । उत समुच्चये । सृज्यमानसंह्रियमाणेति समुच्चितं द्वयं द्विप्रकारकमेतद्विश्वं पुरोवर्ति दृश्यमानं जगद् यया त्वया धृतं सा पूर्वोक्तद्विप्रकारकविश्वधारणदक्षा प्रसिद्धा त्वं क्षेपसंप्रकटनयोर्ग्रहे ज्ञाने उन्मुखी समुद्यतभावेन तत्परा शिव एवाम्बुधिः समुद्रस्तस्य शिवस्य लहरी वीचिरसि । अत्रोन्मेषनिमेषौ सृष्टिसंहारार्थकौ, तौ स्थितिनिग्रहानुग्रहेत्यवशिष्टकृत्यत्रयस्योपलक्षणभूतौ । उक्तार्थप्रयोगे प्रमाणं स्पन्दकारिकायाः प्रथमं पद्यम्—"यस्योन्मेषनिमेषाभ्यां जगतः प्रभवाप्ययौ" इति । प्रभवः सृष्टिः, अप्ययः संहार इति टीकाकारैर्व्याख्यातत्वात् । मुक्तावस्थायामपि पञ्चकृत्यान्युपक्रान्तानीति मुगेन्द्रागमोक्त्या मलपरिपाकतारतम्यापेक्षया बोधनार्हान् बोधयन्, रोधनार्हान् रुन्धन्, कर्मिणां कर्माणि परिणामयन्, मायाशक्तीश्च प्रसवाभिमुखीः कुर्वन्, सर्वं चिदचित्तत्त्वभावभूतभुवनात्मकं यथावदवलोकयन्नास्ते । तद्यथा—

स्वापेऽप्यास्ते बोधयन् बोधयोग्यान्
रोध्यान् रुन्धन् पाचयन् कर्मिकर्म ।
मायाशक्तीर्व्यक्तियोग्याः प्रकुर्वन्
पश्यन् सर्वं यद्यथा वस्तुजातम् ॥ (४।१५)

क्षेपः पूर्वमुक्तस्तस्य प्रकाशनज्ञाने तत्परतया शक्तिकर्तृकं सकलपशूनां तत्तत्कर्तव्यजातस्य प्रबोधनमान्तरदशायामपि देदीप्यमानं संकेत्यते । अम्बुधौ लहरीसंचारः शाश्वतः स्वाभाविक इत्यनेन बाह्याभ्यन्तरे सर्वदैवोन्मेषनिमेषोपलक्षितपञ्चकृत्यानि सन्ततान्येव सन्ति । अत उन्मेषनिमेषवद् विश्वधारणदक्षा त्वं शिवार्णवस्य

लहरीत्वमङ्गीकृत्य स्वीयं विमर्शात्मकं कर्तृत्वं सर्वदैव सर्वत्रैव वितन्वती प्राणिनः क्षिप्ततानिवृत्तये चेष्टसे इत्यहो भवत्याः प्राण्युद्धारकर्मणि व्यासङ्गः ? एतादृशी नित्योद्यन्तृता त्वय्येवोपलक्ष्यते, नान्यत्रेति भवादृशी भवत्येवेति वक्तुं पार्यते ॥ २२२ ॥

इदानीं निरुपद्रवस्य बृहतश्चैव विषयोन्मुखत्वं सफलमिति ब्रुवन् शत्रुसत्त्वे सुखोपगमो दुःशक इति सिद्धान्तयन् शक्तेश्चिदानन्दमयत्वं प्रतिपादयति—

> यः परो निरुपसर्गतः परः
> स्यान्महानपि च केवलः शिवे ।
> उत्तरं च विषयोत्सवस्तदा-
> नन्द उल्लसति चिद्घनासि यत् ॥२२३॥

हे शिवे ! कल्याणपरम्पराप्रसविनि ! यः कोऽपि पर उत्कृष्टः स्यात्, स निरुपसर्गतो निरुपद्रुतत्वात् सर्वोत्कृष्टो भवेत्। केवल एकोऽद्वितीयः, "त्रिलिङ्गं त्वेककृत्स्नयोः" इत्यमरेण कृत्स्ने चार्थे केवलशब्दस्त्रिलिङ्गे प्रयुज्यते। नहि केवलतया दुर्बल एवापि तु केवलो महानपि बृहन् विशालोऽपि स्यात् "ध्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम्" इति माघः। उच्छिन्नसर्वारातिरेकोऽप्यात्मवत्तया दृढनिश्चयवत्तया विशालो भवेदेव। एकाकित्वमसहाये प्रयुज्यते। असहायत्वं तु परस्परातिरिक्तसहायाभावेन द्वयोर्बहूनामपि भवति, किन्तु केवलत्वं प्रयतात्मवत्तया न वाच्यतामर्हति। एवं प्राप्तात्मबलवान् केवल एकलोऽपि महासहाय इव महति कार्ये प्रभवति। उत्तरमनन्तरं विषयोत्सवो गृहमेधित्वप्रयुक्तभोगरसाभिस्पृहा जायते चेत्तदानन्द उल्लसति। न केवलं शक्तौ आनन्द एवापि तु चिद्घना चित्सान्द्रा अपि सा। नहि चिन्निरन्तरं कदाप्यानन्दव्यतिरिक्ता क्षणमप्यवतिष्ठेत, वस्तुस्वाभाव्यात्। निरुपप्लवा केवला एकाऽपि चित् स्वभावतया महती स्यादेव। यद् यस्मात् कारणात् त्वं चिता घना निबिडा निरन्तरा असि, तस्मात्त्वयि आनन्दोल्लासव्यतिरेकसम्भावनैव नास्ति। यथा निरुपाधिकः केवलो महान्, तथैव निरुपाधिका चिन्महती आनन्दघनैव स्थीयेत, तयोरयुतसिद्धिवृत्तित्वात्। एतेन शक्तिशिवयोर्यामलत्वं नैसर्गिकम् तत्रान्यतरसद्भावसंभावनैव शैवशाक्तसम्प्रदायेऽसंभाव्या। चिदानन्दघनायां त्वयि विषयभोगोऽपि मोक्षायत इति प्राप्तोक्तविधसामर्थ्यस्य भोगपुरुषार्थताऽप्यनेन पद्येन संकेत्यते ॥ २२३ ॥

अथेदानीं निरंशसांशभेदेन भगवत्याः स्वरूपद्वयं संसूचयन् सृष्टिकालीस्वरूपं च सूचयन् मातरं स्तौति—

> विश्वसंहृतिपदे लयोज्झिते
> लीयसे यदि निरंशतः शिवे ।
> सृष्टिकाल्यसि यया बहिःपदे
> क्षिप्तमम्ब जगदाशु गृह्यते ॥२२४॥

हे शिवे ! प्रकाशविमर्शस्वभावे ! यदि लयेन मुख्यलयेन उज्झिते परित्यक्ते विश्वसंहृतिपदे विश्वस्य अवान्तरसंहारपदे स्थाने निरंशत आपेक्षिकपूर्णतया लीयसे लयं प्राप्नोसि। यया त्वया बहिःपदे स्वीयहृदयदेशाद् अपरपार्श्वे बाह्यस्थाने क्षिप्तं जगद् आशु गृह्यते। स्वस्य स्वातन्त्र्यस्य बलेन बहिष्कृतं जगदनायासेन शीघ्रं गृहीत्वा लयाय ददासि लयं करोषि। तर्हि सृष्टेः कलयित्री भक्षिका असि। सर्वोऽपि सृष्टिर्लयो वा अंशत एव कल्प्यते, सृष्टिप्रलययोरुभयत्रापि स्वयं युगलस्य तत्सम्बद्ध-परिवारपरिकरस्यावशिष्टत्वात्। नहि सृष्टिप्रलययोः शिवस्य शक्तेर्वा साङ्गपरिवार उभयकर्मणि व्यापृतो भवतीति सङ्केतितोऽभिव्यक्तो वोपलभ्यते। निरंशप्रलये पूर्वोक्तस्य परिकरस्यापि समुपयुक्तत्वमिति सृष्टिकलनरूपो व्यापकः संहार एव सृष्टिकाल्याः प्रभावः। सृष्टिकालीप्रयुक्तसंहारस्य वर्णनं तन्त्रालोकविवेके—

> कालोत्थिता महादेव सानन्दा नन्दिनी शिवा।
> चिद्घना युग्ममध्यस्था अक्षरा क्षरगोचरा।।
> अकुला कलयन्नित्या कालकाली निराकुला।
> सा कला लीयते यस्यां सृष्टिकाली तु सा स्मृता।। (४।१९०)

का सा कला या लीयते ? या कालेन जन्या युग्ममध्यस्थाऽपि चिद्घना, स्वय-मक्षराऽपि क्षरविषया, स्वयं कालस्य कलयित्री तथापि निराकुला, एतादृक्कलाया अधिष्ठात्री काली सृष्टिकालीति स्मर्यते। क्षरैर्गोचरीकृतेति क्षराणां विषयेति प्रामाण्यात् कल्प्यते। सांशसृष्टौ प्रलये वा न सर्वसंहारो घटते। मुख्यलयावशिष्टविश्वसंहारः कश्चन विलक्षण एव। कालस्यापि कवलनस्वभावायाः कृतेऽन्यस्य कवलनविचारस्य कथैव का ? बहिःपदे क्षिप्तस्य जगतः शीघ्रग्रहणपूर्वकसंहार एव सृष्टिकाल्याः सर्वगोऽप्यांशिकः कल्पः, अन्यथा कलयित्र्याः काल्या एव पर्याप्ततया विशेषणविशिष्ट-कालीनां वैयर्थ्यात्। अत एव यदि विशेषणविशिष्टे संहारे लीयसे, तर्हि सृष्टिकाली। अन्यथा मुख्यसंहारस्तु निर्विशेषकालीतत्त्वस्यैवेति सृष्टिकाल्याः स्तुतिः।। २२४।।

अथेदानीं श्वासोच्छ्वासवायुमार्गं विहाय मध्यस्थितवायोः प्राणस्य हरणात्तव कालीति नाम, अत एव तस्या वैभवमत्यद्भुतमिति प्रशंसामुखेन मातरं स्तौति—

> **लब्धसाम्यपवनद्वयाहृतं**
> **वातचक्रमधितस्थुषी शिवे।**
> **निर्गमागमपथोज्झितान्तरे**
> **त्वं स्थितं ग्रससि हि स्थिताम्बिके।।२२५।।**

हे अम्बिके ! अपरिमिताद्भुतसामर्थ्यशालिनि ! श्वास प्रश्वासयोः पवनस्य गतिः समानैव, न तु विषमा, वैषम्ये स्वाभाविकत्वविरोधात्। सर्वोऽपि जनः श्वासप्रश्वासयोर्न किमपि वैषम्यमनुभवति, सुखपूर्वकसाम्यभावेनैव तयोर्गमागमसंभवात्। लब्धं

निसर्गतः प्राप्तं यत्साम्यं पवनद्वयं तेनाहृतं प्रगुणीकृतं मिथो गमागमविरोधेऽपि कार्यनिर्वाहायैकत्र समायोजितं वातचक्रमन्तःस्थदशविधवायुमण्डलमधितस्तुषी आस्थाय स्थितवती। निर्गमश्च आगमश्चानयोः समाहारो निर्गमागमं श्वासप्रश्वासं प्रश्वासनिःश्वासं वा अपोज्झितं परित्यक्तमन्तरं यस्मिन् मध्यमार्गे। हृदि स्थाने स्थिता त्वं हि निश्चयेन स्थितं मध्यस्थितं प्राणमेव ग्रससि भक्षयसि बलान्निगृह्णासि, अत एव त्वं काली प्राणकवलयित्री कथ्यसे। सम्पूर्णं वायुमण्डलं तव हस्ते न स्याच्चेत्, तर्हि गमागममार्गं विहाय मध्यस्थप्राणवायुनिग्रहसामर्थ्यं नाधिगतं स्यात्, प्राणापहारकार्यसौकर्य्यमपि त्वया नावगतं स्यादिति स्मारं स्मारं तव सामर्थ्यातिशयं चकितोऽहं प्रणतोऽस्मीति व्यज्यते ॥ २२५ ॥

अथेदानीं मूलाधाराद्याज्ञाचक्रादुपरि गत्वा सहस्रारचक्रात् क्षरन्तं सोमरसममृतसहोदरं पिबन्तीं कालीशक्तिं स्तौति—

या शिखान्तरहुताशनिर्गता
धामचक्रमवभिन्दती क्रमात्।
ऊर्ध्वसोमरसपानदीपिता
साऽपि देवि कलये बहिः स्थितः ॥२२६॥

हे देवि! दिव्यगुणयुक्तेऽपि परपीडनोद्यतदानवानां न्याय्यवधोद्युक्ते! शिखानां मध्ये निवासशीलो यो हुताशोऽग्निस्ततो निर्गता या त्वम्। अग्नेः सप्त शिखास्तास्वग्नेर्निवासस्ततो निर्गत्योर्ध्वगमनोद्यता शक्तिर्धामचक्रं भिनत्ति। धामक्रमस्तु महानयप्रकाशे—"सौरधामप्रवणो हि खेचरीप्रसरः, चान्द्रधामप्रसरश्च भूचरीप्रसरः, वह्निधामप्रसरश्च संहारभक्षिणीप्रसरः, समस्तधाम्नामधिष्ठातारौ आद्यन्तदेवीप्रसराविति धामक्रमः" इति। धामक्रम एव धामचक्रम्, तदवभिन्दती भेदं कुर्वती क्रमाद् ऊर्ध्वं सहस्रारदलकमलादधःस्रवन्तं सोमरसं पीत्वा दीपिता प्रकाशिता सा परमं पदं प्राप्यान्येषामपि मार्गदर्शनं कुर्वती महन्महत्त्वं पुष्णाति। एतत्सर्वं बहिः स्थितः सन्नहं कलये विमृशामि। नाभिमूले मणिपूरचक्रं वह्निमण्डलमिति षट्चक्रेषु तृतीयं ततश्चतुर्थं हृदयेऽनाहताख्यं चक्रमेव धामचक्रमिति कलयितुं युज्यते, हृदयदेशादेव विश्वे व्यवहाराः प्रक्रम्यन्ते। तत ऊर्ध्वं सहस्रदलकमलं द्वादशान्तचक्रनाम्ना प्रथते। तदेवोर्ध्वकुण्डलिन्याः प्रान्तभूमिः। शरीरे मूलाधारजन्माधारचक्राभ्यां पर्यायक्रमेण, अक्रमेण वा उदितः शाक्तप्रवाहः पवनाधारमनाहतं प्राप्य ततः पञ्चधा उदयोन्मुखो लक्ष्यते। धामवर्णसंवित्क्रमनाम्ना चक्रत्रयम्। विश्वस्मिन् सर्वे पदार्था धामवर्णसंवित्क्रमे विभक्ताः सन्ति। विश्वान्तर्गतः सर्वोऽपि पदार्थो नामरूपात्मकः। धाम नाम्नो रूपं वर्णस्य पर्यायः। विश्वान्तर्गताः सर्वे पदार्थाः संविदमवलम्ब्यैव सदिति परिचीयन्ते, सत्तां प्रतिलभन्त इति तदर्थः। वृन्दमहाधामक्रमाः क्रमेण वर्णसंविद्भासां पर्यायतया

व्याह्रियन्ते। प्रकाशानन्दमूर्तिचक्रेषु सृष्टिस्थितिसंहारा व्याप्ताः सन्ति। कन्दगत-मनलज्योतिः शरीरे नैसर्गिकम्। सौरचान्द्रादयस्तु कल्पिता लाक्षणिका वा। यतश्चित्प्रकाशेनैव सर्वं प्रकाशते। सौरप्रकाशेन चन्द्रः प्रकाशते। एवं संविदेव प्रकाशविमर्शाख्यधामवर्णक्रमौ स्वप्रभावेणान्तर्भावयति। सैव ब्रह्मरन्ध्रे ब्रह्मबिले परपदाख्यया विलसति। अग्निचक्रान्निर्गत्य धामचक्रं भित्त्वा ब्रह्मरन्ध्रगता संवित् सकलं ज्ञेयं स्वात्मनि विलाप्य संविन्मात्रतया विराजते। एषा संवित्सामरस्यरसाविष्टेति प्रतिभाति। इदमेव तस्याः संवित्त्वं यदसौ स्वात्मन्येव तिष्ठन्ती विश्वपरामर्शनदक्षा। अस्या एव विमर्शः स्पन्दो हृदयं विसर्ग इत्यादयः सहस्रशो व्यपदेशाः। सा परबोधात्मकशिवस्याऽभिन्ना शक्तिः परदशायामेकीभावेन शक्तिशक्तिमदिति द्वैधविगलनेन केवलं शक्तिदशां ध्यायिनां हृदि शक्तित्वेन शिवभक्तानां हृदि परमशिवत्वेन स्फुरति। वस्तुगत्या एकस्यैव परतत्त्वस्य शिवशक्तीति कल्पितविभागः कुतो विद्यते, भावुकानां श्रद्धातिशयादिति ज्ञेयम्। तत्र न कश्चन संकोचो विकासो वा भवति। स्वस्वातन्त्र्यबलादेव तत्र संकोचविकासाः प्रभासन्ते। संविद्विश्रान्तिमन्तरेण हि न किञ्चिदपि भवेत्। अत एवोच्यते—"यत्तत्र नहि विश्रान्तं तन्नभःकुसुमायते" इति ॥ २२६ ॥

अथेदानीं सूक्ष्मतः समारभ्य स्थूलपर्यन्तं जगद्विवृण्वन् शक्तिरेव सर्वं कलयित्वाऽन्ते उन्मनीत्वं गच्छतीति तस्याः सर्वशक्तिमत्तां वर्णयति—

**बर्हिणोऽण्डरसवद् यदन्तरे**
**शब्दतः प्रभृति चित्रितासनम्।**
**अर्थपञ्चकमसौ त्वमुन्मनी**
**सन्धिपूर्वपदकल्पघस्मरी ॥२२७॥**

हे देवि! यथा मयूराण्डरसे सर्वमपि चित्रविचित्रं वर्णजातं स्वरूपनिविष्टं तिष्ठति, तथैव यस्यास्तवान्तरे हृद्देशेऽकारादिहकारान्तमहन्तास्पदं विश्वं विलसति। सूक्ष्मवाचः सकाशादेव स्थूलपर्यन्तं पृथिवीजलतेजवाय्वाकाशात्मकं जगदुत्पद्यते, ग्राह्यस्य जडस्य चिद्व्यक्तिनिष्ठत्वाभावे प्रकाशनानुपपत्तेः। शब्दतः प्रभृति चित्रितासनम्, आस्यतेऽस्मिन्नित्यासनमाधारश्चित्रविचित्रनामरूपात्माकारेणावभासित आधारो यस्मिंस्तत्, भूतपञ्चकमेव ग्राह्यरूपतया प्रसृतं बाह्याडम्बरं प्रसिद्धतयाऽनादितया चासावित्यनेन सङ्केतितम्। बिन्दुविसर्गयोः पुम्प्रकृत्यात्मकत्वाद् हङ्कारः पुमान्, सकारः प्रकृतिरिति हंसात्मकं जगत्। शक्तिरेवात्मनः पुंभावं ज्ञात्वा सोऽहंभावतां गता। शक्त्युपाधिकस्य जीवस्य पुंस्त्वमादाय तस्याः पुंस्त्वाभिमानः स्वाभाविकः। पुम्प्रकृत्यात्मके जगति जीवे शक्त्यंशस्यापलापो न केनापि मनीषिणा युक्त्या वा शक्यक्रियः। यामले विश्वस्मिन् भावनातिशयनिष्पन्नोऽयं भावः सर्वथा निर्बाध एव। अत एव शक्तेः पुम्भावाभिमानो जीवनिरपेक्षतयाऽपि शक्यसमर्थन एव पूर्वोक्तयुक्त्या। स एव सोहंभावः सकारहकारलोपेन पूर्वरूपाख्यसन्धिना च प्रणवत्वं गच्छति। तदेवं सन्धेः पूर्वो-

त्तरपदलोपकल्पस्य च घस्मरी भक्षिका उन्मनी त्वमेवासीः। उन्मन्यां मानससंकल्प-विकल्पयोः सत्ता अस्तंगता, अत एव उद् ऊर्ध्वं गतंमनः स्ववृत्त्या यस्यां साऽवस्था निर्विकल्पात्मिकैव। अत्र मयूराण्डरसदृष्टान्तेन शक्त्यात्मकतत्त्वस्य परतत्त्वात्मकाभिमाने स्थिरीकृते तस्य सर्वोत्तीर्णत्वेऽपि सर्वात्मकता साधु समर्थिता भवतीति ॥ २२७ ॥

इदानीं संहारस्य स्वरूपं वर्णयन् मातरं स्तौति—

**आत्मभावमखिलस्य जग्मुषी**
**त्वं शिवे निरवधिः सदोदिता ।**
**भावसंहृतिनिमेषविग्रहा**
**संहृतं कलयसि ह्यनावृतिः ॥२२८॥**

हे शिवे ! शिवेतरक्षतिकारिणि। अखिलस्य विश्वस्यात्मभावमात्मत्वेनाभिन्नत्वं जग्मुषी प्राप्तवती परिकलयित्री त्वं सदा निरवधिः कालपरिच्छेदराहित्येन उदिताऽसि। भावानां जागतिकपदार्थानां संहृतौ संहरणेऽपेक्षितो यो निमेषोन्मेषावच्छिन्नकालस्तादृशकाल एव विग्रहो यस्याः, तत्स्वरूपा त्वम्, हि निश्चयेन, अनावृतिर्निरावृतज्ञानस्वरूपा सती संहृतं विश्वं कलयसि स्वात्माभेदेन स्थापयसि। निराभासा निरावृतिस्वरूपा संविद्रूपा काली सर्वपरिच्छेदाभावं स्मरन्ती केवलैवाऽद्वितीया तिष्ठति, भेदज्ञानापेक्षयाऽभेदज्ञानस्य गुरुत्वादभ्यर्हितत्वाच्च। भेदः संकोचरूपत्वेन लघुरित्यत्र न केषामपि विमतिः। यदुक्तं तन्त्रालोके चतुर्थाह्निके—

"एकं स्वरूपरूपं हि मानमेयप्रमातृताः।
सर्गावतारसंहारमयीराक्रम्य वर्तते ॥
स्वस्वरूपानुगुण्येन प्रत्येकं कलनावशात्।
सृष्टिस्थित्यादिभिर्भेदैश्चतुर्धा ता अपि स्थिताः ॥
कालग्रासान्तमुदयाच्चतुर्धा विभवो हि यः।

तस्य विश्रान्ति रेकैव" इति। अन्यच्च—
भावा भान्तीति संवित्तावात्मा भातीति भासते।
आत्मा भातीति संवित्तौ भावा भान्तीति भासते ॥ इति।

यथा नटस्तत्तद्भूमिकावलम्बनवेलायां वस्तुतो नटत्वेऽपि तत्तद्रूपतया एवावभासते, न पुनर्नटत्वेनापि; तथैवैषा संविद्रूपा कालीशक्तिरपि शुद्धसंविद्रूपत्वेऽपि विश्वात्मकतयैव भासते। यदुक्तम्—"एकीभावतया सर्वमनाख्यायां यदा स्थितम्। अक्रमस्तु तदा ज्ञेयः" इति।

एतदभिप्रायेणैव अव्यपदेश्या, अनामका, अनाख्या—इत्यादयोऽस्याः संज्ञाः शास्त्रेषु तत्र तत्र भाषिताः ॥ २२८ ॥

इदानीं शक्तिसकलप्रमात्रोर्भेदं स्पष्टयन् शक्तेः प्रकाशविमर्शमयतां स्थिरयति—

**स्वैरखेलननिवेशिताः शिवे**
**आत्मनाऽक्षरुचयस्त्रयोदश ।**
**अर्थपञ्चकमयाश्च वेदका-**
**स्त्वं विनीतघनसारमूर्च्छिता ॥२२९॥**

हे शिवे ! शुभ्ररूपे ! आत्मना करणेन स्वैरं यत्खेलनं क्रीडा, तत्र निवेशिता नियुक्ता अक्षरुचय इन्द्रियाणि त्रयोदश संख्याकाः, अर्थपञ्चकमयाश्च इन्द्रियाणि भौतिकान्येव, तानि तत्तद्विषयाणां वेदकानि सूचनादातॄणि । त्वं तु विनीतश्चूर्णीकृतो यो घनसारः कर्पूरस्तस्य मूर्च्छिता सोच्छ्रिता राशिरूपा । "मूर्च्छितौ मूढसोच्छ्रायौ" इत्यमरः । स्वस्वविषयग्रहणे स्वतन्त्राणीन्द्रियाणि त्रयोदशसंख्यकानि सन्ति, तानि विषयान् प्रमात्रे सूचयन्तीत्यावेदका वेदका वा, शक्तिस्तु चूर्णीकृतकर्पूरराशिवत् शुभ्रा श्वेतवर्णा च ज्ञानप्राधान्यात् । तत्रान्तःकरणानि त्रीणि बुद्ध्यहङ्कृन्मनांसि, शेषाणि कर्मज्ञानभेदेन पञ्च पञ्चेति संकलने त्रयोदश भवन्ति । तत्र आत्मना स्वयं स्वेच्छया तानीन्द्रियाणि स्वैरखेलननिवेशितानीति रीत्या सर्वत्रान्वये तेषां त्रयोदश संख्या समुचितैव । इन्द्रियाणां भौतिकतया तेषां वर्णा भिन्नभिन्ना इति तेषां शुभ्रत्वमेवेति कथनं नोचितम् । शक्तिस्तु कर्पूरक्षोदसमूहसदृशत्वात् शुभ्रवर्णैवेति न कश्चन दोषः । इन्द्रियाणि तुभ्यं सर्वमावेदयन्तीति परतन्त्राणि । शुभ्रवर्णा त्वं स्वाधीनतया न कस्यापीति वैषम्यम् । तानि केवलं सूचकानि, शक्तिस्तु स्वयमनुभवित्रीति द्वयोर्महदन्तरम् ॥ २२९ ॥

अथेदानीं संहृतं विश्वं स्मृतिमहालये संस्मरन्तीं कालिकां कलनस्वभावां संस्तुवन् प्रारभते—

**भक्षयन्त्यखिलमक्षजैः शिवे**
**शक्तिरश्मिभिरिमाश्च मातृभिः ।**
**ताश्च संस्मृतिमहालये परे**
**रज्यती हरसि विश्वविग्रहम् ॥२३०॥**

हे शिवे ! विश्वोत्तीर्णे अथ च विश्वमये ! अक्षाज्जातं तैरिन्द्रियोत्पन्नैः शक्तिरश्मिभिस्तेजःकिरणैर्मातृभिः साकमिमाश्च वृत्तीरखिलं भक्षयन्ती भक्षणं कुर्वती ताश्च प्राग्भक्षिताः परे संस्मृतिमहालये सर्वोत्कृष्टे स्मरणपथे प्राक्तनसंस्कारानुरोधेन रज्यन्ती रागं दर्शयन्ती विश्वविग्रहं जगच्छरीरं हरसि आत्मसात्करोषि । अत्र सर्जनं संहरणं वाऽन्तर्धानबहिष्करणमात्ररूपमेव, न त्वन्यथाभावः । इत्थं करणेऽनुराग-

विरागयोः पर्यायतया सर्जनसंहारक्रमदर्शनेन नित्यसिद्धस्वभावे शिवे भैरवे वा शश्वदनुध्यानाभ्यास एव। यथोक्तम्—"एवं प्रतिक्षणं विश्वं स्वसंविदि विलापयन्। विसृजंश्च ततो भूयः शश्वद्भैरवतां व्रजेत् ॥" इति ॥ २३० ॥

अथेदानीं साध्यकाल्या वर्णनं कुर्वन् पूर्णतां धारयतो विश्वस्य भक्षणात् तस्या इदं नामेति प्रस्तुवन् प्रोक्तनामिकां कालीं स्तौति—

कालपालक्रमुखं शिवान्तकं
विश्वमब्धिपतितोदबिन्दुवत् ।
पूर्णतां वहति यत्र दीप्तिचिद्
घस्मरी त्वमिह साध्यकाल्यसि ॥२३१॥

हे देवि ! निरन्तरं पञ्चकृत्यकारिणि ! इह जगति अब्धिपतितोदबिन्दुवत् समुद्रगतजलबिन्दुवत्, यथा समुद्रं गतो जलबिन्दुः समुद्रपदेनोच्यते, तद्वत् कालपालकादिशिवावसानकं विश्वं यत्र कालविशेषे पूर्णत्वं धारयत्ति, तत्र त्वं साध्यकालीति नाम्ना प्रसिद्धिं गता भवसि। एतन्नामककाल्याः स्वरूपलक्षणे तन्त्रालोके न कुत्राप्यवलोक्येते। एतद्भिन्नत्रयोदशकालीनां नामानि तन्त्रालोकोद्धृतानि सलक्षणं वर्णितानि। दशमहाविद्यासु प्रथमा काली महाकालस्याभिन्ना शक्तिरिति वर्णिता तन्त्रग्रन्थेषु। तस्या एव शक्तिसंगमतन्त्रे सुन्दरी त्रैलोक्यविजया इति नामद्वयमभवत्। भक्तश्रद्धया प्रीतां तां दक्षिणाकालीति नाम्नाऽपि साम्प्रदायिकाः स्मरन्ति। योगदृसः कालः कुण्डलिन्या ध्यानमासाद्य तां प्रसाद्य च एकपञ्चाशत्प्रकारकविद्यानामाविर्भावं कृत्वा तावत्संख्याकवर्णान् प्रतिष्ठापयामास। कुण्डलिनीशक्तिसकाशाद् वर्णानां विद्यानां चोत्पत्तिः प्राणतोषिण्यां वर्णिता। काल्युपासकानां कौल इति संज्ञा लोके चिरप्ररूढेत्यनेन काल्यास्तत्तत्कार्यपरतया नामभेदो भिन्नभिन्नतया प्रसृत आसीदिति साध्यस्य साधकतया काल्यास्तन्नामकरणं साभिप्रायमिति कल्प्यते। कालपालादिशिवतत्त्वान्तं विश्वं यत्र पूर्णत्वमेति तत्र दीप्तिमती चितिशक्तिराविर्भवति। तामपि स्वात्मत्वेनान्तर्निधायाभीष्टसाधिकायाः साध्यकालीनाम्न्याः शक्तेः शोधो विद्वद्भिः सोत्साहेन विधेय इति। नाम्नोऽपूर्वत्वादेषोऽनुरोधः सीमातिक्रान्त्या नोपेक्षणीयः ॥ २३१ ॥

अथेदानीं यमस्य कलयित्र्याः काल्याः स्वरूपलक्षणे अभिदधानो भूतानां संयमनं (निधनम्) यमस्य क्रीडा लीलेति तत्स्वभाववर्णनपूर्वकं तत्तन्नामिकां मातरं स्तौति—

एतदम्ब सदिदं तु नेति नः
शङ्कया हृदि विकल्पलक्षणः ।
यो यमः स खलु काल्यते त्वया
भूतसंयमनकेलिकोविदः ॥२३२॥

हे अम्ब ! शब्दब्रह्मस्वरूपे । एतत् सत्, सच्छब्दो विद्वत्पर्यायः, सत्यादि-वाचकश्च । "सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्" इत्यमरः, इदं तु न इति शङ्कया भयेन हृदि मनसि विकल्पलक्षणः शब्दमूलको यो यमः प्रसिद्धो देवो दक्षिणाशाधिपः, अथवा यमो दण्डाधिकारी नियमनाधिकृतः, स प्रसिद्धः, भूतानां संयमनं निधनं तदेव केलिः क्रीडा लीला, तत्र कोविदः पण्डितो दक्षः, खलु निश्चयेन, काल्यते नियम्यते कालधर्मेण गृह्यते वेति हेतोस्त्वं यमस्य कलयित्री निधनप्रापयित्री यमकालीति कथ्यते लोके । "सर्वो विकल्पः संसारः" इति नीत्या विकल्प एव संसारः, विकल्पलक्षणो यो यमइत्युक्त्वा चिद्गगनचन्द्रिकाकारो यमस्य विकल्परूपतां निर्धारयति । संविदेव परिमितप्रमातृभूमिकां स्वातन्त्र्यबलाद् गृहीत्वा परिमितप्रमातरि बहिर्मुखतामुत्पाद्यान्तर्मुखतां नियन्त्रयति यमयति, इदं कार्यमिदं नेति नियतिशक्तौ तस्याः कार्यक्षेत्रेऽवस्थापयति । विकल्पानुप्राणिता हि शङ्कोत्पद्यते । शङ्कया शास्त्रभेदेन कार्याकार्यविनिर्णये विपर्यासोत्पादनद्वारा किंकर्तव्यमूढता नाम विचिकित्सा समुत्पाद्यत इति हेतोर्यम आत्मोन्मुखत्वे विघ्नकरो जायते । तस्यापि कलयित्री सा यमकालीति निरुच्यते । यथोक्तं पञ्चशतिके—

> यमरूपस्वरूपस्था रूपातीतस्वरूपगा ।
> सा कला लीयते यस्यां यमकाली तु सा स्मृता ॥ इति ।

श्रीक्रमस्तोत्रेऽपि—

> सर्वार्थसंकर्षणसंयमस्य
> यमस्य यन्तुर्जगतो यमाय ।
> वपुर्महाग्रासविलासरागात्
> संकर्षयन्तीं प्रणमामि कालीम् ॥

अत्र कालीमिति यमकाल्याः सङ्केतः । इमा काल्यः प्रमात्रंश-प्रमेयांश-प्रमाणांश-ग्रासचतुरास्तत्तदंशमेव ग्रसन्त्यः स्वकार्यप्रभावं प्रमातृषु क्षिपन्ति । स चास्थावशात् स्वश्रद्धेयशास्त्रोपदेशाद्वा विधिनिषेधयोर्व्यामोहं गतोऽकार्यं कार्यत्वेन निर्धार्य काल्याः कलनपात्रतां भजते । पञ्चशतिकक्रमस्तुतिप्रामाण्येन तन्त्रालोकविवेके प्रमातृप्रमेय-प्रमाणांशयन्त्रीणां लक्षणोदाहरणे विस्तरेण प्रदत्ते । अधिकजिज्ञासुभिस्तत एव जिज्ञासा-प्रशमो विधेयः । विकल्पोत्पादनद्वारा यमः प्रमातॄन् यमयति । यमनं कालधर्मप्रापण-मेव । पद्येनानेन यमकाल्याः स्वरूपं लक्षणं च प्रतिपाद्य पर्यवसितनीत्या स्तुतिरेव तस्या उच्यत इति भावः ॥ २३२ ॥

अथेदानीं कार्याकार्यनियामकस्य यमस्य शरीरेण काल्या भयोत्पादनसामर्थ्यं निरङ्कुशं स्तौति—

अम्ब कार्यकरणे नियच्छतः
पूर्णचित्पदमहोत्सवद्विषः ।
जृम्भितस्य हृदये स्वशङ्कया
त्वं यमस्य वपुषाऽसि भीषणा ॥२३३॥

हे अम्ब ! कार्यंकरणे प्रवृत्तिविषये नियच्छतो नियन्तुः प्रतिरोधिनः । पूर्णं यच्चित्पदं पूर्णाहन्तात्मकं ज्ञानं तदेव महोत्सवः, चिदानन्दात्मस्वरूपलाभादुत्कृष्टस्य लाभस्य जगत्यसंभवात् तं द्वेष्टीति तस्य स्वशङ्कया स्वीया ज्ञानप्रयुक्तप्रवृत्तिनिवृत्तिरूप-प्रवर्तमानायाः प्रतिरोधिन्या हृदये मनसि जृम्भितस्य प्ररूढस्य यमस्य प्रोक्तविकल्पा-त्मकदेवस्य वपुषा शरीरेण उपाधिभूतेन त्वं कालीशक्तिर्भीषणा महाभयजनिकाऽसि । मनसो दाढर्येन दौर्बल्येन वा प्रवृत्तिनिवृत्ती स्तः, तयोर्विपर्याससमुत्पादक्रमेण बहिर्मुखत्वं स्वस्वभावरूपचिदानन्दात्मद्वेषेण स्वात्मशिवत्वस्यौन्मुख्यं विद्राव्य यमो भीषणत्वं प्रस्तौत्येवेत्यत्र न संदेहः प्राज्ञानाम् । तस्य नियमनद्वारा त्वया सुबहूपक्रियते साधक-शरणागतानामिति भगवत्याः स्तुतिः ॥ २३३ ॥

अथेदानीं द्विविधप्रतिबन्धापसारणेन काल्याः स्तुतिं ग्रन्थकारः प्रस्तौति—

वित्तदारमुखभोग्यगामिनी
या ममेत्यभिमतिर्मदोद्धता ।
याऽप्यहङ्कृतिरनात्मनि स्थिता
मृत्युरूपमुभयं तवासनम् ॥२३४॥

हे देवि ।! कुलक्रमोभयदर्शनसारसर्वस्वे ! अत्र द्विप्रकारकं मृत्युसाधनमुप-दिश्यते—अहंममेत्यभिमानः, अनात्मन्यात्मभावाभिमानश्चेति । उभयं विनाश्यैव आत्मप्राप्तिः शक्या कर्तुम् । तदेव ग्रन्थकर्त्री स्वाभीष्टक्रमेणोच्यते । मुखं प्रवेश-द्वारम्, निःसरणमार्गो वा । वित्तदारादिषु भोग्येषु 'इदं मम वित्तम्, इयं मम दाराः' इत्यादिप्रापकतया याऽभिमतिः, गमयतीति गामिनी, मदेन अज्ञानेनोद्धताऽनम्रा या प्रोक्तप्रकारा, अभिमतिरभिमानः, याऽपि, अपिश्चार्थे, अनात्मनि आत्मभावज्ञानं तत्प्रयुक्ता अहङ्कृतिरभिमानः, इत्येवमुभयप्रकारकमज्ञानमेव मृत्युरूपम् । अज्ञानमेव मृत्युः । तदुक्तप्रकारद्वयकस्य विनाशायानयोरुपरि आसनमधिष्ठाय, उभयं विनाश्ये-त्यर्थः । त्वं हि युगलरूपं मृत्युमासनीकरणतया नियम्य साधूपकरोषि । एतेन उभय-रूपं प्रतिबन्धं व्यतिपात्य तदनन्तरमेव तत्तदुपायतया स्वात्मशिवस्य प्राप्तिः संभाव्यते ॥ २३४ ॥

अथेदानीं कालशक्तिः काली शवासनमास्थाय मृत्योरभिषेकं करोति । चिच्छक्तेः सकाशादेव विकल्पः प्रसरति । तत्स्वातन्त्र्यादेव विकल्पं विनाश्य निर्विकल्पदशाऽपि

लब्धुं शक्यते। काल्याः साम्राज्ये मृत्युरेवाभिषिक्तो नृपः। स्वयं तस्याभिषेकं कुर्वती स्वस्याः प्रभावं निरतिशयं प्रकाशयन्ती लोकातिगं माहात्म्यं समभिप्रयन्ती तिष्ठति। एतदेव वर्णयन् कविः स्तुतिमुखेन प्रस्तौति—

**विश्वमम्ब कुरुषे शवासनं**
**मृत्युसेचनमखण्डितोदया।**
**चिद्विकल्पमयमन्तरुद्यमं**
**कालमोहितजगत्त्रयं प्रति ॥२३५॥**

हे अम्ब! निखिलभुवनग्रासैकरसिके! अखण्डितः खण्डितोऽपि स्वातन्त्र्यबलादखण्डितत्वेनोत्प्रेक्षित उदयश्चिदानन्दमयः समुल्लासो यस्याः सा तथोक्ता, सती कालेन मोहितं यज्जगत्त्रयं तदभिलक्ष्य चित्स्वातन्त्र्यबलाद् विकल्पप्रचुरमन्तः स्वात्मनि उद्यमो भोगमोक्षादिपुरुषार्थप्राप्तिरूपोद्योगो यस्मिन् तत्तथा, विश्वं शवासनं प्रकल्प्य तत्राधिष्ठाय च त्वं मृत्युसेचनं मृत्योरभिषेकं कुरुषे प्रतिक्षणं निखिलभुवनग्रासरसिका काली सम्पूर्णं विश्वमेव शवासनतया परिकल्प्य स्वयं तत्रारुह्योपविश्य च मृत्युमभिसिञ्चन्ती क्रोधस्य परां काष्ठामुल्लास्य सर्वसंहारमेव कर्तव्यतया निर्धार्यमाणा स्वभीषणतामभिव्यनक्ति। एतादृग्भयेनाखिलं जगत् त्रासयन्ती भयस्य वैभवं समुद्घोषयति, भयावतारं विना लोकव्यवहारसामञ्जस्यासंभवात्। यथोक्तमुपनिषदि—"भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः॥" (कठ० ३।३)। विश्वसंहारस्य विश्वहोमस्य विश्वात्मसात्कारस्य वर्णनं तन्त्रेषु प्राचुर्येणोपलभ्यते। एतत्तुल्यार्थगर्भीकारेण रुद्रयामलेऽपि—

अन्तर्निरन्तरनिरिन्धनमेधमाने
मोहान्धकारपरिपन्थिनि संविदग्नौ।
कस्मिश्चिदद्भुतमरीचिविकासभूमौ
विश्वं जुहोमि वसुधादिशिवावसानम्॥ इति।

कालीशक्तिकृतं मृत्युसेचनं काममाश्चर्याय भवतु नाम, क्रमदर्शने काल एव क्रमः, क्रम एव काल इति निर्धारके नैतदाश्चर्यावहम्। नात्र भीषणतैव, शिवोपासनया मोक्षस्य वर्णनमपि ग्रन्थेऽस्मिन् पूर्वमुक्तं न विस्मरणीयम्—

आद्यचित्प्रसरमूर्तिरम्बिके
पीततां व्रजति यत्कृतास्पदा।
अक्षयं शिवमुपास्य तज्जनः
शक्तिचक्रजनितः प्रमुच्यते॥ (चि० च० ३।१) इति।

एतादृशवर्णने लोकदृष्टिमनुरुद्ध्योक्तं गोरक्षनाथेन परिमले—

इदं हि शास्त्रमाहात्म्यदर्शनालसचेतसाम्।
अपभाषणवद् भाति न च सौभाग्यमुञ्झति॥ (पृ० १०९) इति।

अन्तर्मुखताप्राप्त्यै विश्वसंहार आवश्यक इत्युक्तं परिमले—

परहन्तामये संविदग्नौ संवेद्यतर्पणे ।
इदन्तालक्षणं हव्यं जुहुयादवहिर्मुखः ॥ इति ।

इदन्तालक्षणं जगदेव । जगदिदं माया शक्ति साम्राज्यतया मलिनमिति कृत्वा तस्य संहारः स्वात्मशुद्धयर्थः—

अथ हव्यमिदन्ताख्यं हावं हावं स्वचिन्मुखे ।
उल्लङ्घ्य मायामालिन्यं स्वैरमासीत मेरुवत् ॥

मेरुवदिति दृष्टान्तेन मेरोः सुवर्णमयत्वेन तैजसत्वात् तेजोमयतयाऽवस्थानं निर्मलत्वपोषकमिति पूर्वोक्तप्रसङ्गद्वयोद्धारेण मृत्युसेचनकर्मणोऽभ्यर्हितत्वं बलवत्प्रमाणोपबृंहितम् तदित्थं कालीशक्तेः प्रभूतं प्रभुत्वं वर्णयन् ग्रन्थकारो मातरं स्तुत्वा तत्छरणागतिं समुपदिशतीति ॥ २३५ ॥

सम्प्रति भद्रकाल्याः कार्यमनुवर्णयन् नित्यचित्प्रकाशेन सह जगदपि स्वान्तरं प्रापयन्ती काली चितो ज्वालया महीयस्त्वमतिशेते—

**शाश्वतप्रसरया चिदर्चिषा**
**दीपिताखिलहृषीकमार्गया ।**
**अर्थपञ्चकमिदं त्वया जगद्**
**भद्रमम्ब गमितं तवान्तरम् ॥२३६॥**

हे अम्ब ! प्रकाशविमर्शात्मकसंवित्स्वरूपे ! दीपितः "प्राक् संवित्प्राणे परिणता" इति नीत्या प्राणज्ञानकर्मेन्द्रियक्रमेणतत्तद्विषयग्रहणरूपसामर्थ्यप्राप्त्या प्रकाशितः, अखिलहृषीकमार्गः समस्तेन्द्रियसरणिर्यया तत्तथोक्तया, शाश्वतो नित्यः प्रसरः प्रवाहो यस्यास्तया चिदर्चिषा चित्सम्बन्धिकीलेन, इदं पुरो दृश्यमानमर्थानां पञ्चकं भूतपञ्चकं जगत्, आन्तरं हृद्देशान्तर्गतं गमितं प्रापितमिच्छामात्रेण बाह्योपसंहारक्रमेणान्तः स्थापितमिति तव शक्तेर्भद्रमितिविशेषणविशिष्टं नामेति विपश्चिद्भिर्निर्णीतम्, उक्तकार्यजातप्रकारदर्शनेन इयं भद्रकाल्या एव कृतिरिति निर्धार्यविस्थापितम् । भद्रकाल्याः स्वरूपलक्षणे तन्त्रालोकविवेके जयरथेनापि तन्त्रैः संगृह्य व्याहृतं । तद्यथा—

विश्वं महाकल्पविरामकल्प-
भवान्तभीमभ्रुकुटिभ्रमन्त्या ।
याश्नात्यनन्तप्रभवार्चिषा तां
नमामि भद्रां शुभभद्रकालीम् ॥

( आ० ४, पृ० १७६ )

भद्रात्मनः कल्याणकार्यं प्रशंसन् गोरक्षनाथः प्रकारान्तरेण शक्तेरभ्यर्हितत्वं प्रकटयन् सुभगाविशेषणेन भद्रकाल्याः स्तुतिं चकार। यथा—

स्त्रीपराङ्मुखमनाः किल क्रुधा पुष्पकेतुमदहन्महेश्वरः।
त्वं तदापि ननु तस्य सैव धीः सत्यमम्ब ! सुभगाऽभिधीयसे ॥ ( परि०, पृ० ११८ )

महेश्वरस्य कामदहनप्रसङ्गे बुद्धिरूपेण तद्बुद्धौ स्थिता त्वं निरर्थकं परपीडाकरं कामं दहन्तं शिवं न वारितवतीति सत्यं तव भद्रत्वमेव सुभगात्वेन कीर्त्यते लोके। किञ्च "सर्वो विकल्पः संसारः" इति नीत्या विकल्पात्मकसंसारस्य विलापनमन्तः संस्थापनं स्तुत्यमिति तत्रैवोक्तम्—

यथा स्थितस्तथैवास्स्व मा गा बाह्यमथान्तरम्।
केनचिच्चिद्विकासेन विकारनिकरान् जहि ॥ इति।
(परि० पृ० १६२)

विकारसमूहान् केनापि चिद्विकासेन विलाप्य स्वयं चित्स्वातन्त्र्यानन्देन स्थेयमिति कथनं भद्रं कल्याणकरं महत्त्वाधायकमिति तथा कुर्वती काली भद्रकालीति शुभाख्यया संयोज्याराधनीयेति ग्रन्थकर्तुराशयः ॥२३६॥

अथेदानीं कुटिलया भ्रूभङ्ग्या ससंस्कारं संसारं विनाश्य स्थिता स्वरूपेण रुद्रकालीत्याख्यां समलङ्करोतीति काल्याः प्रभावातिशयं द्योतयन् स्तौति—

**वासना स्थितिमयी भवास्पदा**
**त्वं नियोज्य कृतविश्वसंहृता।**
**त्वद्‌भ्रुवा कुटिलया शिवे क्षणात्**
**संहृतः खलु भवः सवासनः ॥२३७॥**

हे शिवे ! कल्याणमात्रैकविधायिके ! कृतं विश्वसंहृतं संहारो यया सा त्वं भव आस्पदं स्थानं यस्याः, संसार एव शुभाशुभानुष्ठानसंभवात्, एवं भूता या स्थितिमयी आसंसारं स्थिरा वासना धर्माधर्माख्यसंस्कारस्तत्राणुं नियोज्य बलान्निगृह्य, अर्थादनुन्मुखस्याप्युन्मुखित्वं संपाद्य क्षणात् कुटिलया त्वद्‌भ्रुवा भ्रूकुट्या कर्त्र्या, सवासनो भवो निश्चयेन संहृतो विनाशितः क्षणेनैव बाह्यादुपसंहृत्यान्तः स्थापितः। भ्रुकुट्यैव सवासनः संसारो विलाप्यते, तर्हि किमुत कालीप्रकर्षस्य। कुटिलेक्षणरेखया जगद्ग्रासस्य रुद्रकालीकृतत्वं विवेकेऽपि श्रीक्रमसद्भावधृतपद्योद्धारेण, यथा—

इदं सर्वमसर्वं यत् संहारान्तं तु नित्यशः।
कुटिलेक्षणरेखान्तग्रस्तमस्तमितं च यत् ॥
ततो बोधरसाविष्टा स्पन्दमाना निराकुला।
दीधितीनां सहस्रं यद्वमेच्च पिबते भृशम् ॥
सा कला लीयते यस्यां रुद्रकालीति सा स्मृता।

श्रीपञ्चशतिके तु भद्रकालीनाम्नाऽस्याः स्मरणम्। नामभेदेऽपि वस्तुनि न कश्चिद्भेदः। यथोक्तं तत्र—

गमागमसुगम्यस्था महाबोधावलोकिनी।
मायामलविनिर्मुक्ता विज्ञानामृतनन्दिनी॥
सर्वलोकस्य कल्याणी रुद्रा रुद्रसुखप्रदा।
यत्रैव शाम्यति कला रुद्रकालीति सा स्मृता॥
भेदस्य द्रावणाद्रुद्रा भद्रसिद्धिकरीति या। इति ॥२३७॥

अथेदानीं प्रमेयजगति भ्रममाणा सृष्टिवैचित्र्यमारचयती याऽस्याः शक्तिर्यदा कलनस्वभाववैचित्रीं निश्चिनुते, तदैव क्रियात्मिकया कुटिलया भ्रुकुट्या निरीक्ष्य तां सृष्टिचित्रतां विलोपयति—

**कुर्वती जननि सृष्टिचित्रतां**
**या कला भ्रमति वेद्यमण्डले।**
**ब्रूहि सा तव कलोन्मुखी यदा**
**त्वं क्रियोत्कुटिलयात्त्यमूं तदा॥ २३८॥**

कालीनयस्य गुरुत्वमेवात्र सर्वशः प्रतिपादितम्। नात्र क्रमदर्शनेऽन्यदर्शनवद् वस्तुतत्त्ववैविध्यं विचारकोटिमाटीकते। संहारस्यानुक्षणप्रयोगवर्णनगर्भे सृष्टेरपि तथैव पौनःपुन्येन सम्प्रयोगोऽर्थादुन्नेयःसृष्टिसंहारचक्रवैशिष्ट्यावगाहिज्ञानं ज्ञानक्रिया-वैशिष्ट्यज्ञानमुद्भावयेदेव। रचनाविनाशान्तर्गतं हि सर्वं जगदिति दर्शनरहस्यं सातिशयकालकाल्योर्वर्णनेन ग्रन्थकर्तुरभिप्रेतम्। अत्रावतरणिकयैव पदार्थावगत्या प्रतिपदव्याख्यानस्य नैरर्थक्यमिति कृतमधिकेन ॥२३८॥

इदानीं सूर्यादुत्पन्नोऽग्निः काल्या भक्ष्यत इति तथ्यं कालीशक्तिप्रकर्षावबोधन-स्तुत्या वर्णयति—

**उन्मिषन्निमिषदर्कविम्बयाऽ-**
**नन्तयाम्ब परमार्थमध्यतः।**
**अग्निमूर्तिरिह सृज्यते त्वया**
**भक्ष्यतेऽपि च सकृत्प्रभातया ॥२३९॥**

हे अम्ब! स्वरसोदितपरावाग्रूपे। उन्मेषनिमेषौ सृष्टिसंहारवाचकौ स्पन्दक्रमे वर्णितौ, किन्त्वत्र संकोचविकासार्थकौ। सूर्याद्रश्मयः प्रादुर्भूय पुनस्तत्रैव लीयन्ते। अर्क एव विम्बं तेनासंख्येयाः किरणाः संकोचविकासक्रमेण स्वकार्यपर्यायतां वहन्ति। नन्वर्क एव कुतः स्वास्तित्वं लभते, येन रश्मिप्रवाहो निमेषोन्मेषौ भजत इति चेदाह—पर-मार्थमध्यत इति। परमार्थावलग्नतयैव सूर्योऽपि प्रकाशते। तदुक्तम्—"न तत्र सूर्यो

भाति न चन्द्रतारकम्" इत्याद्युपक्रम्य "तस्य भासा सर्वमिदं विभाति" इति। सूर्यं-बिम्बेन किं सूयत इति प्रश्ने प्रत्याह—इह दृश्यप्रपञ्चे तस्माद् बिम्बादग्निमूर्तिः प्रति-बिम्बतया भासते। प्रतिबिम्बमपि वस्त्वत्र गृह्यते। छायाग्राहिणीकथा वाल्मीकीयाऽत्र प्रमाणम्। सृज्यमानाया अग्निमूर्तेः का गतिरित्याह—सक्तप्रभातयेति। नित्यप्रकाश-रूपया त्वया साऽप्यग्निमूर्तिभक्ष्यत एव। अपिरेवार्थे। चः समुच्चयार्थः। परमार्थतश्चि-दानन्दघनीभूतया त्वयाऽर्कः संकोचविकासशीलः समुत्पन्नस्ततोऽग्निस्तस्यापि पुनस्त्वय्येव लय इति क्रमप्रदर्शनेन प्रकाशात् प्रकाशः स्फुरन् पुनः प्रकाशरूपे समावेशं प्राप्य स्वरूपस्थित्या क्रमस्य प्रशम इति पार्यन्तिकं तथ्यम्। ज्ञानं विहाय पदार्था न केनाप्यद्या-वधि दृष्टा इति दार्शनिकी प्रक्रिया। तस्माज्ज्ञानमेव जगदिति प्रस्तुतपद्यार्थसङ्केतः। आगन्तुकप्रकाशस्य नित्यसिद्धप्रकाशे पर्यवसानमिति क्रमार्थः पद्यस्य व्यङ्ग्यार्थः ॥२३९॥

अथेदानीं सूर्यरश्मयोऽपि शक्तिं शरणीकृत्यैव सुखमासत इति तथ्यं शक्तिप्रशंसा-मुखेन वर्णयति—

**भर्गनाम्न इह भास्वतः शिखा**
**शक्तिरम्ब विषयेन्धनोन्मुखी।**
**शान्तिधामजुषि याति निर्वृतिं**
**त्वय्यसौ खलु शिवैकपावके ॥२४०॥**

हे अम्ब! तन्त्रागमप्राणसर्वस्वे! भर्ग इति नाम यस्य तस्य। भर्गशब्दः शिव-पर्यायः सूर्यपर्यायोऽपि। अत्र प्रकरणप्राप्तत्वात् सूर्यस्य ग्रहणम्। भा एव रविस्तस्य प्रकाशात्मकसूर्यस्य शिखा रश्मिरेव शक्तिः। कथंभूता? इति चेदाह—=विषया रूप-रसादय एवेन्धनानि समिधस्तदुन्मुखी। इह जगति। प्रकाशरूपसूर्यशक्तिरत्र विषयेन्धन-प्रधानैव। असौ विषयप्रधाना शक्तिः शिवमेकं मुख्यं केवलं वा पुनातीति पावक-स्तस्मिन् शान्तिरेव धाम त्विट् तां जुषत इति तस्मिन्, त्वयि विमर्शाख्यशक्तौ निर्वृतिं सुखमानन्दम्, खल्विति श्रद्धाप्रसिद्धौ, याति प्राप्नोति। यद्यपि "विश्वानि देव सवित-र्दुरितानि परासुव यद् भद्रं तन्न आसुव", "शं नो मित्रः शं वरुणः", "आदित्यो ब्रह्मे-त्यादेशः", "यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषः" इत्यादि श्रुतिवचांसि सूर्यस्य जगत्सवितृत्वकल्याणकारित्वब्रह्मरूपत्वतेजोमयामृतमयत्वादिकं प्रतिपादयन्ति, तथाप्यत्र प्रकाशरूपत्वेनैव तं संस्मृत्य तस्य शक्तेरपि विमर्शशक्तिप्राप्त्यैवानन्दपर्य-वसितिः प्रतिष्ठापिता। विमर्शाख्या चित्स्वातन्त्र्यमयी शक्तिः शिवमपि पुनाति। शक्तिसहकारेण आत्मानं पावयित्वा शिवोऽन्ते शक्तावेव हृदयरूपायां चिराय शान्तिं लभते। केवलः प्रकाशरविरपि विषयोन्मुख एव, शक्तिसहकारेणैव तस्य चिदानन्द-लाभ इति पद्यार्थसारः ॥२४०॥

अथेदानीं प्राणिनोऽन्तर्हृदि स्फुरदर्थपञ्चकमेव स्वातन्त्र्याद् बहिः सृज्यत इति तथ्यं स्तुतिमुखेन प्राह—

योऽमृताण्डनिभमर्थपञ्चकं
प्राणिनः स्फुरति भामयो रविः ।
संहृतार्धमनु अन्तराहितं
तद्बहिः सृजति चार्थपञ्चकम् ॥२४१॥

यः प्रसिद्धः प्रकाशात्मकः सूर्यः । "वस्तुपिण्डोऽण्डमुच्यते" इति नीत्या वस्तुपिण्डस्याण्डमिति संज्ञा। तन्त्रवाङ्मये चत्वारि अण्डानि—पृथिवी-प्रकृति-माया-शाक्तभेदेन स्वीकृतानि । अमृतस्येवाण्डमित्यमृताण्डं तस्य निभं सदृशमर्थानां भूतानां पञ्चकं समूहोऽर्थपञ्चकं भूतपञ्चकम् । त्रिगुणात्मकप्रकृतेः सकाशादुद्भूतानि तत्त्वानि सूक्ष्माणि भूतेष्वेवान्तर्भूतानि । एतद् भूतपञ्चकं प्राणिनो हृदि संहारकालेऽन्तराहृतं सत् स्फुरति, रविणा स्वाभेदेनात्महृदये स्थाप्यते स्फार्यते वेति भावः । अर्धशब्दोऽर्थवाचकः । "यल्लघु प्रसृतमर्धमण्डपे" ( चि० च० २।१९ ) इत्यत्रापि तस्मिन्नेवार्थे ग्रन्थकृता प्रयुक्तः । अमृताण्डनिभमित्यनेन भावानामपि नित्यताऽत्र स्वीक्रियते । संहारानन्तरं पुनस्तदेवान्तराहितमर्थपञ्चकं रविर्बहिः सृजति । अत्र सृष्टिसंहारौ बाह्यान्तरभेदेन विलसतः, न पुनरत्र सृष्टिप्रक्रियायाः पौराणिकपरम्परानुश्रियते। प्रभवाप्ययौ अन्तर्लोलीभावस्वरूपावेव । आन्तरस्य लोलीभावस्य बाह्यात्मना संस्फुरणमेव सृष्टिः, तस्याश्च अन्तःप्रवेशः संहार इत्युभावेव स्वातन्त्र्यशक्तेर्विलासमात्रम् ॥ २४१ ॥

अथेदानीं कालीशक्तेरधिकाधिकप्रदीप्तिलाभाय विश्वसंहार इति रहस्योद्घाटनाय शक्तिस्तुतिं वर्णयन् शक्तौ भक्त्यतिशयमभिव्यनक्ति—

संहृतोर्ध्वनिकरस्मृतावधि-
र्व्यक्तमण्डतनुरम्ब भास्वरम् ।
काललक्षणकलाप्रदीप्तये
त्वं हि विश्वरसभक्षमास्थिता ॥२४२॥

हे अम्ब ! संसारमपि मोक्षतयाऽवभासनशीले ! संहृतात् संहारादूर्ध्वमनन्तरं ये वस्तुनिकराः पदार्थव्रजास्तेषां संस्मृतावधि स्मरणं यावत् भासनं शीलं यस्य तत्, अण्डतनुः जगच्छरीरं व्यक्तं प्रकटंप्रकाशमानमेव । स्मृत्याऽतीतसंहारविषयकोऽनुभवः साक्षात्कृतो ब्रह्माण्डस्याविकलभावनायां परमप्रमोदाय जृम्भते । ननु किमर्थं संसारसंक्षये महानादर इति जिज्ञासायां प्रतिवक्ति—कालो लक्ष्यते यया तथोक्ता या कला संहारकाली, तस्याः प्रदीप्तये भास्वरत्वाभिवृद्धये । हि निश्चयेव । त्वं संहारकाली विश्वस्य सुखदुःखादिद्वन्द्वगर्भितस्य, रस आस्वाद्यमानोऽनुभवस्तं भक्षयतीति तच्छीला, कर्तर्यच् । तमास्थिता पूर्वोक्तानुभूतिस्वारस्यप्राप्तये समाश्रिताऽसि । तत्र सर्वेषु क्रमेषु सृष्टिक्रम एव सर्वश्रेष्ठः, परमेश्वर्याः पारमैश्वर्यप्रकाशनसौलभ्यात् । ततः स्थितिक्रमः, यत्र सवि-

कल्पकमेयज्ञानस्यानुभववैविध्यम् । सृष्टेः पल्लवः स्थितिः । बीजादङ्कुरितोऽपि वृक्षः पुष्पपल्लवफलादिरहितः कष्टायैव क्रमते । स्थित्यैव सृष्टिकौशलक्रमोऽनुभूयते तज्ज्ञैः । किमधिकं स्थितिमन्तरा सृष्टिचाकचिक्यस्य नैरर्थक्यमेव प्रज्ञावताम् । तदनन्तरं संहारक्रमस्योद्यमवैभवावलोकनक्रमः । स च सृष्टिस्थितिभ्यामपि गुरुतरः, नहि कश्चित् स्वयं सृष्टं पालितं वा विकर्तुं नाशयितुं वा चिन्तयेदपि, का कथा तत्कर्तुम् ? ज्ञानक्रिययोर्ज्ञानस्यैवोत्तमत्वं सर्ववादिसम्मतम् । अत्रापि दण्डमुण्डक्रमेण "मुण्डनं ज्ञानरूपेण इति नीत्या तस्य समर्थनम् । जननीजठरगह्वरान्तर्वासक्लेशमनुभवन् हि जनः सृष्ट्या उदास्ते । गर्भवासो ह्युपद्रवानुभूतीनां परा भूमिः । सा च सृष्टिः "विनाशाघ्रात उत्पादः" इति नीत्या मरणानुभूत्यविनाभूतैवेति नात्यन्तं स्पृहा जननादौ । स्थितिरपि लवणेन्धनतैलघृतादिचिन्तानुप्राणिताऽपमानभूमिरेव । नहि कश्चित् प्राज्ञश्चिन्तापिशाच्याक्रान्तं जीवनमनुक्षणं मृष्यात्? सुखदुःखे लाभालाभौ जयाजयौ द्वन्द्वोपप्लवभूतौ न सुखकरौ सचेतसाम् । जन्ममय्या पीडया स्थितिमय्या चिन्तया च निखिलोऽपि लोक उभयमपि दुःखानुभूतिग्रस्ततयैव परामृशति । अस्मद्गृहे तु पञ्चकृत्यानि स्वभावभूतानीति स्वभावभूते वस्तुनि न काऽप्यनुपपत्तिः । तदुक्तं तन्त्रालोके—"अस्यां भूमौ सुखं दुःखं बन्धो मोक्षश्चितिर्जडः । घटकुम्भवदेकार्थाः शब्दाः" इति । तथा च संहारोऽपि स्वात्मस्वभाव एवेति विश्वरसभक्षणं सम्यगेव ॥ २४२ ॥

अथेदानीं सूर्येण सहितास्तन्मरीचयः शक्तौ प्रलीयन्त इति तथ्यं शक्तिप्रशंसामुखेन स्तौति—

**भूतचक्रमधुकोशसम्भृतं**
**तत्तदर्थमधु पातुमुत्सुकः ।**
**यन्मरीचिविषयः सभास्कर-**
**स्त्वद्रुचौ शलभवत् प्रलीयते ॥२४३॥**

छान्दोग्यतृतीयाध्याये प्रथमखण्डे सूर्यस्य देवमधुत्वेन वर्णनं मरीचीनां च मधुनाडीत्वेन रूपणं कृतं लभ्यते । आदित्यस्य चतुरस्रं मधु विद्यते, ततः क्षरणं चोपवर्ण्यतेन सूर्यस्य रोहितं रूपं मधुरूपमिश्रणाद् व्याहृतम् । अत्र भूतेषु मधुकोशस्य सत्तामुद्भाव्य तत्पातुं प्रवृत्तानां सूर्यसहितमरीचीनां विमर्शशक्तौ प्रलय उपवर्णितः । हे अम्ब ! भूतचक्रं पञ्चमहाभूतसमूहो मधुकोशेन संभृतं परिपूर्णम् । तत्तद्भूतेषु यन्मधु तत्पातुं समुत्सुकः सूर्यरश्मिनिवहः सूर्येण सह त्वद्रुचौ शक्ति प्रकाशे शलभवत् पतङ्गवत् प्रकाशचाकचिक्याद् बलादात्कृष्टः प्रलीयते स्वात्मसमर्पणेन त्वन्मयतामासाद्यते । दृष्टान्तेन विमर्शाख्यकालीशक्तिप्रयुक्तप्रकाशः सूर्यरश्मीन् बलान्निगृह्य स्वस्मिन् विलाययतीति द्योत्यते । सूर्यरश्मयस्त्रिलोकीं स्वतेजसाऽऽप्याययन्ति । तत्प्रयुक्तमेव त्रिलोक्यां जीवनप्रवाहप्रारम्भः । तेऽपिशाक्तप्रकाशे निगृहीताः शलभवत् प्रलीयन्त इति शक्तिप्रकाशस्य प्रचण्डताऽभिव्यज्यते ॥ २४३ ॥

अथेदानीं प्राणस्यापि शक्तौ लय इति शक्तिप्रकर्षवर्णनमुखेन मातरं स्तौति—

**प्राण एप यमकाल उच्यते**
**मध्यवाहतनुरग्निमम्ब यः ।**
**रुद्रमेतदुपनीय खं परं**
**तत्र सर्गविमुखं करोष्यमुम् ॥२४४॥**

मध्यवाहतनुः, वहति शरीरप्राणनधारणपोषणादिकृत्यजातं निर्वहतीति वाहः प्राणादिपञ्चवायुव्रातः । अन्येऽपि देवदत्तकृकरधनञ्जयादयः पञ्च वायवः सन्ति । तेषां बहुत्वादत्र शास्त्रे तेषां बहुवचनान्त एव प्रयोगः प्रायशः । हृदयादेव प्राणचारश्रवणात् पञ्चसु प्राण एव मध्ये हृदयदेशे प्रवहणशीलत्वात् मध्यवाहपदेन तत्रस्थत्वेऽपि सर्वशरीरसन्धारणक्षमत्वान्मध्यवाह एव तनुः शरीरं यस्येति कृत्वा मध्यवाहतनुरेष शरीरस्थः प्राणः, यमयतीति यमः, कर्तरि अच् । स चासौ काल इति नियन्त्रककालनाम्ना प्राधान्यादुच्यते । एवंभूतो यो रुद्रमुग्रमग्निं कालाग्निं परं खं चिदाकाशमुपनीय प्रापय्य अमुं पूर्वोक्तं तत्राकाशे सर्गविमुखं संहारोन्मुखं करोषि, त्वमिति शेषः । यमकाल्याः श्रीपञ्चशतिकोक्तलक्षणं विवेके—

यमरूपस्वरूपस्था रूपातीतस्वरूपगा ।
सा कला लीयते यस्यां यमकाली तु सा स्मृता ॥

श्रीक्रमस्तोत्रेऽपि—

सर्वार्थसंकर्षणसंयमस्य
यमस्य यन्तुर्जगतो यमाय ।
वपुर्महाग्रासविलासरागात्
संकर्षयन्तीं प्रणमामि कालीम् ॥

श्रीक्रमस्तोत्रलक्षणेन चिद्गगनचन्द्रिकोक्तलक्षणस्य साम्यं सुस्पष्टमेव । प्राणस्य जगन्नियन्तृत्वेन तच्छरीरं संकर्षयन्तीं कालीं प्रणिपातेन प्रपन्नोऽस्मीति तदाशयः ॥ २४४ ॥

अथेदानीं प्रलयाग्निमरीचयो भीमपराक्रमा विमर्शाख्यकालीशक्त्या स्वात्मनि विलापिता इति शक्तिस्तुतिमुखेन मातरं लोकोत्तरमहिमां स्तौति—

**त्वत्क्रमोपहतभानुमण्डलः**
**क्रोध एष लयवह्निरुद्धतः ।**
**विश्वभक्षणरसा मरीचयो**
**यस्य भीमविभवास्त्वया हृताः ॥२४५॥**

हे अम्ब ! विश्वसंहारक्रीडाशीले ! तव क्रमेण पूर्वं २४२-२४३ पद्याभ्यामुपहतं भानुमण्डलं यत्र स एष तव उद्धतो भीषणो लयवह्निः प्रलयाग्निरूपः क्रोधो यस्य प्रलयाग्निस्वरूपक्रोधस्य भीमविभवाः, भीमो भयङ्करो विभवो विशिष्टैश्वर्यं यासां ताः, विश्वभक्षणे रस आनन्दो यासां ता मरीचयः किरणाः "भानुः करो मरीचिः स्त्रीपुंसयोः" इत्यमरः, त्वया विमर्शाख्यकाल्या हृताः स्वात्मनि विलापिताः। हुता इति पाठेऽपि स एवार्थः। विवेके पञ्चशतिकोक्तकालाग्निरुद्रकाल्या लक्षणोदाहरणे—

वरदा विश्वरूपा च गुणातीता परा कला।
अघोषा सास्वराराावाकालाग्निग्रसनोद्यता॥
निरामया निराकारा यस्यां सा शाम्यति स्फुटम्।
कालाग्निरुद्रकालीति सा ज्ञेयामरवन्दिता॥ इति।

श्रीक्रमस्तोत्रेऽपि—

कालक्रमाक्रान्तदिनेशचक्र-
क्रोडीकृतान्ताग्निकलाप उग्रः।
कालाग्निरुद्रो लयमेति यस्यां
तां नौमि कालानलरुद्रकालीम्॥ इति।

क्रमस्तोत्रोदाहरणे चन्द्रिकोक्तलक्षणस्य साम्यं सुस्पष्टमेव। सूर्यं प्रमाणमित्याहुरिति वचनेनाग्नेरपि लयः प्रमाणांशलय एव। अत्र सर्वत्राऽपि लये त्रिपुट्या लय एव प्राधान्येन वर्णितः। तत्र परा, परापरा, अपरा, कालकर्षिणीति चतस्रः शक्तयः सृष्टि-स्थिति-संहार-भेदेन गुणिता द्वादशसंख्याका भवन्ति। तत्र चतस्रः प्रमात्रंशविलापिकाः, अन्याश्च प्रमेयांशघस्मर्यः, अवशिष्टाश्चतस्रः प्रमाणांशचर्बणप्रवणा इत्येवं द्वादशापि शक्तयः प्रमात्रादित्रिपुटीविधानां लयकर्त्र्यः। व्यापिनीसमनोन्मन्यः क्रमेण सृष्टिस्थितिसंहारनाम्नाऽपि व्यपदिश्यन्ते। सृष्टिस्थितिसंहाराणाम् अत्ति-प्राप्ति-तृप्ति-पर्याया अपि महानयप्रकाशे वर्णिताः। एतेन संहारस्तृप्तिपर्यायः। अत एव परमतृप्तिलाभाय काल्याः संहारो महता समारम्भेण प्रचलतीत्यत्र तथैव वर्णितः। ज्ञानरूपताऽपि संहारस्य पूर्वमुक्तैव दण्डमुण्डक्रमभेदवर्णनप्रसङ्गेन। अतः स्वात्मस्वरूपपरतत्त्वस्य परिपूर्णा वृत्तिः संहार एव महार्थनाम्नाऽन्यत्रवर्णितः॥ २४५॥

अथेदानीं भगवत्या मरीचयः कर्तृभूताः क्रमेण मेयमानमातृरूपां त्रिपुटीमात्मसात्कुर्वत्यः काल्याः शुश्रूषां कुर्वाणा दृश्यन्त मरीचिस्तुतिमिषेण मातरं स्तुवन् प्रभावमाहात्म्यं विनेयेषु द्रढयति—

**ग्राह्यमत्र पुरतो हरन्ति ते**
**यत् पृथग् ग्रहणमप्यसुं ततः।**
**ग्राहकांश्च वरदे मरीचयः**
**तास्त्वदर्पितजगद्विजृम्भणाः॥२४६॥**

हे वरदे ! प्रपन्नार्तिहरणपूर्वकं मनोऽभीष्टवरदानोद्यते ! ते तव मरीचयः। कथंभूताः ? इत्याह—त्वदर्पितेत्यादि। त्वयि अर्पितं स्वरूपत्वेन स्थापितं धृतं यज्जगत् तेन विजृम्भा स्फुरत्ता यासां तास्तच्छीलाः। अव्यवहित पूर्वपद्ये विश्वभक्षणरसिका इति स्वभावतया वर्णिताः। अत्र दृश्यप्रपञ्चे पुरतः समक्षस्थितं ग्राह्यं मेयं पूर्वं हरन्ति विलापयन्ति, ततोऽनन्तरं यत् प्रमेयात् पृथक् स्थितं ग्रहणमपि ज्ञानमपि, अमुं बुद्धि-स्थितं हरन्ति। ततो ग्राहकान् प्रमातॄनपि, चोऽप्यर्थे, हरन्ति। "ज्ञानस्यानन्त्याज्ज्ञेय-मल्पम्" इति योगसूत्रनीत्या ज्ञानमेव सम्प्रवृद्धं सज्ज्ञेयमल्पयति। एतेन तयोः पार्थक्यं सुस्थमेव। अत्र पद्ये त्रिपुट्या लयक्रमोऽपि संहारक्रमवर्णनव्याजेन सङ्केतितः। मेयं मितौ मितिश्च प्रमातरीत्येव संहारक्रमः। मानस्य लयोऽन्तर्भावो न कुत्रापि भवति। "भवानेकः शिष्यते शेषसंज्ञः" इति भागवतोक्त्याऽत्रापि परप्रमात्री विमर्शात्मा काली शक्तिरेव शेषसंज्ञिका पर्यन्ते स्थायिनीति स्तुति र्व्यज्यते। "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते" इति गीतोक्त्या क्रियाया ज्ञाने लयः, ज्ञानस्यापि बहिरुन्मुख-स्येच्छायां लयः, इच्छा च काली शक्तिरेव विमर्शाख्या॥ २४६॥

अथेदानीं श्मशानेश्वरमपि महाकालं सा प्राणाग्निहारिणी शक्तिर्ग्रसतीति तथ्यं देवीस्तुतिमुखेन वर्णयन् मातरं स्तौति—

> यः श्मशान इह भूतघस्मरे
> रज्यतेऽम्ब करवीरनामनि।
> ग्राहकं ग्रससि तं श्रुतं महा-
> कालमप्यसुहुताशदुर्ग्रहा ॥२४७॥

हे अम्ब ! अनुत्तरविश्रान्तिभूमे ! इह भावात्मके जगति करवीरनामनि एतदाख्ये भूतानां घस्मरे भक्षके श्मशाने चिताभूमौ यस्तदाख्येश्वरो रज्यते रागात्मना प्रीतिमापद्यते। करवीरनामकश्मशानविषये तृतीयविमर्शस्य द्व्यशीतितमपद्य-व्याख्यानमवलोकनीयम्। तं श्रुतं प्रसिद्धं महाकालमपि ग्राहकं प्रमातारं प्राणग्रहीतारं वा असव एव हुताशोऽग्निस्तेन दुःखेन ग्रहीतुमशक्या त्वं ग्रससि। प्राणाग्निनाऽप्यशक्य-प्रतिरोधा शक्तिर्महाकालमपि प्राणिभक्षकश्मशानाधिपं ग्रसति प्राणापहारपूर्वकं स्वात्मनि विलापयतीत्यर्थो व्यज्यते॥२४७॥

अथेदानीं दिक्चरीखेचर्योः संहारक्रमं वर्णयन् मातृवैभवप्रकर्षं प्रदर्शयति—

> दिक्चरी दशसु दिक्षु या बहि-
> स्तत्तदिन्द्रियमयीषु जृम्भते।
> अन्तरम्ब करणत्रये च या
> खेचरी मलसि ते च त्वत्प्रिये ॥२४८॥

हे अम्ब ! खेचर्यादिशक्तिचतुष्टयाधीश्वरि ! बहिः दृश्यप्रपञ्चे तत्तदिन्द्रियमयीषु दशसु दिक्षु पूर्वोत्तरपश्चिमदक्षिणाख्यासु सान्तरालास्वध ऊर्ध्वादिक्रमसंकलनयोक्तसंख्यकासु प्राच्यादिव्यवहारकारणभूतासु दिक्षु या चरतीत्यन्वर्थतया प्रथिता शक्तिर्जृम्भते । अन्तःकरणत्रये च बुद्ध्यहङ्कारमनस्सु या खेचरी जृम्भते त्वत्प्रिये ते द्वे अपि त्वं गलसि भक्षयसि । खेचरी-गोचरी-दिक्चरी-भूचर्यादिशक्तीनां मतभेदेन वर्णनं पूर्वमेव विस्तरेण कृतं विद्यते । तत एव पर्यनुयोगः शाम्येदित्यत्र न संशीतिः । बाह्याभ्यन्तरचारिण्यः स्वशक्तयोऽपि कालकाल्या नावशेषिताश्चेदन्येषां का कथा ? क्रमः कालकृत एव । कालः प्रतिक्षणविपरिणामीति संहारार्थकतां समाहरति । संहारदर्शने संहारस्यैव विजयोद्घोषो ग्रन्थेऽत्र महता समारोहेण वर्णितो जृम्भते ॥२४८॥

अथेदानीं संवित्स्वभावशिवसूर्यस्य मरीचयः सृष्टेरारभ्य प्रवर्तमाना द्वादशक्रमोल्लिखितसृष्टिस्थितिसंहारेभ्य ऊर्ध्वं गत्वा समष्टिरूपतामासाद्य त्रयोदशीशक्तिरूपेण समुज्जृम्भन्ते । त्रयोदशी हि नियन्त्रिका सर्वाधिष्ठात्री शक्तिः सर्वोत्कृष्टतया विराजते । सा काल्यपरपर्याया संवित्स्वभावा विमर्शशक्तिरेवेति तस्याः स्तुतिमारचयन् ग्रन्थकारो मातरं स्तौति—

**त्वष्टुरम्ब ! शिवबोधभास्वतः**
**सृष्टितः प्रभृति या मरीचयः ।**
**द्वादशक्रमपदत्रयोर्ध्वगा-**
**स्तासु संचरसि वा त्रयोदशी ॥२४९॥**

हे अम्ब ! अशेषशब्दराशिस्वरूपे ! शिव एव बोधसूर्यस्तस्य, सविता हि "सूयते सचराचरम्" इति नीत्या चराचरस्य स्रष्टा, तस्यैव सृष्टिकर्तृत्वेन त्वष्टेति नाम । तस्य मरीचयो भानवः सृष्टेरारभ्य संहारं यावज्जगति प्रसृताः कृत्यजातं निर्वहन्ति । ता मरीचयो द्वादशप्रकारकक्रमपदे स्थिता ये सृष्टिस्थितिसंहारास्त्रयस्तेभ्योऽप्यूर्ध्वं गताः सर्वं कार्यजातं निभालयन्ति । तासु समष्टिरूपतया द्वादशेभ्योऽप्यूर्ध्वं त्रयोदशीरूपेण स्थिता त्वं सर्वं व्याप्नुवत्यपि तत ऊर्ध्वं नियामिकात्वेन संचरसि । द्वादशानां समष्टिरेव त्रयोदशीत्वं न त्वन्यत् किमपि पदम् । कामं भेदानामामन्त्यं भवेत्, तत्समष्टेस्तु पार्थक्यमनुत्तरत्वं च स्यादेव ॥२४९॥

अथेदानीं तुर्यशक्तेरनाख्याया विक्रमत्वात् तस्य निदानं तस्याः संवित्त्वमेवेति तथ्यं विनेयजनबोधोपयोगाय व्याहरन् मातुर्भीमकालीत्याख्यां प्रस्तौति—

**सक्रमाक्रमविमिश्रभावत-**
**स्त्वत्क्रमस्त्रितयचारुवीक्षणः ।**
**तुर्यरश्मिगुणविक्रमैकभू-**
**स्त्वं क्रमत्रिगुणभीमकाल्यसि ॥२५०॥**

हे कालि ! कलनस्वभावभावे ! तव क्रमस्त्वत्क्रमः, अनाख्याख्यः, त्रितयेन सृष्ट्यादिना चारु शोभनं वीक्षणं साक्षात्कारो यस्य सः। कथंभूतोऽसौ ? इत्याह—सक्रमेत्यादि। क्रमाक्रमाभ्यां सह विमिश्रो भावो यत्र तथा। अनाख्यक्रमे क्रमाक्रमयोर्विमिश्रभाव एवावतिष्ठते। तदुक्तं विवेके—

क्रमत्रयाणां यच्चक्रं घोरघोरतरं महत्।
कालरूपं मरीच्याद्यं त्वाष्ट्रं कल्पान्तकान्तगम्॥
आचरेत्तु महाचारचातुर्येणैव तत्र च।
या कला घोरघोरोग्रा तस्याः सा तुर्यगा शिवा॥ (आ० ४, पृ० १९०)

कीदृक् तदनाख्यचक्रमित्याह—तुर्यरश्मेर्गुणाः सृष्ट्यादित्रयः, तेषां क्रमराहित्यं विक्रमत्वं तस्यैका भूर्निदानमादिकारणम्। तुर्येऽनाख्यचक्रे क्रमस्याभावात् तादृशक्रमराहित्यस्य एकमात्रं भूः स्थानं त्वमेवासि। क्रमाणां गुणत्रयेण का आख्या तवेत्याह—भीमकालीति। क्रमाणां त्रिगुणैस्तु त्वं भीमकाली असि। द्वादश त्रयोदश वा मुख्यभेदाः कालीशक्तेर्विवेके प्रोक्ताः। तत्र भीमकाल्याः परिगणनं नास्ति। तथापीह वर्णनात् चिद्गगनचन्द्रिकाग्रन्थस्य वैशिष्ट्यं द्योत्यते। परापरादिभेदे तुरीया शक्तिः कालकर्षिणी। साऽपि परमभूमिस्थिता हठात् कृत्स्नं क्रममधिष्ठाय समुज्जृम्भते। यथोक्तं विवेके—

श्रीमत्सदाशिवपदेऽपि महोग्रकाली
भीमोत्कटभ्रुकुटिरेष्यति भङ्गभूमिः।
इत्याकलय्य परमां स्थितिमेत्य काल-
संकर्षिणीं भगवतीं हठतोऽधितिष्ठेत्॥ (आ० ४, पृ० १९३)

ज्ञानगर्भस्तोत्रे सादृश्यद्योतकोऽयं श्लोको यथा—

क्रमत्रयसमाश्रयव्यतिकरेण या संततं
क्रमत्रितयलङ्घनं विदधती विभात्युच्चकैः।
क्रमैकवपुरक्रमप्रकृतिरेव या शोभते
करोमि हृदि तामहं भगवतीं परां संविदम्॥

क्रमः सृष्टिस्थितिसंहाराणामाभासविच्छेदस्वभावः, अक्रमो युगपत्तेषामवभासः, तौ क्रमाक्रमावाक्रामतीति क्रमाक्रमाक्रामिणी। सृष्ट्यादिक्रमत्रयरूपतामवभासयन्त्यपि तदतिवर्तनेन परिस्फुरन्ती क्रमाक्रमवपुः परैव अनाख्या पारमेश्वरी संवित् परामृष्टा भवतीत्यर्थः। विक्रमा सा तुरीयाऽनाख्या परापरादिक्रमे कालसंकर्षिणी क्रमस्य गुणैर्भीमकालीत्युच्यते॥ २५०॥

अनाख्यशक्तिसकाशादेव द्वादशमरीचय उदयं यान्ति, सा चानाख्या चिदाकाशसंश्रिता प्रकाशाभिन्नशिवेन साकं समरसा तिष्ठतीति तन्त्रागमगूढरहस्यं साधकानुपदिशन् प्रस्तौति—

यत्र कालि दश ते कराः स्थिता
द्वे च यान्त्युदयमप्यमूर्यतः ।
तन्नभः श्रयसि सर्वतः परं
त्वं प्रकाशशिवचन्द्रिका सती ॥२५१॥

हे कालि ! कलनस्वभावाधीश्वरि ! यत्र पूर्वपद्योक्तानाख्यदशायां ते तव दश च द्वे चेत्याहृत्य द्वादश करा भानवः स्थिताः, न केवलमेतदेवापि तु यतः सकाशादमूः पूर्वोक्ता द्वादश उदयमपि यान्ति । तत्र त्वं प्रकाशशिवचन्द्रस्य चन्द्रिका सती सर्वतः परं तद्विलक्षणं लोकोत्तरं नभश्चिदाकाशं श्रयसि स्वनिवासत्वेनाश्रित्य तिष्ठसि । चिदाकाशनिवासिनी शक्तिः शिवसामरस्यापन्नैवेति चिदाकाशस्यैतद् वैशिष्ट्यम् ॥ २५१ ॥

पुनस्तस्यैव चिदाकाशस्य महत्त्वं सप्रयोजनं वर्णयति—

शान्तमम्ब यदभिन्नमम्बरं
यत् प्रकाशघनमप्यपोह्यते ।
यद् द्वयोभयपदातिरोचनाद्
यत्र मुक्तनिकरो निलीयसे ॥२५२॥

हे अम्ब ! परासंविद्रूपे ! शान्तं निष्कलं निराभासं निर्विकल्पं यदभिन्नं भेदविनिर्मुक्तं चिदम्बरं यद्धि प्रकाशेन घनं सान्द्रमप्यपोह्यते शब्दनस्वभावताविकल्पदशा तव न परित्यज्यते, यच्च द्वयोभयपदमतीत्यापि रुचिसम्प्रवर्द्धनकौशल्याद् यत्र यस्मिन् स्थितिविशेषे, मुक्तः परित्यक्तो निकरः शक्तिनिवहो निलीयसेऽन्यैरज्ञाता यथा स्यामिति कृत्वा स्वात्मानं गोपायित्वा तिष्ठसि। सकलनिष्कलोभयभेददशामतीत्य "न किञ्चिदेतत्" इत्युक्तिमनुहरसीति भावः ॥ २५२ ॥

अथेदानीं केवलं नादरूपतयैव शक्तिसङ्केतो गृह्यत इति शक्तिदशाप्रवाहमुपवर्णयन् शाक्तप्रकर्षं लोकोत्तरं प्रस्तौति—

त्वं पदत्रितयगर्भितोदयं
निर्व्यपोहमुपगुह्य शङ्करम् ।
ऐकरस्यलसदक्षयप्रथं
नादमुद्वमसि सर्वतः शिवे ॥२५३॥

हे शिवे ! चितिक्रियाभिसम्बन्धात् स्वातन्त्र्यशक्तिस्वरूपे ! पदानां त्रितयेन सृष्टिस्थितिसंहारादिना गर्भितोऽन्तर्निविष्ट उदयो यस्य तम्, निर्व्यपोहमपोहो विकल्पः

स न संभवति यत्र तादृशम्। यद्यपि शब्दनस्वभावताव्यतिरेको न कदापि सह्यस्तथापि केवलचिद्रूपतातात्पर्येणोक्तप्रयोगः। एवंभूतं सदा प्रकाशमानं शङ्करमुपगुह्य गोपायित्वा ऐकरस्येन लसन्ती अक्षयप्रथा यस्मिस्तं नादं नैसर्गिकध्वनिरूपं सर्वतः सर्वस्मिन् प्राणिसमूहे उद्वमसि अन्तःस्थितं नादं बहिर्मुखं क्षिपसि। नादस्य सांसिद्धिकत्वं तन्त्रालोके—

नास्योच्चारयिता कश्चित् प्रतिहन्ता न विद्यते।
स्वयमुच्चरते देवि प्राणिनामुरसि स्थितः॥
योऽसौ नादात्मकः शब्दः सर्वप्राणिष्ववस्थितः।
अधऊर्ध्वविभागेन निष्क्रियेणावविष्ठते॥

सर्व एव परामर्शराशिस्तत्स्फारसार एवेति तात्पर्यम्॥ २५३॥

अथेदानीं शक्तिस्वरूपज्ञानाय चेष्टितव्यमन्यथा जीवनस्य वैयर्थ्यं स्यादिति तत्त्वं प्रकाशरूपेण सर्वान् प्रति शिक्षयन् मातृस्तुतिं प्रस्तौति—

**ये विदन्ति तव रूपमीदृशं**
**ये च नित्यकृततल्लयोद्यमाः।**
**एष तान् प्रति भवन् सुधामयो**
**येऽन्यथा विषमयश्च तान् प्रति॥२५४॥**

ये तव शक्तेराराध्यदेवताया ईदृशं पूर्वोक्तं रूपं लक्षणं स्वरूपं च विदन्ति, ये चान्ये नित्यमहर्निशं कृतस्तल्लये उद्यमः प्रयत्नो यैस्ते तान् प्रति तेषां कृते एष ग्रन्थः सुधामयः अमृतत्वप्राप्तिरूपः। ये चान्यथा विपरीतभावनया श्रोष्यन्ति अध्येष्यन्ते वा, तेभ्य एष विषमय एव। शक्तिपूजाबहिर्मुखानां सर्वं दुःखान्तमेव। तदुक्तम्—"नायमात्मा बलहीनेन लभ्यः" (मुण्डक० ३।४) इति। "भूत्यै न प्रमदितव्यम्, कुशलान्न प्रमदितव्यम्", "शं नो विष्णुरुरुक्रमः" इति। उरु बहु क्रमः पराक्रमो यस्य सः। पराक्रमवतां हि लोकोऽयमित्यनेन पराक्रमरूपा शक्तिरेव स्तूयते। अत एव शिवादभिन्नां शक्तिं मन्यमानः "बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः" इत्येतैः शक्तिमेव बलस्वरूपां बहु मन्यते। वस्तुगत्याऽज्ञानमेव दारिद्र्यम्, तस्य नाशश्चैतन्यप्राप्त्यैवेति चिच्छक्तिरूपायाः शक्तेराश्रयः शरीरभृता करणीयः। का नाम चिच्छक्तिरिति जिज्ञासायामाह—"चिच्छक्तिश्चेतनारूपा" इति, "चितिः स्वतन्त्रता विश्वसिद्धिहेतुः" इति च। विद्या ब्रह्मप्राप्तिरूपा शक्तिरेव। तदुक्तं श्वेताश्वतरे—"द्वे अक्षरे ब्रह्मपरेऽनन्ते विद्याऽविद्ये निहिते यत्र गूढे। क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याऽविद्ये ईशते यस्तु सोऽन्यः॥" इति। एतेन अविद्यानिवारकत्वरूपं सामर्थ्यं चैतन्यापरपर्यायं चिच्छक्तिः। अत एव देवीभागवतपञ्चमस्कन्धे—"वर्तते सर्वभूतेषु शक्तिः सर्वात्मना नृप। शववच्छक्तिहीनस्तु प्राणी भवति सर्वथा॥ चिच्छक्तिः

सर्वंभूतेषु रूपं तस्यास्तदेव हि।" इति। "चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते" इति संक्षेपशारीरकाचार्याः। "चैतन्यमात्मा" इति शिवसूत्रमपि शक्तेरात्मस्वरूपत्वं निर्णयति। "चैतन्यस्वरूपा शक्तिः" इति गौडपादीयसूत्रेऽपि। देवीभागवतप्रथमश्लोकेऽपि—"सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमहि। बुद्धिं या नः प्रचोदयात्।" इति। इयं च त्रिचरणा गायत्री। अत एव मत्स्यपुराणे—"गायत्र्या च समारम्भस्तद्वै भागवतं विदुः" इति। "सैषानन्दस्य मीमांसा भवतीति" इति श्रुतिरपि। आनन्दस्य ब्रह्मणः सैषा चिद्रूपा शक्तिर्मीमांसा भवति विमर्शात्मिका भवतीति शङ्करारण्यचरणैर्विद्यारत्ने व्याख्यातम्। चिच्छक्तिर्जडशक्तिविरोधिनी मायापरिणामविशेषरूपा। सृज्यशक्तिमात्रोपलक्षणमेतत्। यथोक्तं विष्णुपुराणे—"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः॥ शतशो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः। भवन्ति तपसां श्रेष्ठ पावकस्य यथोष्णता॥ निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि। प्रधानकारणीभूता यतो वै सृज्यशक्तयः॥ निमित्रमात्रं मुक्त्वैकं नान्यत्किञ्चिदपेक्ष्यते। नीयते तपसां श्रेष्ठ स्वशक्त्या वस्तुतस्तु ताम्॥" इति। जडस्य तु केवलं दृश्यमेवात्मा, चितस्तु तदतिरिक्तमपीति विशेषः।

अत एवात्र परतत्त्वस्य विश्वरूपत्वं विश्वाधिकत्वं च युगपदेव स्वरूपलक्षणतयोच्यते। विश्वमेव यस्या रूपं न तु विश्वाधारत्वेन धर्मिभूतमन्यद्रूपम्, धर्मधर्मिभावस्य तन्त्रेऽनादृतत्वात्। उक्तार्थे प्रमाणं विष्णुपुराणं यथा—"यथा हि कदली नाम त्वक्पत्रान्या न दृश्यते। एवं विश्वस्य नान्यत्वं त्वत्स्थादीश्वर दृश्यते॥' इति। देवीभागवते प्रथमस्कन्धेऽपि—"वटपत्रशयानाय विष्णवे बालरूपिणे। श्लोकार्धेन तदा प्रोक्तं भगवत्याखिलार्थदम्॥ सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम्।" इति। अथवा साक्षाद् ब्रह्मणो जीवभावोऽत्यन्तं नीचं रूपमिति शुनकतुल्यत्वम्। अत एव नीचसेवात्मकवृत्तेः श्ववृत्तिरिति संज्ञा मनुस्मृत्यादौ। नीचतरः पशुभाव इति यावत्। तादृशं स्वरूपं विगतं निर्गतं यस्याः प्रसादात् सा विश्वरूपा। एतेनापि शक्तेः परमोत्कर्षः स्वरूपप्राप्तिहेतुत्वेनोक्त इति चैतन्यलाभरूपात्मप्राप्तिरेव जीवस्यामृतमयता, तद्विपर्यये विषतुल्यतेति ग्रन्थः सुस्थितार्थः। विश्वोत्तीर्णत्वं चापि तस्यास्तत्त्वबहिर्भूतत्वाद् युक्तिसिद्धमेव। "विश्वाधिपो रुद्रो महर्षिः' इति श्रुतिरपि विश्वोत्तीर्णत्वसमर्थिका। तदेयं स्वात्मज्ञानविमुखानां चिच्छक्तिलाभरूपपौरुषहीनानां कालिकाशक्तिस्तुत्यात्मकोऽयं ग्रन्थो विषमय इति ग्रन्थः सुकरः शब्दार्थपरीक्षणक्रमे तात्त्विकार्थप्रदर्शक इति दिक्॥२५४॥

ग्रन्थोऽयं मूर्खाणां प्रमज्जकश्चतुराणां समुद्धारक इति शक्तिसाहचर्यभावुकानां नितरां हितावह इति प्रस्तौति—

यः प्रमज्जयति मूढचेतसं
तारयत्यपि स एष धीमतः।
येन तद्भवसुधाम्बुधिः शिवे
यज्जुषां वहति निस्तरङ्गताम्॥२५५॥

हे शिवे ! अपरिच्छिन्नब्रह्मानन्दस्वरूपे ! यस्तव स्वरूपनिर्धारकोऽयं ग्रन्थात्मको विमर्शः, मूढमविवेकोपश्लिष्टं चित्तं हृदयं यस्य तं प्रमज्जयति स्वरूपज्ञान-विरोधिप्रवृत्त्युत्पादकतया संसारावर्ते निमज्जयति, अनात्मन्येवात्मभावप्रबोधनेन बलात्त-त्रैव पातयति, स एष पूर्वोक्तविमर्शालोकस्वरूपं चैतन्यं धीमतो धीर्ज्ञानक्रियात्मक-शुद्धविद्याऽस्ति येषां ते तान् स्वरूपज्ञान् तारयति स्वात्मनि स्वात्मज्ञानोत्पादन दृढी-करणेनान्तर्मुखतानिष्पादनद्वारा स्वात्मानं प्रापयति । अपिरेवार्थे । येन स्वात्मनि स्वात्मज्ञानदृढीकरणेन हेतुना, स चासौ भवस्तद्भव एव सुधा तद्रूपोऽम्बुधिः समुद्रः । एतेन संसारस्य चिद्रूपत्वममृतत्वप्रापकत्वं च द्योत्यते । यद् विमर्शाहन्तां जुषते सेवत इति तेषां विमर्शाहन्तासमावेशशालिनां निर्गतस्तरङ्गो यस्मात्तस्य भावस्तां चाञ्चल्य-राहित्येन स्वोन्मुखप्रशान्ततां वहसि निष्पादयसि । समुद्रस्य निस्तरङ्गित्वे प्रशान्तत्वं निर्विकारनिष्कलत्वं स्वत एव जनिष्यते । यद्यपि शाक्तसमुद्रे तरङ्गाः स्वेच्छास्वातन्त्र्य-कल्पिता एव, तथापि स्वातन्त्र्यस्यानुग्रहशक्तिमयत्वे निस्तरङ्गत्वरूपशान्तस्वभावता दुर्निवारैवेति भावः ॥२५५॥

इदानीं शक्तेः प्रकाशविमर्शसंघट्टरूपतां निर्धारयन् तस्या विमर्शरूपतया पृथिवी-रूपत्वमप्यक्षुण्णमिति शास्त्रीयं यौक्तिकं च तथ्यमुद्घाटयन् स्तुतिमुखेन वर्णयति—

अर्थपञ्चकसुधाप्रपूरिते
यद्भवामृतनिधौ सुखप्लवे ।
पद्यतां वहसि संविदिन्दिरा
धामवस्तु तदुमे वपुस्तव ॥२५६॥

हे उमे ! ज्ञानशक्तिस्वरूपे ! अर्थानां पञ्चकमेव, सुधाऽमृतं तया प्रपूरिते पूर्णे, भवः संसार एव अमृतनिधिर् अब्धिस्तस्मिन् शक्तिवशंगतस्य सुखेन प्लवे प्लवनशीले, संविदेव इन्दिरा धनसौभाग्यलक्ष्मीस्त्वं यद्यस्मात् कारणात् पद्यतां वहसि, "पदमस्मिन् दृश्यम्" इति पाणिनेः सूत्रादुक्तार्थे विग्रहेच यत्प्रत्ययः । तेन पद्यः कर्दमः । नाति-शुष्कमिति तस्य भावस्ताम् अगाधसमुद्रनिमग्नतां प्राप्तस्याधारभूमित्वं वहसि, धार-यसि । तद् उक्तविग्रहार्थनिष्पन्नपद्यतास्थौल्यकाठिन्योपहिताधारभूमित्वं तव 'काली-शक्तेः, धामैव वस्तु पारमार्थिकं तत्त्वम्, "गृहदेहत्विट्प्रभावा धामानि" इत्यमराद्धाम-शब्दस्य प्रकाशात्मकत्वं तदेव शरीरम् । भवाब्धिनिमग्नस्य निमज्जतो वा यत्त्वया-ऽवलम्बनाय कर्दमत्वं तदुपलक्षितभूमित्वं स्वीकृतम्, तत्तव शक्तिप्रभृतिपृथिवीतत्त्व-पर्यन्तं प्रत्येकं षट्त्रिंशत्तत्त्वरूपत्वे गमकम् । संविदेव नामरूपात्मकजगदाकारतया स्फुरितेति—"शक्तयोऽस्य जगत्कृत्स्नम्" इति शैवशाक्तदर्शनाऽभ्युपगमः । अर्थ-पञ्चकस्य सुधात्वेन रूपणं जगतो चिद्रूपत्वद्योतनाय ॥ २५६ ॥

अथेदानीं मायाशक्त्या सङ्कोचितः पुरुषः शुद्धविद्ययैव पुनर्मुक्तिमेष्यतीति तथ्यं दृष्टान्तपुरस्सरं प्रस्तौति—

तत्र पद्मरुचिवेद्यमण्डले
स्वादुनि प्रकटमेयिवान् लयम् ।
माययाऽम्ब पुरुषो निमीलितः
त्वद्धियोन्मिषति विद्ययावृतः ॥२५७॥

तत्र जगति, कथंभूते इत्याह—पद्मरुचीति । पद्मस्य रुचिरिव यस्य तद्वद् यद् वेद्यमण्डलं प्रमेयजातम्, पुनः कथंभूते? तदाह—स्वादुनि । विषयानन्दपूर्णे पुरुषोऽणुर्जीवः प्रकटं लयमासक्तिम्, एयिवान् प्राप्तवान्, यतोऽसौ मायया तिरोधानकर्या मायाशक्त्या निमीलितः सर्वकर्तृत्वादिभिर्वञ्चयित्वा सङ्कोचं प्रापितः । पुनर्विद्यया शुद्धविद्यया वृतो युतस्त्वद्धिया त्वत्समावेशेनोन्मिषति स्वरूपालोकेन विकसति । पद्मे ब्रह्मण आविर्भावात् पद्मस्य विष्णुलक्ष्म्योरायुधत्वाच्च पद्म एव जगदारम्भकतत्त्वमित्यभियुक्ताः । अत एवात्र प्रमेयस्य पद्मरुचित्वं साभिप्रायं वर्णितम् । प्रमेयस्य स्वादुत्वमपि शास्त्रसमर्थितमेव । तदुक्तं परमार्थसारे—"रज्ज्वां नास्ति भुजङ्गस्त्रासं कुरुते च मृत्युपर्यन्तम् । भ्रान्तेर्महती शक्तिर्न विवेक्तुं शक्यते नाम ॥ २८ ॥" इति । मायायाः पूर्णत्वाख्यातिरूपाया अताद्रूप्यप्रतिभासने बृहती शक्तिर्न केनापि विचारयितुं पार्यते । यथा रज्जौ सर्पोऽयमिति सर्पाध्यवसायोऽसन्नपि भयमामरणं विदधाति । 'भूतमियं ब्राह्मणी' इति कल्पितः प्रवादः प्राणिनः सचेतनान् भीषयते । स्थाणुं भूतं मत्वा मार्गं परित्यज्य गन्तारो न केनापि सचेतनेन प्रबोधिता निवर्तन्ते । एवमन्यद् बह्वपि कल्पनामात्रसारं विभ्रमविजृम्भितं भ्रान्त्या देहाद्यात्मतया अभिमन्यते । यया निरन्तरं स्वर्गनरकजन्ममरणप्रबन्धभाजः पशवः । न पुनः परमार्थतः स्वात्मनो धर्माधर्मादिकं किञ्चिद् विद्यते, तस्य निरवच्छिन्नचिदानन्दैकघनत्वात् । विद्ययावृतिरिति पाठे विद्यापदेनाशुद्धविद्या ग्राह्या । तयाऽऽवृतोऽणुः प्रकाशाभिन्नविमर्शरूपया त्वयैव विकासमाप्नुयान्नान्यथेति भावः ॥ २५७ ॥

अथेदानीं यथा देहोऽयं संवित्पीठरूपस्तथैव विश्वमिदं चिन्मयपीठरूपमिति तथ्यं तन्त्रागमसम्प्रदायसमर्थितं लोकोपकाराय विवृण्वन् प्रफुल्लकमलवर्णनमिषेण व्याहरति—

तत्तदर्थदलशोभितं जहन्-
निद्रमुल्लसितमम्ब वारिजम् ।
त्वद्विमर्शमकरन्दनिर्भरं
पीठतां व्रजति यत्र चिन्मयम् ॥२५८॥

हे अम्ब ! अहन्तेदन्तयोरविभक्तबीजरूपे ! तत्तदर्था एव दलानि तैः शोभितम्, जहती निद्रा यस्मिंस्तत् प्रफुल्लोत्फुल्लसदृशमत एवोल्लसितं वारिणि जातं कमलं तव विमर्श एव मकरन्दः पुष्परसः, तेन निर्भरं परिपूर्णं चिदेव चिन्मयं चिदानन्दघनं विश्वं तव पीठतां व्रजति यत्रेति विश्वार्थकम् । यद्यपि श्रीचक्ररूपेऽस्मिन् शरीरचक्रे काम-

रूप-पूर्णगिरि-जालन्धर-ओड्याणनाम्ना बुद्धि-अहङ्कार-मनः-शक्तिनिकरैः पर-इतर-वाण-स्वयम्भुलिङ्गाधिष्ठितं चक्रपीठलिङ्गमुद्रादिभिः सुप्रतिष्ठितं भावनाचक्रं विराजते, तथापि विश्वस्यैव चक्रात्मना रूपणे नामरूपात्मके जगति विकसितकमलं पत्रसुशोभितं विमर्शरसपूर्णं चिन्मयं पीठं कल्पयित्वा भावनया सद्यः फलदमिति भक्तकवेराशयः प्रतिभाति। तन्त्रान्तरे विश्वस्य मायाकार्यत्वाद्धेयत्वादिबुद्धिः कर्तव्यतयोपदिश्यते, शाक्तागमे विश्वमिदं चिन्मयं विमर्शमकरन्दपरिपूर्णं कमलदलैरुत्फुल्लं पीठत्वेन रूपयित्वा भोगमोक्षोभयपुरुषार्थसाधकतया तस्य साधनाभूमित्वेन महनीयत्वं साधितमिति मातृशरणागतानां भोगमोक्षयोः करतलगतत्वं साभिप्रायं संसूचितम् ॥ २५८ ॥

इदानीमखण्डमद्वयमहन्तात्मकं प्रकाशविमर्शसमरसीभूतं शाक्तं तत्त्वं कालीनय-प्रकाशनव्याजेन प्रस्तौति—

त्वं मलत्रयविलापिनी शिवे
पूर्णपीठमहमात्मकं श्रिता।
शुद्धभानुतनुरद्वयप्रथा-
नन्दसाररसवाहिनी सताम् ॥२५९॥

हे शिवे! स्वाभाविकशब्दराशिस्वरूपात्मना प्रकाशविश्रामभूमे! मलत्रयस्य आणव-मायीय-कार्मरूपस्य विलापिनी विलयकारिणी, अहमात्मकं प्रकाशस्यात्मविश्रान्तिरेवाहमिति समस्तवाच्यवाचकमयनिखिलजगदानन्दसत्ता सर्वतो निराकाङ्क्षतया स्वात्मानन्दपूर्णा अनुत्तरादकारादारभ्य शक्तिप्रसाररूपहकाराक्षरपर्यन्तं प्रत्याहारन्यायेन अकारहकारयोः समाहारेणान्तेऽनुस्वारबिन्दोरैक्यबोधकतयाऽन्ते पुनरकारे एव लीयते। अस्यैव स्वातन्त्र्यं कर्तृत्वं मुख्यमैश्वर्यम्—एते पर्यायाः। एतादृशमहमात्मकं पूर्णपीठं श्रितः शुद्धभानुरेव प्रकाशात्मकः शिवः, स तनुः शरीरं यस्या तथाभूता, अद्वयोऽखण्डः प्रकाशानन्दः, तयोः साररसं वहति तच्छीला त्वं सतां सज्जनानां क्रमदर्शनानुशीलनसर्वस्वानां शरणमसि। शिवस्य भास्कररूपत्वम्, तदभिन्नविमर्शस्य मरीचिरूपत्वम्, तेन च प्रमेयजगतोऽवभासनं चिद्विलासस्तवेऽमृतानन्दयोगिभिः स्मर्यते—

स्वप्रकाशशिव एव भास्करस्तद्विमर्शविभवा मरीचयः।
यैः स भासयति वेद्यमण्डलं तस्य पूजनमहन्तया मतिः ॥ इति ॥२५९॥

अथेदानी पञ्चप्रेतेष्वन्यतमं शिवमाश्लिष्य कमलासनस्थितां शक्तिमट्टहास-निरतां वर्णयन् स्थितिविशेषसमासक्तां कालीं स्तुतिप्रवणतयाऽभिमुखयति—

सत्सुधाब्धिरसभृत् कलान्तरी
गर्भषोडशकलाब्जविष्टरम्।
प्रेतमुज्झितगमागमं शिवे
स्मेरभूः सरसिजं त्वमाश्रिता ॥२६०॥

हे शिवे ! शिवस्यार्धाङ्गिनि ! सती नित्यसिद्धा या सुधा, न तु समुद्रमन्थनसमुद्धृता, तस्या अस्थायित्वात्, तस्या अब्धिः समुद्रस्तं बिभर्तीति कर्तरिक्विपि यथास्थितं रूपम्। आन्तरी कला न तु बाह्या, आन्तर्या नित्यसिद्धत्वात्। यद्यपि पञ्चकृत्यकारिण्यास्तस्याः सृष्टिसंहारौ त्वरावन्तावेव, तथापि स्वरूपस्थितेः स्थायित्वस्याभियुक्तैर्नित्यत्वेनामननात् तथा निर्देशः। सरसिजमाश्रिता कमलासनस्था त्वं गर्भेऽन्तः स्वरूपे यः षोडशकलः पुरुषः शिवः, "पुरुषे षोडशकले तामाहुरमृतां कलाम्" इत्युक्तेः। कथंभूतोऽसौ ? अब्जः पद्मो विष्टरः प्रच्छदपट इव आसनं यस्य तम्। कीदृशमित्याह—उज्झितौ गमागमौ यस्य तम्। प्रेतं शिवसदाशिवब्रह्मविष्णुरुद्राः पञ्च प्रेताः, तेष्वन्यतमम्। आश्लिष्य स्थिता विपरीतक्रियास्थित्या स्मेरभूः स्मेरा भवतीति विग्रहे कर्तरि क्विपि प्रयोगः। "कृभ्वस्तयः क्रियासामान्यवचनाः" इति नियमाद् भूरत्र करणार्थकः। स्मेरकर्त्री अट्टाट्टहासकारिणी सती विराजसे विजृम्भसे वेत्यर्थः। गमागमवर्जनम् उभयोः कमलासनस्थितिः स्मेरकर्तृत्वादयः शब्दा विशेषविपरीतक्रियाः सूचयन्ति। काल्याः शिवेन सह तादृग् हार्दातुरतायास्तन्त्रागमग्रन्थेषु सविशेषं वर्णितत्वात् शृङ्गाररसस्य रसराजत्वात् सति स्थितेरानुकूल्ये स्त्रियाः पत्यौ शासनचिकीर्षायाः सर्वसम्मत्या स्वीकृतत्वाच्च। दम्पत्योरेतादृशकार्यस्य व्रीडाकरत्वोद्भावनस्य शिष्टैरुपेक्षितत्वाच्च ॥२६०॥

अथेदानीं चन्द्रशरीरशक्तिशरीरयोः साम्यवैषम्यवर्णनपूर्वकं चन्द्रगताह्लादकत्वं शाक्ताह्लादकत्वस्य तुलां न कथमप्यर्हतीति तथ्यं पद्येन प्रस्तुवन् शक्तिवैभवं स्मरन् स्वात्मानं कृतार्थयन् परान् प्रेरयति—

**निष्कलङ्कमनवेक्षितक्षयं**
**यामिनीदिवसतूलजृम्भणम् ।**
**स्वप्रकाशविनिमग्नचिज्जडं**
**चन्द्रवर्ष्म यदि चण्डिके समम् ॥२६१॥**

हे चण्डिके ! क्रोधार्हाणां कोपनशीलेऽथ च दयार्हाणां करुणारससागरे ! जगति शैत्याह्लादकत्वयोः प्रसिद्धश्चन्द्रो यदि त्वया समं तुलामर्हेत् सादृश्योपमायाः पात्रतां भजेच्चेत्तर्हि तुलया कश्चित् सन्तोषो भवेत्, किन्तु तव गुणसामर्थ्यादिभिः सर्वथा वैषम्यमाभजन्नसौ विचारकान् महति सङ्कटे पातयति। कथमिति चेदाह—चन्द्रे कलङ्कः प्रसिद्ध एव। तव रूपं तु निष्कलङ्कं शुभ्रं दीप्तं सर्वथा शङ्कातङ्कादिभिः शून्यतया कालुष्यरहितं चन्द्रस्य क्षयवृद्धी कृष्णशुक्लपक्षयोः पर्यायतया प्रसिद्धे एव। शक्तेस्तु ह्रासवृद्धी न केनाप्यद्य यावत् प्रत्यक्षीकृतेत्याह—अनवेक्षितोऽदृष्टः क्षयो ह्रासो, यस्मिंस्तद् एवंभूतं रूपम्। शक्तेः प्रभावो रात्रिन्दिवं लघुनाऽऽयासेन भवति। चन्द्रस्तु केवलं रात्रावेव सूर्यरश्मीनादाय प्रकाशते। यामिनी च दिवसश्च तौ, तयोस्तूलवत् कार्पासवत्, जृम्भणं गमनं यस्मिन् तत्। शक्तिपक्षे—स्वप्रकाशे विनिमग्नौ चिज्जडौ यस्मिंस्तत्,

एवंभूतं शक्तिस्वरूपम् । चन्द्रस्तु सूर्यप्रकाशेन भासते । स्वप्रकाशत्वमेव तत्र दुर्लभम् । का कथा तत्र चिज्जडयोर्विनिमज्जनस्य । किञ्च, सूर्यचन्द्राग्नयः सर्वेऽपि ब्रह्मेच्छया प्रकाशवन्तः, न तु स्वेच्छया । शक्तिस्तु ब्रह्ममहिषी । अत्र शाक्तदर्शने शक्तिरेव परतत्त्वरूपा ब्रह्मस्थाने प्रतिष्ठिता । तयैव देवदनुजमनुजादिनिखिलं जगत् सत्तां लभते । एतेनापि जन्यजनकयोः साम्यचर्चाऽनर्हैव । चन्द्रस्य कलाक्षयवर्णनं सोमोत्पत्ति-कथायां श्रूयते । एकैकशः सुराः सोमस्य पञ्चदश कलाः पिबन्ति । तद्यथा—

प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः ।
विश्वेदेवास्तृतीयां तु चतुर्थीं सलिलाधिपः ॥
पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः ।
सप्तमीमृषयो दिव्या अष्टमीमज एकपात् ॥
नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम् ।
दशमीं पिबते वायुः पिबत्येकादशीमुमा ॥
द्वादशीं पितरः सर्वे समं प्राश्नन्ति भागशः ।
त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् ॥
चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः ।

एतदुक्तं रघुवंशे—"पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः" (५।१६) इति । वराहमिहिराचार्यैरपि सूर्यसिद्धान्ते—"सूर्यात् प्रकाशमासाद्य-चन्द्रः प्रकाशते" इत्युक्तम् । तदेवं चन्द्रवर्ष्मणि यत्प्रकाशाह्लादकत्वं लोके प्रसिद्धम्, तस्य भगवत्याः स्वरूपगतप्रकाशसमाह्लादकत्वादिभिः कापि तुलनैव नास्तीत्युत्कृष्टः प्रभावस्तवेति ग्रन्थकर्तुः श्रद्धातिशयव्यञ्जिका स्तुतिः ॥ २६१ ॥

इदानीं शैवशाक्तोपासकाः श्रद्धालव एव कालीशक्तेर्महिमानं ज्ञातुं प्रभ-वन्ति, नान्य इति साधनामर्म जगति शिक्षयितुं कुलाकुलशब्दार्थं प्रख्यापयंश्च मातरं स्तौति—

ये तु कुण्डलशिखाकुलस्थिताः
ये भवन्त्यकुलबिन्दुशालिनः ।
ते विदन्ति तु तवाम्ब वैभवं
पूर्णभानमयविश्वघस्मरम् ॥२६२॥

हे अम्ब ! कुलमार्गनायिके ! "अकुलं शिवमित्याहुः कुलं शक्तिः प्रकीर्तिता । कुलाकुलस्य विज्ञानात् कौल इत्यभिधीयते ॥" इति कुलार्णवतन्त्रानुसारं कुलं शक्तिरकुलं शिव इत्यवधार्यते । मूलाधारचक्रे कुण्डली(कुण्डलिनी)शक्तिः सुप्तभुजगीव त्रिवलया-कारा, तस्याः शिखाऽग्रभागः, कुलनामिका कालीशक्तिस्तत्र निवसति, तामेव आराध-

नीयत्वेन ये ध्यायन्ति ते कालीशक्त्युपासकाः कौलसंज्ञका शाक्तसाधकाः। त एव सम्यग्रूपेण शाक्तं मर्म जानन्ति। अथ च ये कुलं शिवमेव सर्वोत्कृष्टत्वेनामन्वाना अकुलं बिन्दुं शिवमास्थाय तेन शालन्ते शोभन्ते ते-उभयविधा उपासकाः, नु निश्चयेन, तव वैभवं माहात्म्यम्, कथं भूतमित्याह—पूर्णभानमयं पूर्णाहन्तात्मकं विश्वस्य घस्मरं स्वात्मनि विलापकं जानन्ति। यामलीभूतं शिवशक्त्यात्मकं तत्त्वं ज्ञात्वैव सृष्टिसंहारकर्तृत्वरूपं सर्वकर्तृत्वं ज्ञातुमधिक्रियन्ते। यामलत्वं च स्वाभाविकम् तदुक्तं मातृकाचक्रविवेके—"वाचकेन विमर्शेन विना किं वा प्रकाश्यते। वाच्येनापि प्रकाशेन विना किं वा विमृश्यते॥ तस्माद्विमर्शो विस्फूर्तौ प्रकाशं समपेक्षते। प्रकाशश्चात्मनो ज्ञाने विमर्शं समपेक्षते॥" इति। कुलशब्दस्यानेकेऽर्थास्तन्त्रालोकादिग्रन्थेषूक्तास्तेन ज्ञायते कुलस्येदं कौलमिति तद्धिते कौलशब्दो निष्पद्यते। कुलं सजातीयसमूहः, कुलं शरीरम्, आचारः कुलमुच्यते, कुलमाधारचक्रम्, अधःस्थितं रक्तं सहस्रदलकमलमपि कुलम्, सहस्रारपद्ममकुलमूर्ध्वस्थितं कमलम्। दहराकाशावकाशे चक्रं विभाव्य तत्र पूजाभावनादिकं 'समय'पदेनोच्यते स्म रूढ्या। तत्प्रतिपादकत्वाद् वसिष्ठशुकसनक-सनन्दनसनत्कुमाराख्यं तन्त्रपञ्चकमपि समयपदेन व्यवह्रियते। यद्वा समं साम्यं यातीति समयः शिवः। "आतोऽनुपसर्गे कः"। समया शक्तिस्तयोरेकशेषः। साम्यं च शिवशक्त्योः पञ्चविधम्—अधिष्ठानसाम्यमनुष्ठानसाम्यमवस्थानसाम्यं नामसाम्यं रूपसाम्यं चेति। अधिष्ठानं पूजाधिकरणं चक्रयन्त्रादि। अनुष्ठानं सृष्ट्यादिकृत्यम्। अवस्थानं नृत्यादिक्रिया। नाम शिवरुद्रभैरवादि। रूपमारुण्यादि। इत्येवं कुलमार्गस्याभ्यर्हितं रूपं कदाचिदासीत्। कुलपति-कुलाधिपति-कुलगुरुप्रभृतयः शब्दा अद्यत्वेऽपि महार्हतां कुल-शब्दस्य द्योतयन्ति। कुलमार्गस्य काली एवाद्या शक्तिः परमोपास्यत्वेन स्मृता। अत एव दशमहाविद्यासु काल्याः प्राथम्येनावधारणं किमपि लोकोत्तरं महत्त्वं परिपुष्णाति। अत एव तद्वैभवं पूर्णभामयत्वेन साकं विश्वभक्षकत्वमपि संहारकर्मणः सामर्थ्याति-शयेन परिगणनं महदुत्कर्षविभावनमिति दिक्॥ २६२॥

अथेदानीं मानसाज्ञाननाशाय केवलं शक्तिरेव प्रभुरिति विद्वदनुभवसाक्षिकं तथ्यमुद्घाटयन् सर्वस्मिन् शाक्तौपयिकभावनां द्रढयितुं मातरं सादरं संस्तौति—

**ज्योतिषाम्ब! शिखयापहन्यते**
**पुंसि चैतसिकमुद्धतं तमः।**
**यत्पथप्रथनलक्ष्मपुङ्खितं**
**तत्त्वमेव शिवशक्तिरप्यसि॥२६३॥**

हे अम्ब! कुलमार्गसारसर्वस्वे! पुंसि जीवेऽणौ यच्चैतसिकं मानसं हार्दम् उद्धतमनादि तमोऽज्ञानान्धकारो विद्यते तत्तव ज्योतिः, अभिन्न शिखया ज्वालया मरीच्या वा अपहन्यतेऽपस्त्रियते विनाश्यते। यत्पदेन पूर्वोक्त कुलाकुलाख्येशिवशक्ती ग्राह्ये। यस्य यस्या वा पन्था यत्पथः, तस्य प्रथनं ख्यापनं पुनः पुनरभिधानेन सर्व-

जनेषु स्थापनम्, तदेव लक्ष्म लक्षणम्, किं वा प्राधान्यम्, "लक्ष्म चिह्नप्रधानयोः" इत्यमरात्, तेन पुङ्क्षितं युक्तं तत्त्वं शिवाभिन्नशक्तितत्त्वमेव। तच्चापि त्वमेवासि। कुलमार्गख्यापनलक्षणयोगेन शक्तितत्त्वमेव कालक्रमेणोपेक्षितमुद्ध्रियते, नान्यदधिकं किमपीति रहस्यम् ॥ २६३ ॥

इदानीं सूर्यप्रकाशेन प्रकाशितचन्द्रशतस्य ज्योत्स्नाभिर्यावत् शीतलत्वाह्लादकत्वादि प्राप्यते, ततोऽप्यधिकं तव भात्मकशरीरेण प्राप्यत इति तथ्यं शक्तिप्रशंसामुखेन वर्णयन् तत्र प्रापणार्थमभ्यर्थयन् मातरं विशिनष्टि—

निह्नुतोदितशतार्कदीधिति-
श्छन्नचन्द्रशतलक्ष्मचन्द्रिकम् ।
त्वं बिभर्षि वपुरम्ब भात्मकं
तत्प्रवेश्य कुरु मामनामयम् ॥२६४॥

हे अम्ब ! प्रकाशाभिन्नविमर्शात्मिके ! निह्नुतया गुप्तयोदिता या शतार्काणां दीधितिः, तया छन्ना आच्छादिता या चन्द्रशतलक्ष्मसमन्विता चन्द्रिका सा, यस्मिन् तत्तादृशम्। अप्रकटरूपेण शतसूर्यप्रकाशेनाच्छादितं पोषितं यच्चन्द्रशतलक्षणं तद्युक्ता या चन्द्रिका ज्योत्स्ना तादृशप्रभायुक्तं तव वपुरस्ति। सूर्यदत्तप्रकाशेन परिपोषित चन्द्रकाशे शीतलता आह्लादकता लोकैरनुभूयते, किन्त्वेकस्मिन् चन्द्रे यावति शीतलता तर्पकता वा, ततोऽधिका चन्द्रशतप्रकाशेन, शतपदमुभयत्रापि तदधिकोपलक्षकम्, प्रकरणानुकूलसङ्गतेः, भविष्यति तादृशी चन्द्रिका शक्तिस्वरूपे विद्यत इति कवेराशयः। पूर्वोक्तविशेषणविशिष्टं भात्मकं वपुस्त्वं बिभर्षि धारयसि, प्रार्थये यत्तादृशे शरीरात्मकधाम्नि मां प्रवेश्य नीत्वाऽनामयं नीरोगं कुरु। सातिशयशैत्याह्लादकत्वयुते धाम्नि मामपि नीत्वा जरामरणादिव्याधिमुक्तं चित्स्वातन्त्र्यानन्दघनस्वरूपप्रदानेन मां स्वाभेदेन संस्थापयेति प्रार्थना ॥ २६४ ॥

इदानीं काल्या उपासकः शक्तिचरणसंश्रयं कामयमानो मुनिभिरुपास्यां तां स्तुतिभिः संयोजयन् शरणागतिं प्रकटयति—

त्वं कुलाख्यशशिभानुपावके
भ्राजमानकरणात्मनायिके ।
संस्मृतासि मुनिचित्तमण्डपे
अद्य मे कुरु तत्राङ्घ्रिसंश्रयम् ॥२६५॥

हे अम्ब ! चराचरस्वरूपे ! अत्र पद्ये कुलपदेन शशिभानुपावका अपि गृहीताः। कुलाख्यानां शशिभानुपावकानां समूहस्तत्संबोधन उक्तं रूपम्। भ्राजमानानि स्वस्वप्रतिनियतकार्यनिष्पादनदक्षाणि करणानि त्रयोदश करणानि, आत्मा च, तेषां नायिका

नेत्री नियामिका तत्संबोधने हे देवि ! मुनीनां शाक्तशैवदर्शनावगन्तॄणां चित्तानि हृदयान्येव मण्डपं यज्ञमण्डप तस्मिन् निरन्तरं ध्याता। अद्य तव अङ्घ्रिसंश्रयं चरणशरणं मां कुरु। अथैव ग्रन्थे तृतीयविमर्शे ८०,९५ सङ्ख्याङ्कयोः पद्ययोः "याऽनलार्कशशिविग्रहा कला", "भानुशीतकरवह्निकुण्डली" इत्यत्र शक्तेः शशिभानुपावकरूपता सुस्पष्टं प्रतिपादिता। नित्याषोडशिकार्णवतन्त्रस्य प्रथमश्लोके—"गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम्" इति, चिद्विलासस्तवे—"स्वप्रकाशशिव एव भास्करः" इति च स्मरणाच्छक्तेरपि शिवाभिन्नायास्तद्रूपत्वं सिद्धमेव, ललितायाः सहस्रनामसु—"भानुमण्डलमध्यस्था", "कलानाथा" इतिनामद्वयेन तत्र वह्नेर्दश, सूर्यस्य द्वादश, चन्द्रस्य च षोडश कलाः प्रसिद्धास्तासां नाथा स्वामिनीति नीत्या त्रिरूपत्वं सिद्धम्। संविदोऽवरोहक्रमे सा सर्वप्रथमं प्राणात्मना परिणता, पश्चाच्च ज्ञानकर्मेन्द्रियरूपतया परिणामे पृथिवीतत्त्वपर्यन्तस्य सर्वस्यापि विश्वस्य नायिका त्वं सुप्रसिद्धयति, सर्वे हि देवदानवकविदार्शनिका नामभेदेन परतत्त्वं स्मरन्त्येव। यथोक्तं भक्तिस्तोत्रेऽवधूतसिद्धेन—

तीर्थक्रियाव्यसनिनः स्वमनीषिकाभि-
रुत्प्रेक्ष्य तत्त्वमिति यद्यदमी वदन्ति।
तत्तत् त्वमेव भवतोऽस्ति न किञ्चिदन्यत्
संज्ञासु केवलमयं विदुषां विवादः॥ इति।

परतत्त्वस्मर्तारो मुनय इति प्रेक्षावतां संवादः। एवं च मातृरूपेण मातृतत्त्वविस्मर्तारः के भविष्यन्तीति नामभेदेन सर्वेऽपिभक्ताः शक्तिभक्ता एवेति सर्वसम्मतः पन्थाः॥ २६५॥

सर्वेऽपि प्राणवन्तः संविद् यागं सहजं कुर्वन्तीति शाक्तदर्शनस्य सर्वजनीनत्वं समर्थयन् प्रकृतोक्तिवैचित्र्येण मातृतत्त्वं प्रति श्रद्धातिरेकं सम्प्रवर्द्धयन् स्तुतिनतीरुद्भावयति—

**पञ्चवाहगत शक्तिलक्षणै-**
**स्त्वन्मुखैरखिलमर्थमण्डलम्।**
**गृह्णती मयि निवेश्य चण्डिके**
**या करोषि सहजं तवाध्वरम्॥२६६॥**

हे चण्डिके ! मातृशक्तिबलेन सर्वप्राणिनस्तदुन्मुखीकरणप्रवणे ! पञ्चवाहाः प्राणापानादयस्तद्गता या शक्तिः "प्राक्संविद् प्राणे परिणता" इति नीत्याऽवरोहक्रमे प्राणाः प्रथमपरिणामभूताः शक्तेः, सा लक्ष्यतेऽनेति तैस्तथाभूतैः, त्वं मुखमादि येषां तैः, मुखस्य प्रधानार्थकत्वे त्वत्प्रधानैः प्राणैः, प्राणाः शक्तिगमकास्तदुद्भवत्वादिति शक्ति प्रधानत्वेनापि तेषां ग्रहणमविरुद्धमेव। अखिलमर्थमण्डलं जगन्मण्डलं गृह्णत्यधिकुर्वंती या त्वं सर्वं पूर्वोक्तं तत्त्वव्रातं पञ्चभूतत्वेन तन्मात्रत्वेन करणात्मना च मयि अस्मदुपलक्षणतया सर्वप्राणिषु निवेश्य प्राणादिधारणतया प्रवेश्य सहजं जन्मजाततया स्वाभाविकं तव शाक्तम् अध्वरं यागं प्राणधारणत्वेनैव सर्वे शाक्तयागं कुर्वन्ति, करोषि अन्त-

र्भावितणिजर्थतया कारयसि। नहि कोऽपि जायमानः प्राणी प्राणान् न धारयिष्य इति वक्तुं प्रभवेत्। यद्येवं तर्हि प्राणिनः शाक्तं यागं विधिमुखेनैव कुर्वन्तीति मातृशक्ति-प्रतिपत्तिमन्तरापि भङ्ग्यन्तरेण सर्वशक्तिवादस्य यौक्तिकं सर्वानुभवसाक्षिकं दृढं सम-र्थनम्। अनेन पद्येन कवेः सर्वातिशायियौक्तिकत्वं सर्वसंवादितया प्रसाधितं समुज्जृम्भते। "सर्वं खल्विदं ब्रह्म", "सर्वं शिवमयं जगत्", "विज्ञप्तिमात्रमेवेदं सर्वम्" इत्यद्वैत-वादस्य सर्वं शक्तिरिति सर्वशक्तिवादोऽपि नाप्राप्ततया निरुपममुदाहरणम्॥ २६६॥

अथ त्रिविधतापापहाराय न कोऽपि दृष्टोपायः प्रभुतां धत्त इति शक्तिराश्रयणी-येति स्तौति—

त्वत्पदस्मृतिविधूतकल्मषं
सर्वतः स्फुरितपूर्णभाघनम्।
सिद्धचक्रमिह मोदते शिवे
पूर्णिमाप्यहह मे न तापहा॥२६७॥

हे शिवे! कल्याणानां निदानभूते! तव पदं त्वत्पदं तस्य स्मृतिर्निरन्तरं ध्यानम्, तया विधूतो नष्टः कल्मषः कालुष्यं येषां तत्, स्फुरिता स्वभावतया समागता या पूर्णभा पूर्णाहन्ता तया घनं सान्द्रीभूतं यत्, सिद्धानां प्रयतात्मनां चक्रं समूहस्तदेवेह जगति मोदते हृष्यति। त्वच्चरणानुरागोपहतपाप्मनां समुपरूढभक्त्यतिशयित्वमेव हर्ष-हेतुः। अहह खेदातिशये प्रयुक्तः, चन्द्रस्य षोडशकलाव्यापिनी पूर्णिमातिथिरपि मे मम तापहा त्रिविधतापहारिणी नास्ति पूर्णिमा तु तापहृन्नाभूत्, किन्तु पूर्णाहन्तास्वरूपा-यास्तव तापापहारे न मे संशीतिरित्याशया निरुपायोऽहं शरण्यां त्वामाश्रय इति साधकस्य भक्त्युद्रिक्तोऽनुरोधः॥ २६७॥

कालत्रयस्य विलापकं शरीरं काल्याः साधकैरुपास्यते, तदेवोचितमपीति मनसि-कृत्य कालीमतपरिपोषणाय भगवतः कृष्णस्याविर्भाव इत्याशयं चाभिदधानो मातरं स्तौति—

भूतभाविभवदर्थगर्भितं
कालघस्मरमुपास्यते वपुः।
कालकर्षिणि वहन्ति योगिनः
कृष्णतः प्रभृति विश्वरूपताम्॥२६८॥

हे कालकर्षिणि! "कालो जगद्भक्षकः" इति तस्यापि भक्षणस्वभावे! कालं कर्षतीति संबोधनदानेन कालसामान्यस्य भक्षिकेति संकेत्यते। अत आह—भूतं च भावि च भवच्च त्रयः कालाः, तेषामर्थैर्गर्भितमन्तर्भावितम्, कालत्रयवाचकतत्तत्पदानां वाच्यार्थयुतमिति यावत्। कालघस्मरं तव वपुः कालीमतानुयायिभिः साधकैरुपास्यते भाव्यते। किमधिकम्, शास्ता योगिनो भगवतः कृष्णादारभ्य कालीमतस्य विश्वरूपतां

विश्वजनीनतां वहन्ति । वह धातोरत्राङ्गीकारोऽर्थः, धातूनामनेकार्थत्वात् । कृष्णावतारस्यानेकप्रयोजनानि भवन्तु नाम, किन्तु काल्युपासनापोषकत्वेन कृष्णमेव मूलमामनन्ति कुलाभिमानिनः । वर्णसाम्येन साकं कार्यसाम्यं तेषां कथनस्यौचित्य सत्यत्वं च निर्धारयति । "कृष्णं वन्दे जगद्गुरुम्", "कृष्णस्तु भगवान् स्वयम्" इत्यादिवचनानि कुलाभिमानिनां किमपि विलक्षणं मर्थं सङ्केतयन्ति । कालीकुलसम्प्रदायाचार्याः चिराद्द्ययावदवतारेषु केवलं कृष्णमेव स्वमतसंरक्षकं मन्यन्त इति नाविदितं विलक्षणविचक्षणविपश्चिदपश्चिमानाम् । ग्रन्थकारस्याप्यत्राभिज्ञानमिति पद्येनानेन स्फुटं प्रतीयते ॥ २६८ ॥

इदानीं सर्वमपि विषयविषयिभावापन्नम् "अकारो वै सर्वा वाक्" इति श्रुत्या-अकारेणोत्पन्नं जगत् स्वात्मसात्कुर्वती काली स्वयं सर्वोत्कर्षेण वर्तत इति तथ्यं विनेयेषु समासजन् मातरं स्तौति—

**स्पर्शरूपरसगन्धरूपजं**
**शब्दचिद्वलसभा विभिन्दती ।**
**वृत्ति च क्रमकृताः षडध्वनो**
**देशकालमयमूर्तिचक्रगा ॥२६९॥**

हे शिवे ! प्रशस्ताः स्पर्शरूपरसगन्धा इति स्पर्शरूपरसगन्धरूपास्तेभ्यो जातमर्थनिकरम् । प्रशंसायां रूपप्प्रत्ययः । विषयेण विषयिण आक्षेपेणोक्तार्थस्य संभवः । अकारेण कृता उत्पन्ना उत्पादिता वा, शब्देन साकं चितेर्नित्यसिद्धरूपेणस्ति, अस्य, अस्मिन् वेति मतुबर्थे "अन्येभ्योऽपि दृश्यते" इति वार्त्तिकेन वलच् प्रत्यये चिद्वलशब्दो निष्पन्नः, चिद्वला नित्यत्वेन विद्यमाना या सद्भिर्भातीत्यर्थिका सभा सद्रूपतया भासमानाः पदार्थास्ताः, षड् अध्वानो वर्णपदमन्त्रकलातत्त्वभुवनाख्यास्तान् विभिन्दती आत्मसात्कुर्वती स्वस्मिन् विलापयन्ती। देशकालमयं यन्मूर्तिचक्रं तद्गच्छन्ती तदारूढा त्वमेव समस्तं वृत्तीनामिन्द्रियशक्तीनां विषयविषयिणां भूतभौतिकपदार्थानां चक्रं वातं भिन्दती विलापयन्ती यथार्थरूपेण कालस्यापि कलयित्री काली त्वं सर्वथा सर्वात्मना एकाकिन्येव समुज्जृम्भसे । ननु देशक्रमे एव मूर्तिवैचित्र्यं दृश्यते, कालस्यामूर्तत्वात्तत्र तस्यासंभवात् । तत्कथमत्र विपरीतमुच्यते देशकालमयमूर्तिचक्रगेति-चेदुच्यते—क्रियावैचित्र्यादेव कालावभासत्वेन कर्तृक्रियया पूर्वोत्तरदेशविभागप्राप्त्यादिक्रमदर्शनेन क्रियाश्रयकालस्यापि मूर्तिमदाश्रितत्वेन तात्स्थ्यात् तत्त्वमिति न्यायेन ग्रन्थकृत्प्रयोगस्यौचित्यात्। 'सभा' इति पाठापेक्षया 'प्रथा', 'प्रभा' वेति पाठ एव साधुः प्रतीयते । एवं 'न कृताः, अकृताः' इति पाठस्य स्थानेऽमृता इति पाठ एव श्रेयान् प्रतीयते । अथवा "कृम्वस्तयः क्रियासामान्यवचनाः" इत्यभ्युपगमेन कृधातोर्ज्ञानार्थत्वं संप्रधार्याऽकृता इत्यस्य अज्ञाता अश्रुता वा शब्दनित्यत्वप्रथाः स्वात्मसात्कुर्वतीत्यर्थस्वीकारोऽपि पक्षान्तरत्वेनोन्नेयः । रूपप्वलच्प्रत्ययाभ्यां विषयाणां प्राशस्त्यं चितो नित्ययोगत्वं

शाक्तदर्शने जगतश्चिद्रूपत्वं प्रशस्तत्वं नित्यत्वं च द्योत्यते। शक्तिकर्तृकसंहारे चित्त्व-विशिष्टा एव सर्वे विषयाश्चिच्छक्तावन्तर्निधापिता निधाप्यनिधापकयोः प्राशस्त्यं निरतिशयसमुत्कर्षकत्वं च व्यञ्जयन्ति। वृत्तिचक्रविलापनवर्णनेन न केवलमन्तःकरण-वृत्तय एवात्र गृह्यन्ते, अपि तु "शक्तयोऽस्य जगत्कृत्स्नम्" इति वचनात् कृत्स्नं जगत् शक्तिरूपमेवेति जगतो बाह्यान्तरवभासनं शक्तिकर्तृकः स्वातन्त्र्योच्छलत्ताविलास एवेति व्यज्यते ॥ २६९ ॥

अधुना प्रकाशतमसो रञ्जकत्वेन शक्तेः सत्तानुमित्या तदीयसत्ता स्थिरीभूता, त्रिपुट्यतीतपदगताऽपि शक्तिः प्राणानुगत्याऽस्त्येवेति तन्त्रागमसिद्धान्तपुरःसरीकरण-त्वेन मातरं स्तौति—

**यत्प्रकाशतमरञ्जकं पदं**
**तस्य भाव इह यः सतोऽम्बिके।**
**इन्दुवह्निरविलक्षणं कुलं**
**त्वं तुरीयपदगाऽप्यलक्ष्यसौ ॥२७०॥**

हे अम्बिके! सच्चिदानन्दात्मिके! इह दृश्यप्रपञ्चे प्रकाशतमसो रञ्जकं प्रकाशत्वेन तद्विरुद्धतमस्त्वेनोपस्थाय लोकव्यवहारनिर्वर्तकं यदलौकिकं तव पदं दृश्यते, सतस्तस्य भावो यः सत्तात्वेनानुभूयते सा त्वमेव। "मेयमानमितिसाधनात्मिका", "मेयमानमितिकर्तृलक्षणम्" इति पद्ययोरनेनैव ग्रन्थकर्त्रा त्रिपुट्याः प्रयोगः पौनः-पुन्येन कृत इति दृष्ट्वा दर्शनसारभूतत्वं तस्याः स्फुटतया प्रतीयते। अत्रापि सूर्यसोम-वह्नित्वेन कुलशक्तिं निरूप्य ततोऽप्यूर्ध्वपदगन्तृत्वं काल्याः प्रसाध्य सत्तावगमकत्वस्य दुर्लक्ष्यत्वजिज्ञासामुत्थाप्य समाहितं कविपुङ्गवेन। दर्शनोपयिका त्रिपुटी "इन्दुवह्निरवि" इत्युक्त्या स्थापिता। शक्तिस्तु पदत्रयातीता तुर्यपदाधिरूढा कथं ज्ञायेतेत्याह— असौ प्राणे त्वमलक्षीत्यादिना। "प्राक् संवित् प्राणे परिणता" इत्यभ्युपगमात् शक्ति-परिणामाः प्राणाः प्रतिप्राणि व्यवस्थितभावेनोपस्थिता अपह्नोतुमशक्यास्तैरेव शक्ति-र्दृष्टा लोकैरिति कामं तस्यास्तुर्यगतत्वं भवेन्नाम, तथापि प्राणसत्तया सा सधीरमनु-मिता ज्ञाता दृष्टा वा भवतीति सर्वं सामञ्जस्यपूर्वकं तत्सत्ता प्रसाधिता। तमस्शब्दः सान्तः क्लीबः प्रसिद्धो लोककाव्यकोशादिषु, तथाप्यत्राकारान्तः प्रयुक्तः। तन्त्रान्तरे तस्य दशमद्रव्यत्वे निराकृतेऽपि तमोऽन्धकार इति व्यवहारस्य नापलापः कर्तुं शक्यते। तमु पञ्चकमिति पाठस्तु न फलेग्रहिरित्युपेक्षितः। बुद्धिबलापेक्षाया व्याख्यायाः संभा-व्यत्वप्रतिषेधे को नाम सचेताः प्रयतेत। अकुलमिति पाठेऽपि प्रमातृत्वेन शिवे संस्थापिते त्रिपुटीव्यवस्थानिर्व्यूढे न नः क्षतिः। किन्तु ग्रन्थेऽत्र शक्तेः प्राधान्येन कुलमिति पाठ एवोचितः। "पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरात् पदशब्दस्य चरणार्थकता, किन्तु पदमाश्रयः, पदं स्थानम्, पदं लिङ्गम्, पदं कैवल्यमित्यादयोऽप्यर्था यथायथं कविभि-र्विद्वद्भिश्च तत्र तत्र प्रयुक्ता इत्यत्र बाहुल्यार्थक एव प्रतीतव्यः ॥ २७० ॥

अनन्तरं प्रकाशात्मके शिवे यद्वैभवं शक्तौ च या जगन्निर्वाहिका प्रज्ञा, ते आधारीकृत्यैव सर्वं कार्यजातं प्रवर्तते, तयोरनुस्मरणेनैव जीवनयात्रायाः साफल्यमित्येव-मादिना मातृशक्तौ प्रह्वीभावमानेतुं स्तुत्या प्रवणयति—

**अम्ब नन्दति समन्ततः शिवे**
**लोकनेन य उदग्रवैभवः ।**
**प्रज्ञया वहसि सार्वभौमया**
**या च नेत्रमयमर्चिता तव ॥२७१॥**

हे अम्ब ! सर्वाधिष्ठानसमर्थे अथ च निरुपादानसंभारसंभरणे ! लोकनेन ज्ञान-दृष्ट्यावलोकनेन वर्णना गोचर उदग्रः समुत्तुङ्गो वैभवो लोकैरप्राप्यमृक्थं यस्य सः। शिवे शिवाख्यदेवे तव भर्तरि, समन्ततः सर्वतः, नन्दति समृद्धिं गतो दृश्यते । सर्वभूमौ विदिता सार्वभौमा "तत्र विदित इति च" (पा० सू० ५।१।४३) इति सूत्रादणि टापि सर्वभूमिशब्दस्य अनुशतिकादिगणपाठादुभयपदवृद्ध्या शब्दनिष्पत्तिः । तया प्रज्ञया स्वप्रकर्षेण ज्ञानवत्या मनीषया निखिलमाब्रह्मभुवनान्तकं कार्यजातं वहसि निर्वहसि, एतत्सर्वं तवानुरूपमेव । "ज्वालाभासौ न पुंस्यर्चिः इत्यमरादर्चिःशब्दः सान्तं क्लीबम्, तेन भावार्थकत्वतलयोरर्चिषोभावोऽर्चिष्टा, अर्चिष्ट्वमिति रूपद्वयं निष्पत्स्यते। अत्रार्चितेति कवेः प्रयोग आर्षत्वादेव, कविस्वभावनिरङ्कुशतया वा निर्वाह्यः । या च तव सम्बन्धिनी अर्चिता भासमानता, साऽस्माकं नेत्रमयं ज्योतिः, तव भासयैव प्राणिनो नेत्रवत्तया दर्शनसमर्था इति भावः । प्रकाशविमर्शप्रतीकभूतयोः शिवशक्त्योरालोक-प्रज्ञाभ्यामेव सर्वे जना नेत्रवन्तो ज्ञानवन्तश्च व्यवहारसामर्थ्यं प्राप्नुवन्तीति ग्रन्थकर्तु-राशयः ॥ २७१ ॥

श्रीभगवत्याः कालिकाया अनुग्रहप्राप्तये ग्रन्थकर्तुः कालिदासस्य चिद्गगन-चन्द्रिकानाम्नो ग्रन्थस्य प्रणयनप्रयास इत्यावेदयन् मातरं स्तौति—

**प्राप्तदिव्यनयनैर्विलक्षणै-**
**र्वीक्ष्य कालि ! महिमाऽनुवर्ण्यते ।**
**केवलं तदनुवर्णनेऽप्युमे**
**त्वन्मुदे तदपि दासजल्पितम् ॥२७२॥**

हे उमे ! इच्छाशक्तिरूपे ! विशिष्टं लक्षणं येषां तैस्तथोक्तैः, प्राप्ते दिव्यनयने यस्य तैः, सर्वं काल्या वैभवं वीक्ष्य विविधेन विशिष्टेन रूपेण ईक्षणं कृत्वा स्वीयदृढ-संकल्पशक्त्या "तदैक्षत बहु स्यां प्रजायेय" इति श्रुत्युक्तेक्षणवद् यथा सम्प्रदायं शक्ति-स्वरूपं यथावदधीत्य गुरुजनैः स्वयं विमृश्य च ततो काल्या महिमा, "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्" इति सूत्रेण संज्ञात्वाद् ह्रस्वः, अनुवर्ण्यते मयेति शेषः । देवपितृ-

गन्धर्वर्षिमुनिजनैः पुरा काल्याः स्तुतिः कृता वर्णिता, तदनन्तरं कर्ता अनुवर्णयिष्यत्येव। ननुवहुभिः कृताश्चेत्तैनेवानुशीलनादिनाऽऽत्मा सन्तोष्टव्य इति किमिति नूतनारम्भेणेत्याह—तस्य माहात्म्यस्यानुवर्णने च दासेन कालिदासेन जल्पितं व्यक्तवाचा संकीर्तितम्. तदपि तत्तु केवलं तव मुदे त्वन्मुदे त्वत्प्रीत्यै .तवानुग्रहो मयि निपतेदित्येदर्थकमेव। भगवत्प्रसादं व्यतिरिच्य स्तुत्यादौ प्रयोजनान्तरं नास्त्येव जीवनकल्याणार्थिनाम्। एतादृगेव भावसाम्यं पुष्पदन्तेनाप्यवोचि महिम्नःस्तवे—हे प्रभो ! तव महिमा वाङ्मनसयोः पन्थानमतीत्य वर्तते, का कथा ममापि तु श्रुतिरपि किं तदित्यनुक्त्वा प्रगुणितलक्षणं प्रति न तद् अतद् इति निषेधमुखेनैव चकितमभिधत्ते। तर्त्तहि न वक्तव्यमिति प्रत्याह—"अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन् ममाप्येष स्तोत्रे हर निरपवादः परिकरः ॥" इति। 'इदं पथ्यम्, अदः पथ्यम्' इत्यत्र वैमत्येऽपि, त्वमेवैकः सर्वेषामाराध्यः, अत्रैकमत्यम्। तव प्रीतिर्येनोपायेन साध्येत तथा मया स्तूयसे, इत्येतावन्तं प्रघट्टकं कविश्चतुर्थपादेन "त्वन्मुदे तदपि दासजल्पितम्" इत्यनेन तुलयति ॥२७२॥

अनन्तरं लिङ्गानां पात्रत्वमभजमानापि सा तत्स्फारिकेति तां स्तौति—

न त्वमम्ब पुरुषश्च नाङ्गना
चित्स्वरूपिणि न षण्ढतापि ते।
नापि भर्तुरपि ते त्रिरूपता
त्वां विना तदपि न स्फुरेत् त्रयम् ॥२७३॥

हे अम्ब ! त्वं पुरुषोऽपि न, अङ्गना च न। हे चित्स्वरूपिणि चिन्मात्रस्वभावे ! षण्ढतापि ते त्वयि न। न केवलं त्वय्येव त्रिलिङ्गताया अभावोऽपि तु ते तव भर्तुरपि त्रिरूपता त्रिलिङ्गता नास्ति। किन्त्वेकं खलु महद् वैशिष्टयम्। किं तदित्याह—त्वां विना शक्तिं विना तदपि त्रयं पुंस्त्वस्त्रीत्वनपुंसकत्वं नैव स्फुरेत्। अयं भावः—तत्तल्लिङ्गधारिषु पुरुषस्त्रीनपुंसकेषु यानि पुंस्त्वस्त्रीत्वक्लीवत्वानि भासन्ते, तत्तदर्थक्रियाकारित्वेन समुपयुज्यन्ते च, तत्र शक्तिरेव निदानम्। नहि शक्तिमन्तरा पुरुषत्वं पुरुषः प्रदर्शयेत्। न वा शक्तिं विना कापि स्त्री स्त्रीजनसुलभकार्याणि कुर्यात्। न च शक्तिं विना षण्ढोऽपि स्वषण्ढत्वख्यापनाय कुत्रचिद् गन्तुमागन्तुं वा प्रभवेत्। अर्थक्रियाकारित्वमेव शक्तित्वप्रयुक्तमिति स्फुरत्तायां शक्तेः कारणत्वं क्लृप्तमिति भावः ॥२७३॥

सर्वेषामीप्सिताभीष्टदः शिवोऽनाद्यनन्तो महाचेताश्च, तत्रापि तवैव हेतुत्वम्, अतस्त्वां विहाय किमपि तत्त्वं संसारे नास्तीति स्तुतिमुखेन प्रस्तौति—

ईश्वरो जननि चिन्तितप्रदः
कोऽप्यनादिनिधनो महामनाः।
त्वत्प्रथा त्वमसि विश्वघस्मरी
त्वां ततः क इह भेत्तुमर्हति ॥२७४॥

हे जननि ! विश्वब्रह्माण्डजनयित्रि ! ईष्टे स्वैश्वर्येण सर्वानतिशेत इतीश्वरः शिवः, चिन्तितस्याभिलषितस्य प्रदो दाता, प्रद इत्यत्र प्रदत्त इति प्रदः "आतश्चोपसर्गे" इति कप्रत्ययः, कोऽप्यपूर्वः, न आदिनिधने यस्येत्यनादिनिधनः, महद् महनीयमभ्यर्हितं मनो यस्य महाप्राणो महाचेता वा, स पूर्वोक्तगुणगणः, त्वन्निदानमेव । तव प्रथा त्वत्प्रथा त्वत्प्रकाशा त्वमेव विश्वघस्मरी विश्वभक्षणशीला । यथोक्तम्—"अत्ता चराचरग्रहणात्" इति । यद्येवं तर्हि ततस्तस्मात् कारणात् कोऽन्यो जगति त्वां भेत्तुं तव सत्तामन्यथयितुम्, अर्हति प्रभवति ! न कोऽपीति शेषः । यस्य स्वसत्तामभिरक्षितुं नान्यापेक्षा तत्सत्तामपलपितुं कोऽन्यः प्रभवेत् । एतत्तुल्यभावात्मकेन पद्येन भक्तिस्तोत्रेऽवधूतसिद्धेनोक्तम्—

सत्यं न वेद्मि किमहं यदगोचरोऽसि
वाचस्पतेरपि गिरां किमुतास्मदादेः ।
भक्तिस्तथापि भवतो गुणकीर्तनेषु
यन्मां नियोजयति किं तदहं करोमि ॥ २ ॥

आराध्यदेवस्य गुणकीर्तनप्रवणया भक्त्या नियोजितः स्वसामर्थ्यानुसन्धानमकृत्वैव गुणानुवादे प्रवर्तते, तथैव शक्तिप्रीतिप्राप्तये दासस्य प्रवृत्तिरिति तत्सत्तापलापासंभावनादार्ढ्येन शक्तौ दृढानुरक्तिः ।। २७४ ।।

पूर्वपद्ये "त्वां ततः क इह भेत्तुमर्हति" इत्युक्त्या तद्भेदनं दुःशकम्, किन्तु साऽन्यस्य भेदिकेत्येतमर्थं वक्तुं स्तुतिमुखेन प्रस्तौति—

**रक्तशुक्लतनुहंसभेदिनी**
**त्वं पतिश्च तव तत्कृताकृतिः ।**
**भानुशाङ्करविभेदतस्तव**
**स्त्री च काप्यसि पुमानिव स्वयम् ।।२७५।।**

हे देवि ! अलौकिकगुणगणसंवृते ! त्वां भेत्तुमर्हो न कोऽपीति निर्णीतम्, किन्तु त्वं स्त्रीपुरुषयोर्विभेदिकेत्याह—रक्तश्च शुक्लश्च रक्तशुक्लौ शुक्रशोणितौ, ताभ्यां जायमाना तनुः शरीरं ययोः, हंसश्च हंसी च 'पुमान् स्त्रिया:' इत्येकशेषः, तौ तयोः स्त्रीपुरुषयोः, भेदिनी भेदिका त्वम्, हंसशब्दो जीववाचकस्तन्त्रे प्रसिद्धः । अत एव स्वरसपरिवर्तनेन सोऽहं हंस इत्यजपाजपोऽप्यत्र प्रत्येकं निःश्वासोच्छ्वासयोरनुवृत्तः प्रसिद्ध एव । शक्तेर्भेदकत्वे शिवस्यापि तत्संभव इत्यत आह—तव पतिश्च शिवः, तत्कृतस्य आकृतिर्यस्मिन् सः, तया शक्त्या कृतस्य स्त्रीपुरुषभेदरूपकार्यस्य आकृतिर्न्यूनाकृति, ईषदर्थक आङ्, शक्तिकृतभेदस्यान्यथाकरणे शिवस्याल्पमेव क्षमत्वमिति भावः । शङ्कर एव शाङ्करः, स्वार्थेऽण्, भानुरेव शाङ्करस्तत्राविभेदतोऽर्थात् शिवशक्त्योरपि परस्परं भेदात् तव भेदकता महा बलवतीत्यर्थः । तर्त्ति किं प्रतिफलितमित्याह—स्वयं त्वं पुमानिव काऽपि विलक्षणा स्त्री असि । स्वयं तु त्वं पुमानेवासि, स्त्रीत्वमपि त्वयि

नेतरसाधारणस्त्रीवदपि तु विलक्षणमेव। पुमानिवेत्यत्र इवशब्द एवार्थकः। तेन स्वेन त्वं पुमानेवासि, स्त्रीत्वमारोपितम्। तेन शिवे पुंस्त्वं पुंस्त्वाभासवदस्ति, त्वयि तु यथार्थम्। एतेन शक्तावेव वस्तुतो भेदकता स्थिता, प्रकाशमात्रशिवे तु प्रकाशत्वेन प्रकाशता, भेदकत्वस्याभावादिति परमार्थः ॥ २७५ ॥

अनन्तरं स्वातन्त्र्यस्य वैभवं वर्णयति—

**रूपमम्ब तव भास्वरं पुरो**
**वर्णपञ्चकविभेदितं पुनः।**
**त्वद्विमिश्रणमपि ह्यसुस्थितं**
**चित्रसंज्ञितमतश्चतुर्विधम् ॥२७६॥**

हे अम्ब! अननुगतस्वातन्त्र्यविलासभूमे! दर्शनान्तरेषु सर्वत्र परतत्त्वस्यैकमेवाद्वितीयं रूपं निर्धारितम्, तत्र स्वातन्त्र्यशक्त्यभावात्। अत्र तु पराशक्तेः परतत्त्वरूपायाश्चतुर्विधं रूपं कथमिति चेच्छ्रोतव्यम्—पुरः प्रपञ्चे तव भाः शीलमस्येति भास्वरं रूपम्, तदभावे सर्वस्यापि प्रपञ्चस्यान्धतमसप्रख्यत्वापत्तेः। प्रकाशसामान्याभावे किमपि कस्यचिदपि प्रत्यक्षत्वानापत्तेः। दृश्यं प्रति प्रकाशसामान्यस्य कारणत्वप्रक्लृप्तत्वाच्च। एतच्च प्रथमं रूपम्। वर्णपदमर्थपरमर्थानुरोधात्। अर्थपञ्चकानां विभिन्नत्वात् तद्रूपस्यापि भिन्नत्वमिति द्वितीयम्। यद्वा वर्णपदस्य चातुर्वर्ण्यपरत्वे पञ्चमश्चाण्डालादिः, तेषु परस्परं विभेदस्य सर्वजनीनत्वात्। असुस्थितं प्राणस्थितं त्वद्विमिश्रणमप्येकमिति तृतीयम्, प्राणानां शक्तेराद्यपरिणामात् शक्तिमिश्रितो जीवः प्रत्येकं भिन्न इति दुरपह्नवत्वात्। त्रयो मिलिताश्चित्ररूपतयाऽऽख्यायन्ते लोके, अतश्चित्ररूपं चतुर्थमित्याहृत्य चतुर्विधत्वमुपपद्यते। भेदस्य लोकतः सिद्धत्वेन तदपलापस्यानौचित्यात् भोगपुरुषार्थवादिनां तान्त्रिकाणां जगन्मिथ्यात्ववादस्य प्रतीतिविरुद्धत्वमेवेति भावः ॥ २७६ ॥

अथेदानीं यामलभावस्य साधनाय सर्वमपि द्वैधापन्नं वस्तु त्वमेवेति शक्तेः प्रकर्षवर्णनमुखेन स्तौति—

**भासनावरणशक्त्यधिष्ठितो**
**ज्योतिरञ्जनमथो द्विधा तव।**
**विग्रहाभरणबिन्दुशर्वरी-**
**संज्ञ उद्भवभवः स्फुटोदयः ॥२७७॥**

हे अम्ब! अविगीतप्रसिद्धिरूपे! "एकोऽहं बहु स्याम्" इति श्रुतिं दुरुपपादां मत्वा व्याकरणतन्त्रागमदार्शनिकाः—"एकं वस्तु द्विधा भूतं द्विधा भूतमनेकधा" इति लोक-

प्रतीतिसाक्षिकं तथ्यं समाद्रियन्ते। अत एव व्याकरणमुनिः पाणिनि—"द्व्येकयोर्द्विवचनैकवचने" इति सूत्रं प्रणिन्ये, नहि प्रकृतिपुरुषयुगलकं व्यतिरिच्य तृतीयस्योद्गमो वचनसहस्रेणाप्युपपादयितुं शक्यते। एतादृशं मतमास्थाय कविः पद्येऽत्र शाक्तद्वैधरूपमवतारयति। भासनं प्रकाशः, आवरणं तमोऽन्धकारः, तयोः शक्त्याधिष्ठितस्तव द्विधा भावो जगति प्रतीतिपथमारुह्य भासते। तथैव ज्योतिर्ज्ञानम्, अञ्जनमज्ञानमित्येतदपि तव रूपं द्विधापन्नमेव। विग्रहः शरीरं विश्वं वा तस्याभरणमलङ्कृतिः, तद्वेत्तीति विन्दुः, "ज्ञाता तु विदुरो विन्दुः" इत्यमरः। स एव शर्वरी रात्रिस्त्वम्। रात्रावेव जनाः सुखं शयाना विग्रहस्य प्रातिस्विकं स्वरूपं रक्षन्ति। विश्वमपि रात्रौ स्वाभाविकतां दधद्राजते। निखिलस्यास्य कार्यनिवहस्य ज्ञात्री शर्वरीरूपा शक्तिः। तथैव स्फुटः प्रकट उदयः स्वभावप्रसरो यस्मिन् सः। दिन एव वस्तूनि निरावृतरूपेण दृश्यमानानि यथायथं स्वानुरूपप्रसारायावकाशं लभन्ते। किञ्च, उद्भवस्योत्पत्तेर्भवः स्थानं दिनमेव। सम्यग् ज्ञा बुद्धिर्यस्मिन् स इति संज्ञः, घस्रो दिनम्। तदेवं प्रकाशतमोरूपेणज्ञानाज्ञानरूपेण दिनरात्रिरूपेण च द्विधापन्ना त्वमेव विराजसे। रात्र्याः शक्तिरूपत्वं दिनस्य शिवरूपत्वं तन्त्रवाङ्मये प्रायशो निरूपितम्। द्वैधोल्लास एव शक्तेरलङ्कारः। अत्र सर्वत्रोभयरूपतयाशक्ते रेवोल्लासः, न तु शिवस्य तत्तद्रूपेणेति विशेषः ॥२७७॥

इदानीं देव्या रक्तकृष्णगौररूपस्य कारणमाह—

**अञ्जनेन रुचिमिश्रणे समे**
**रक्तमुल्लसति तावकं वपुः।**
**श्यामनीलतनुताऽञ्जनेऽधिके**
**पीतशुक्लतनुता च ते रुचौ ॥२७८॥**

अञ्जनं तमः, तमसो द्रव्यत्वेन २७० पद्ये "यत्प्रकाशतमरञ्जकं पदम्" इत्यत्र प्रयोगात्, समनन्तरपद्येऽपि २७७ तमेऽञ्जनपदप्रयोगाल्लोकव्यवहारप्रतीतिमेव ग्रन्थकारः समनुमोदते। वर्णस्य परिवर्तनं केन प्रकारेण भवतीति पद्येऽस्मिन् मातुः शरीरवर्णप्रसिद्धया प्रसङ्गाद् वर्ण्यते। अञ्जनेन कृष्णवर्णद्रव्येण समे समपरिमाणे, रुचिमिश्रणे, रुचिरत्र श्वेतवर्णोपलक्षकम्, श्वेतद्रव्यसंयोगे सति तावकं तव वपूरक्तं रक्तवर्णं भूत्वा प्रकाशते। उल्लासः स्वेच्छया तत्तत्कार्यपरकतत्तद्रूपधारकत्वेन। लोकेऽपि सुधया हरिद्रामिश्रणेन रक्तवर्णतोपलब्धिः। पीतस्य गौरत्वेन परिग्रहणं कोशात्। "पीतो गौरो हरिद्राभः" इत्यमरः। अञ्जने कृष्णवर्णेऽधिके श्वेतवर्णस्य न्यूनत्वे श्यामनीलतनुता कालीरूपता जायते। "कृष्णे नीलासितश्यामकालश्यामलमेचकाः" इत्यमरः। श्यामनीलशब्दयोरेकार्थकत्वेन ज्ञात्वा प्रयोगोऽधिकनीलताज्ञापनाय। अत एव कालीरूपस्योग्रत्वं भीषणत्वं मृत्योरपि त्रासकरत्वं वर्ण्यते, तद्रूपस्यालौकिकत्वाददृष्टाश्रुतपूर्वकत्वाच्च रुचौ श्वेतरङ्गस्याधिक्ये कृष्णस्याल्पत्वे ते तव पीतशुक्लतनुता शरीरत्वं जायते। अत्रापि पर्यायवाचिनोर्द्वयोः प्रयोगोऽधिकगौरत्वद्योतनाय। गौरीति तव रूपं न साधा-

रणमपि तु लोकोत्तरमदृष्टाश्रुतपूर्वमेव। तत्तद्वर्णानां तत्तत्कामनाभेदेन तन्त्रशास्त्रे प्रयुक्तत्वात्, वर्णानां ध्यानेनाप्यभीष्टलाभादुक्तवर्णायाः शक्तेः स्मरणं ग्रन्थकर्तुस्तन्त्रशास्त्रं प्रति महतीं श्रद्धां व्यनक्ति ॥२७८॥

अथेदानीं सृष्टिस्थितिसंहारशान्त्यादिकर्मप्रसङ्गेन काल्याः सौम्यघोरशान्तादिरूपाणां धारणमित्याह—

सौम्यता तव सिसृक्षया तनोः
सा तथाप्यथ रिरक्षिषा यदा।
घोरता पुनरियं जिहीर्षया
संस्मृतेऽम्ब तव धाम्नि शान्तता ॥२७९॥

हे अम्ब! अकारणकरुणावरुणालये। स्रष्टुमिच्छा सिसृक्षा, तया हेतुना तव तनोः सौम्यता उदाराकृतिता लक्ष्यते। अथानन्तरं यदा रिरक्षिषा पालनेच्छा त्वयि लक्ष्यते, तथापि तदापि सैव पूर्वोक्ता उदाराशयगर्भा सौम्यतैव। पुनः सृष्टिस्थितिभ्यां विरतौ हर्तुमिच्छया त्वयि घोरता भीषणता लक्ष्यते। सम्यक् स्मरणं ध्यानमेव। ध्येये चित्तैकतानतारूपध्यानेन चित्तवृत्त्युपशमो जायते। तदेवाह—तव धाम्नि तेजसि संस्मृते शान्तता लक्ष्यते। वस्तुतस्तु तत्तत्कार्योपहित तत्तद्रूपजिघृक्षा तव जीवोपकारायैव, स्वस्मै सर्वस्यास्य निष्प्रयोजनत्वात्। सर्वत्रैवात्र सिसृक्षा रिरक्षिषा-जिहीर्षादिषु इच्छाया अनुस्यूतत्वेन विमर्शस्वरूपकालीशक्तेः स्मरणेन "तज्जपस्तदर्थभावनम्" इति दिशा मातृभक्तिरेवात्र पार्यन्तिकं लक्ष्यम् ॥२७९॥

इदानीं प्रकाशपञ्जरे सर्वं भासते, तत्रैव व्यापके तत्त्वे पर्यन्ते लीयते वापीति तथ्यं स्तुतिमुखेनाचष्टे—

भास्वरे वपुषि सर्वगे तव
स्पष्टमण्डनिवहो निमज्जति।
कालवह्नयधिकृतौ शिवे यथा
तत्समुल्लसति दीप्तिपञ्जरे ॥२८०॥

हे अम्ब! सततं पञ्चकृत्यकारिणि! तव सर्वगे व्यापके भास्वरे सहजप्रकाशमये वपुषि स्पष्टं स्फुटम् अण्डानां पार्थिव-प्राकृत-मायीय-शाक्तानां निवहो व्रातो निमज्जति प्रलीनो भवति। कालवह्नौकालाग्नौ अधिकृतिरधिकारो यस्य तस्मिन् शिवे यथा दीप्तिपञ्जरे प्रकाशपुटके तद्वस्तुपिण्डानां समूहः समुल्लसति स्वरूपत्वेन संतिष्ठते। पद्येऽस्मिन् प्रकाशविमर्शरूपशिवशक्त्योः प्रकाशात्मकत्वमेव निर्धारितमुभयत्रापि प्रलये ब्रह्माण्डानामवस्थितिरपि। एतेन शिवशक्त्योः स्फुटमैक्यं प्रतिपादितम्, द्वयोरपि प्रकाशमयत्वात्। शिवे कालाग्निसहकारेण संहारः, शक्तौ तु स्वीयस्वातन्त्र्य-

वशादिति शिवस्य नैयून्यमेव, परमुखापेक्षित्वात्। शक्तिदशैव सर्वोत्कृष्टा ज्यायसीति पिण्डितार्थः ॥२८०॥

इदानीं शक्तेस्त्रिरूपत्वं तद्भिन्नत्वं च युगपदेव दिदर्शयिष्यन् पारमार्थिकरूपेण केवलं चिन्मयं रूपमेव स्थितमिति तथ्यं तन्त्रागमसिद्धान्त सिद्धं वर्णयन् प्रस्तौति—

**तावकं त्रिविधरूपवर्जितं**
**गर्भितत्रिविधरूपमम्बिके ।**
**चिन्मयं परमरूपलक्षणं**
**रूपमन्तरवभाति तद्बहिः ॥२८१॥**

हे अम्बिके ! मातृस्नेहपूर्णत्वेन सहजकृपामयि ! तव इदं तावकं त्वत्सम्बन्धि त्रिविधं त्रिप्रकारकम् इच्छाज्ञानक्रियात्मकं सृष्टिस्थितिसंहारात्मकं किं वा नरशक्ति-शिवात्मकं किं वा शाम्भवशाक्ताणवात्मकं किं वा पर-अपर-परापरात्मकं किं वा यन्त्र-मन्त्रतन्त्रात्मकं किं वा सकल-निष्कल-सकलनिष्कलात्मकं यद्रूपं तेन वर्जितं रहितम्, अथवा युगपदेव गर्भितमन्तःस्थापितं पूर्वोक्तमवशिष्टं वा त्रिविधभावनया प्रकल्पितं त्रिकात्मकं रूपं स्वरूपं यस्मिस्तत् तथोक्तम्। यत् परमरूपं लक्ष्यतेऽनेनेति चिदेव चिन्मयं रूपम्, तत् अन्तर्बहिरित्युभयात्मना विभक्तमवभाति तदेव तव तात्त्विकं रूपम् ॥ २८१ ॥

अथेदानीं मानसबौद्धोभयरूपेण स्त्रीति नाम्नो निष्पत्तिनिरूपणप्रसङ्गेन वास्तविकरीत्या विश्वविग्रहाचितिरेव शक्तेः स्वरूपमिति वक्तुमुपक्रमते—

**स्त्रीति नाम तव कापि कल्पना**
**स्त्रीतिरूपमपि तादृशी च धीः ।**
**वस्तुतस्त्वमसि विश्वविग्रहा**
**तत्परा च चितिरेव शाङ्करी ॥२८२॥**

हे अम्ब ! पद्ये संवोधनपदानुपादानेऽपि स्तुक्तिग्रन्थसत्त्वेन संबोधनमुचितमेव। नामरूपात्मकं जगदिति प्राचामुक्तिः। वेदान्तदर्शने तु—"अस्ति भाति प्रियं रूपं नाम चेत्यर्थपञ्चकम्। आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥" इत्युक्त्या नामरूपयो-रुक्तार्थे मुख्यरूपेण विचारः कृतः। अत्र पद्येऽपि नामरूपयोः प्रसङ्ग उत्थापितो ग्रन्थकर्त्रा। तव कालीतिनामिकायाः शक्तेः स्त्री-इति नाम कापि विलक्षणा कल्पना मानसी प्रतिपत्तिः। मनसः संकल्पविकल्पमयत्वेन शक्तिः स्त्रीलिङ्गं नामेति कल्प्यते। कल्पना मानसी क्रियैवेति तस्य सद्भावे मतभेदस्य विद्यमानत्वमनिवार्यम्। मा भून्नाम आकारस्तु स्यात् ? इत्याह—स्त्री इति रूपमाकारोऽपि बुद्धेर्निश्चय एव। न तु तत्र

किमपि प्रमाणम् । वस्तुतो वस्तुगत्या विचारे क्रियमाणे न केवलं शक्तिरिति नामैवापि तु तस्या आकारोऽपि विश्वाकार एव । अत एव विश्वाकारत्वेन शङ्करसंवन्धिनी शाङ्करी चितिरेव त्वमसीति भावः ॥ २८२ ॥

अथेदानीं द्वितीयचतुर्थयोः पदयोः शक्तिः, तृतीयपञ्चमयोः पदयोः शिवः स्थित इति तथ्यं प्रकटयन् शक्तिं स्तुतिमुखेन स्तौति—

त्वं चतुर्थपदवर्तिनी शिवे
यद्द्वितीयमपि तत्पदं स्थिता ।
योऽपि पञ्चमपदाश्रितः शिवे
यस्तृतीयमपि तत्पदं स्थितः ॥२८३॥

हे शिवे ! अशिवापहे ! यद् द्वितीयं पदं स्वप्नाख्यं तदपि तत्रापि स्थिता चतुर्थपदवर्तिनी तुर्यपदगामिन्यसि । यः शिवः, तृतीयं पदं सुषुप्त्याख्यं तत्पदमपि स्थितोऽसौ पञ्चमपदाश्रितोऽपि चतुर्थपदाश्रयाभावे पञ्चमपदाश्रितोऽपि चतुर्थोन्मुख एवास्ते । चतुर्थपदस्थित्यभावे पञ्चमे स्थायितया स्थातुमनर्हत्वादिति भावः । चित्प्रकाशपदे स्वातन्त्र्यरूपविमर्शाभावात् स्थायित्वेनावस्थानं दुःशकमित्युच्चपदस्थताऽपि न तोषायेति भावः ॥ २८३ ॥

अथानन्तरं शक्तेः प्रथमादितृतीयान्तं ततस्तेन सह चतुर्थादि-पञ्चमपदाक्रमणं क्रमप्राप्ततया समुचितमिति तत्प्रकर्षमुद्भावयन् स्तुतिमुखेन स्तौति—

यत्पदं प्रथममेतदुत्तरे
तत्परे तदपि तुर्यगामिनी ।
त्वं तुरीयतनुराहृतत्रिका
पञ्चमं विशसि पूरितत्रिकम् ॥२८४॥

हे शिवे ! शिवत्वदायिनि ! प्रथमं यत्पदं जाग्रत्, एतस्मादुत्तरे स्वप्नपदे स्थिता सती ततः परे यत्पदं सुषुप्त्याख्यं तदप्याक्रम्य तुर्यगामिनी तुर्यारूढा त्वम् आहृतं समाहृतं त्रिकं जाग्रदादिसुषुप्त्यन्तं यस्यां तादृशी तुरीयं पदं तनुः शरीरं यस्याः सा, पूरितत्रिकं चतुर्थं स्थिता सती क्रमेण पञ्चमं तुर्यातीतं विशसि प्रविशसि । तुर्यस्वरूपा त्वं जाग्रदादिसुषुप्त्यन्तं त्रिकं स्वस्मिन्नाहृत्य ततः पञ्चमं प्रविशसीति क्रमतया प्रवेशे न कापि विप्रतिपत्तिः । तृतीयपञ्चमपदे स्थित्वाऽपि शिवस्तत्रस्थातुमनर्हस्त्वन्मुखापेक्षीति क्रमपरित्यागस्य फलम् । एतेन क्रमस्वीकार एव यत्र कुत्रापि निवासे स्थायित्वलाभाय वरमिति क्रमदर्शनस्य प्रशंसा व्यज्यते ॥ २८४ ॥

अथेदानीं शक्तेर्निराकारत्वसाकारत्वनिरूपणपूर्वकं खण्डचिदानन्दपीठरूपत्वमस्याः समर्थयन् स्तौति—

अम्बरेश्वरि निराकृतेस्तव
व्यज्यते निखिलमाकृतित्वतः ।
सर्वदा स्फुरसि येयमद्वया-
नन्दचित्प्रसरपीठवर्तिनी ॥२८५॥

हे अम्बरेश्वरि ! चिद्गगनेश्वरि ! निर्गता आकृतिर्यस्यास्तस्यास्तव निखिलं सर्वमाकृतिमत्त्वादेव व्यज्यते भास्यते। ननु निराकृतेस्तस्याः कथं सर्वाकृतित्वमिति चेत् ? निखिलविरुद्धधर्माधिष्ठितायास्तस्याः सर्वसंभवत्वात्, आकारवत एव निराकारत्वसंभवाच्च। या इयं सर्वकर्तृत्वसर्वज्ञातृत्वनित्यत्वपूर्णत्वव्यापकत्वेतिपञ्चशक्तिनिर्भरा पुरः स्थिता त्वम्, अद्वयानन्दचित्प्रसरयोः पीठे वर्तत इति तथोक्ता अखण्डानन्दचित्पूर्णपीठनिवासिनी सर्वदा पूर्वोक्तोभयरूपेण स्फुरसि प्रकाशसे। चिदानन्देति वक्तव्ये आनन्दचिदिति पाठः शक्तिप्राधान्यद्योतनाय। आनन्दचिद्घनायास्तव सार्वकालिकस्फुरणेन सह निराकारसाकारोभयरूपेणाभिव्यञ्जनमुचितमेव। युगपदेव भगवतः शिवस्य मुक्तसंसारदशयोर्वर्णनमधिकृत्यैतादृशभावनाबोधकस्तुतिरवधूतसिद्धस्य—

एकां बत च्युतसमस्तभवप्रवृत्ति-
माहुर्विमुक्तिमिति शान्ततमामवस्थाम् ।
स्थित्युद्भवप्रलयिनीमपरामवस्थां
संसारिणीमिति वदन्ति तवैव सन्तः ॥ (भक्ति० १८) ॥२८५॥

अथेदानीं खण्डवस्तुनिर्देशका आगमाः श्रुतयः सिद्धानां वाण्यो वा न शाक्तं धाम विवृण्वन्ति, योगविधिरपि योगदर्शनोक्तो नात्र बहूपकरोतीति तथ्यसंसूचनमुखेन शक्तिं स्तौति—

न श्रुतिर्न च गिरो न चागमाः
खण्डवस्तु विनिवेशिताशयाः ।
त्वां नयन्ति परमेशि ते मखा
यागयोगविधयश्च नेदृशीम् ॥२८६॥

हे परमेशि ! निरतिशयैश्वर्यशालिनि ! श्रुतिर्वेदो न भवत्प्रापिका, गिरः सिद्धवचांस्यपि नार्थसाधकानि, खण्डवस्तुनि द्वैततत्त्वनिर्देशके निवेशितो ग्राहित आशयो येषां ते तथाभूता आगमाः शैवशाक्तदर्शनानि, ते प्रसिद्धा मखा यज्ञाः श्रौतस्मार्तरूपाः, अन्ये ये यागा योगस्य अष्टाङ्गयोगस्य षडङ्गयोगस्य वा विधयः प्रकाराः, ईदृशीम् एतद्ग्रन्थोक्तशक्तिरूपिणीं त्वाम्, न नयन्ति प्राप्नुवन्ति। अखण्डाद्वयस्वरूपां चिदानन्दस्वातन्त्र्यघनां शक्तिमनाराध्य शास्त्रान्तरोक्तयोगयागादिना तत्प्राप्तिः कथमपि न सुलभा सुकरा वा। शाक्तसमावेशलाभाय शक्तिरेवोपास्या, अन्यानि कार्याणि वृथा आयासकराणीति भावः ॥ २८६ ॥

पूर्वोक्तमेवार्थं प्रकारान्तरेण पुनः प्रस्तौति—

**नित्यतादिगुणलक्षिते पदे**
**ज्ञानयोगमुखकल्पनापि ते ।**
**अम्ब न त्वदनुभूतिदायिनी**
**त्वल्लयैकगुरुसंश्रयं विना ॥२८७॥**

हे अम्ब ! भावाभावविवर्जिते ! त्वल्लयैकगुरुसंश्रयं त्वयि लय एवैको गुरुस्तस्य संश्रय आश्रयस्तं विना त्वयि भक्तिभावेन यत्तत्परत्वं लीनत्वं तत्तादृशनिरतिशय-समावेशं विना नित्यतादिगुणलक्षिते नित्यत्वपूर्णत्वव्यापकत्वादिगुणेन लक्षिते ज्ञाते ते तव पदे ज्ञानयोगमुखकल्पना ज्ञानं च साधनत्वेनाश्रितं ज्ञानोत्पादकं शास्त्रं दर्शनं सत्सङ्गत्यादि, योगश्च चित्तवृत्तिनिरोधलक्षणोऽष्टाङ्गरूप इति ज्ञानयोगौ तावेवादी यस्यां तादृशी या कल्पना ज्ञानक्रियात्मिका भावना, मानसबौद्धसाधना वा, सापि त्वदनुभूतिदायिनी त्वद्भक्तिदायिनी न । नित्यतादिगुणा ज्ञानयोगादिसाधनोपायाः त्वच्छरणागतिं विना त्वद्भक्तिप्रदायका न भवन्ति । "गुरुतः शास्त्रतः स्वतः" इति वचने जागरूकेऽपि गुरुकृपा, शास्त्रानुशीलनम्, प्रातिभं वाऽनुष्ठानसाधनं त्वत्कृपां विना न स्यादिति भावः । केवलं तव भक्तिरेवैका त्वां प्रापयितुं क्षमेति निष्कर्षः । तदुक्तमवधूतसिद्धेन स्वभक्तिस्तोत्रे—

यत्खिद्यते कमलयोनिरपि स्तुवानः
साक्षाच्चतुर्भिरपि नाम मुखैर्भवन्तम् ।
तत् के वयं तव गुणस्तवनक्रियासु
भक्तिः प्रमाणमिति सर्वमिदं क्षमस्व ॥ ६४ ॥

सर्वात्मना भक्तिमेव प्रकर्षपदं प्रापयता भट्टनारायणेन स्तवचिन्तामणौ भावपूरितचेतसाऽभाणि—

निःशेषप्रार्थनीयार्थसार्थसिद्धिनिधानतः ।
त्वत्तस्त्वद्भक्तिमेवाप्तुं प्रार्थये नाथ सर्वथा ॥ इति ॥ २८७ ॥

अथेदानीं बाह्योपकरणसंघातोपहितसृष्टिक्रमपक्षपातिनोऽधिक्षेपपूर्वकं "स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि" इति नयेन स्वविरुद्धोपक्रमं निर्दुष्टमवलोक्यावमतेभ्योऽपि त्वं शश्वत् स्वसमावेशप्रकारज्ञापनाय चेष्टसे, इति महौदार्यमभिलक्ष्य पुनस्त्वन्नयं ग्रहीतुं समुत्सुकानधिकाधिकाश्वासनप्रदानेनानुगृह्णतीं मातरं श्रद्धास्नेहभावव्यापृतत्वेन स्तौति—

**व्योमभावविनिविष्टचेतसः**
**प्रातिभं जगदवेक्ष्य निन्दिताः ।**
**ते त्वमाविशसि याननारतं**
**त्वन्नयेन गुरुणाम्ब ! वीक्षितान् ॥२८८॥**

हे अम्ब ! क्रमदर्शनसर्वस्वे ! व्योम्नो भावः शब्दगुणकत्वं रिक्तत्वमवकाशप्रदत्वेन शून्यत्वासङ्गत्वाद्युपेतम्, तत्र विनिविष्टमभिनिविष्टं चेतो येषां ते, प्रतिभाशक्तिस्तया निर्वृत्तं प्रातिभं शक्तिकर्तृकं शक्तिस्फुरणात्मकतया बहिः स्थूलनीलपीतादिकतया स्फुरितं जगद् दृश्यप्रपञ्चं ज्ञात्वा बाह्योपकरणाभिनिवेशेन जगदुत्पत्तिक्रममाचक्षाणास्तन्त्रान्तरप्रवर्तकमतानुयायिनः परमाणूपादानकत्वेन सृष्टिरिति न्यायवैशेषिकाः, सत्त्वरजस्तमसां त्रिगुणानां परस्परवैषम्योपनिपातात् सृष्टिरिति साङ्ख्ययोगादिदर्शनपक्षपातिनः, इत्येवं भूतास्ते ते तीर्थङ्कराः स्वीयापकृष्टकल्पनया स्वयमेव निन्दिता मलिनमान्यतया तिरस्कृता अभूवन्। जगदिदं विमर्शेच्छाशक्तेः स्फुरणमात्रमिति जातात्मग्रहास्ते स्वयं निन्दिताः, न तु केषाञ्चित्तत्राग्रहः प्रेरणा वा। एवं स्थिते त्वया किं क्रियते ? इत्यपेक्षायामाह—त्वन्नयेनेत्यादि। गुरुणा बृहत्त्वान्महत्त्वाच्च गुरुत्वम्, गम्भीरविचारवता तव नयेन क्रमेण क्रमाश्च संवित्क्रमवर्णक्रमधामक्रमवृन्दक्रममहाक्रमा इत्यादयोऽनेके, तेन वीक्षितान् विशेषेण ज्ञानोत्सुकान् यान् स्वापकृष्टकल्पनया स्वयमेवावमतान् अनारतं निरन्तरं त्वम् उदारतया आविशसि प्रविश्य प्रबोधयसि। विमुखानल्पज्ञानवगमयितुं प्रौढप्राज्ञानामेष एव पन्थाः। चित्तवृत्तिसंशोधनमन्तरा नास्त्युपायः सम्भ्रान्तचित्तानामिति हृदयम्॥ २८८॥

अथेदानीं पञ्चशक्तीनां स्वरूपनिरूपणपूर्वकं रागकालनियतीनां नामग्राहं परिचयं विवृणोति—

> नित्यता त्वयि विभुत्वपूर्णते
> दृक्क्रिये स्वरसगोचरे च ये।
> तानि तानि वियतीव शोभने
> रागवेदसकलाश्च भान्त्यथ॥२८९॥

हे शोभने ! शोभनज्ञानक्रियाभ्यां पूर्णेच्छाशक्तिस्वरूपे ! नित्यता विभुत्वपूर्णते स्वरसगोचरे च ये ज्ञानक्रिये त्वयि सन्ति। तानि तानि वियति आकाशे इव रागवेदसकलाश्च भान्ति। अथेति प्रारम्भार्थः। स्वरसगोचरे स्वाभाविकस्वार्थविबोधके दृक् च क्रिया च दृक्क्रिये ये। दृगिति सर्वज्ञातृत्वोपलक्षणम्। क्रियेति सर्वकर्तृत्वोपलक्षणम्। तदेवं सर्वकर्तृत्वसर्वज्ञातृत्वनित्यत्वपूर्णत्वव्यापकत्वानि यानि तानि। रागो विषयेष्वभिष्वङ्गः, वेदनं वेद इति वेद्यवेदकयोरप्युपलक्षणं स्वारस्यात्। सकलेति सप्तप्रमातॄपलक्षणम्। ते च शिवः, मन्त्रमहेश्वरः, मन्त्रेश्वरः, मन्त्राः, विज्ञानाकलः, प्रकलाकलः, सकल इति। शिवः परप्रमाता, शून्यप्रमाता च, शक्तिरपि शाक्तदर्शने परप्रमात्री, मन्त्रमहेश्वरादिमन्त्रान्तास्त्रयः शक्तिशिववत् शुद्धाध्वप्रमातारः, विज्ञानाकलः शुद्धविद्याधो मायोर्ध्वे महामायाभूमेरधिष्ठाता, प्रलयाकलो मायीयकार्ममलद्वयोपेतः प्रलयकालं व्याप्य तस्यामवस्थायां स्थितः, सकलश्च आणवमायीयकार्मेतिमलत्रयोपेतः पशुप्रमाताऽपरप्रमातेत्यादिनामभिरभिधीयते। यथा वियति ग्रहनक्षत्रादयो भान्ति,

तथैव पूर्वोक्तनिखिलतत्त्वानि शक्तौ भान्ति। षट्त्रिंशत्तत्त्वेषु सर्वाऽपि सृष्टिः परिसमाप्यते, अत एव तत्त्वानां सम्यग् ज्ञानात् शक्तिज्ञानं शिवज्ञानं चावश्यमेव जायते। यत्तत्त्वेषु नास्ति तत्कुत्रापि नास्ति। यथोक्तम्—"एवं सृष्टानि तत्त्वानि ज्ञानानि च वरानने। तत्त्वैरेतैर्जगत्सर्वं विसृष्टं सचराचरम्॥" (स्वच्छ० ११।१९५) सचराचरं जगत् तत्त्वैर्विसृष्टं विशेषेण सृष्टं चतुर्दशविधभूतसर्गात्मना प्रपञ्चितमित्यर्थः। किञ्च—

भुवनानि विचित्राणि शतशोऽथ सहस्रशः॥
तत्त्वाभ्यन्तरस्थानि शास्त्राणि विविधानि च।
विज्ञानं कुहकं शिल्पं सिद्धिसन्दोहलक्षणम्॥
सर्वं तत्त्वेषु बोद्धव्यं सर्वतत्त्वेषु दृश्यते।
प्रक्रिया शिवदीक्षा च तत्त्वैरेतैर्हि लभ्यते॥ (स्वच्छ० ११।१९६-१९७)

सर्वाणि ज्ञानानि तत्त्वान्तर्गतानि, तेषां ज्ञानादेव शिवशक्त्योर्ज्ञानसंभवात्। एतत्सर्वमभिलक्ष्यैव ग्रन्थकृता केषाञ्चिदेव संकेतं कृत्वा जिज्ञासूनां प्रेरणाप्रदावसरो दत्तः। नियतीवेति पाठान्तरे नियत्या नियन्त्रितः सर्वोऽपि जनो देशकालाकारादिनियतिभोगं भुञ्जानो यथासुखं तिष्ठन् भात्येवेति भावः॥ २८९॥

अथेदानीं देवसङ्घः स्वात्मस्वरूपावबोधरहितोऽपि व्योमवद् व्यापकत्वं संदधानः पञ्चकृत्यकारित्वे प्रसादमनुभवतीति तथ्यं वर्णयति—

**व्योमवृत्तिघटितैक्य उल्लस-**
**त्यद्वयो जननि ! देवतागणः।**
**तावकोद्यमपदेऽपि सर्वगो**
**द्राग्विलापनपदं विनापि ते॥२९०॥**

हे जननि! व्योमवृत्तिघटितैक्यः सर्वगोऽद्वयो देवतागणस्ते द्राग् विलापनपदं विनापि तावकोद्यमपदेऽप्युल्लसतीति पदयोजना।

व्योमवद् या वृत्तिरसङ्गता, किं वा व्योम्न आकाशस्य या वृत्तिः सर्वगत्वाद्वयत्वादिकतया घटितम् ऐक्यं यस्य स सर्वगत्वेऽप्यखण्डत्वसंवलितो देवतानां गणः संघः, ते तव शाक्तैश्वर्यस्य, कीदृक् तत्पदमित्याह - द्राग् झटिति यद् विलापनं स्वात्मसात्कारस्तस्य पदं धामाश्रयो वा तद्विना तव अयं तावको य उद्यमः पञ्चकृत्यकारित्वरूपस्तस्य पदमाश्रयं विनापि तद्रहितत्वेऽपि, उल्लसति स्वात्मनोऽकृत्रिमं प्रसादमनुभवति। दीव्यन्तीति देवा इन्द्रियाण्यपि, तेषां समूहस्त्रयोदशविधः शाक्तपञ्चकृत्यसम्पादने साहाय्यं ददातीत्यर्थः। अस्मिन् पक्षे ते देवाः स्वस्वकार्यं विहाय शक्तेराज्ञाकारित्वं वहन्तः सदा पञ्चकृत्यविधाने सहायन्ते। इन्द्रियाण्यपि स्वजनिकां संविदमनुचरन्ति, वैगुण्यं न प्रस्तुवन्तीति भावः॥२९०॥

वृत्तिपञ्चकस्य कार्यक्रमे विभागस्य त्वरित उदयो नानुसन्धेयो विद्यते, अखण्डं निजं स्वरूपं भजमाना त्वं सर्वमपि प्राक्प्रोक्तमुपेक्ष्य सदा स्फुरसीति शाक्तप्रकर्षं साधकेषु ज्ञापयन् स्तौति—

**इत्थमम्ब तव वृत्तिपञ्चक-**
**स्योदयोऽद्भुतविभागसंभ्रमः ।**
**सर्वदा स्फुरति सर्वतः परं**
**खण्डितेतरनिजस्वरूपभाक् ॥२९१॥**

हे अम्ब ! त्रिकस्वरूपे ! "द्राग्विलापनपदं विनापि ते" इत्युक्तं समनन्तरपद्ये। तदेव स्मारयन्नाह—तव वृत्तिपञ्चकस्य शक्तिपञ्चकस्य, पञ्चकत्रयं त्रिविधं शाक्तशैवयोः प्रसिद्धम्। तद्यथा—सृष्टिस्थितिसंहारनिग्रहानुग्रहाः, चिदानन्देच्छाज्ञानक्रियारूपाः, सर्वकर्तृत्व-सर्वज्ञातृत्व-नित्यत्व-पूर्णत्व-व्यापकत्वानि, अत्र तु सृष्ट्याद्यनुग्रहान्तरूपाण्येव गृह्यन्ते, अधिकप्रसृतत्वात् प्रथमोपस्थितत्वाच्च, स्वरूपलक्षणतटस्थलक्षणयोस्तटस्थलक्षणस्यैव लोकापेक्षितत्वेन सृष्टिस्थित्यादेर्लोकापेक्षितत्वेन स्वरूपलक्षणादप्यन्तरङ्गत्वात्। स्वरूपस्थगुणानां लोकानपेक्षितत्वेन तदपेक्षस्यैव गरीयस्त्वात्। यथा लोके सूर्योदयस्याभ्यर्हितत्वमामन्यते, स्वरूपतस्तु तस्य नित्योदितत्वमस्त्येव। किन्तु लोकापेक्षोदयास्तमनयोरेवार्थक्रियाकारित्वेनोपयोगित्वात्तस्यैव चर्च्यमानविषयतायाः प्रत्यहानुभूयमानत्वाच्च। कीदृगसौ वृत्तिपञ्चकोदय इत्यपेक्षायामाह—अद्भुतविभागसम्भ्रमः। अद्भुत आश्चर्यजनको यः पञ्चकृत्यानां विभागो निरन्तरपञ्चकृत्यकरणरूपस्तस्य सम्भ्रमः संवेगस्त्वरया तेषां क्रियान्वयो यस्मिन् तथोक्तः। 'समौ संवेगसम्भ्रमौ' इत्यमरः। "नमः शिवाय सततं पञ्चकृत्यविधायिने। चिदानन्दघनस्वात्मपरमार्थावभासिने॥" इति सततपञ्चकृत्यविधानस्य विभागावबोधोऽद्भुततया वस्तुगत्याऽनुसन्धानानर्हः। क्रमेणैव संयोगविभागावकलनस्य लोकस्वभावसिद्धत्वेन निरन्तरया क्रियमाणानां तेषामनुसन्धानं न केवलमाश्चर्यावहमपि तु सुदुष्करमपि। ननु स्वरूपतः कीदृशी सा शक्तिर्यस्याः कार्यस्यानुसन्धानमेतादृगित्यपेक्षायामाह—खण्डिते रेत्यादि। खण्डितादितरद् यत्तस्या निजं स्वरूपं तद् भजत इति। "भजो ण्विः" इति ण्विः प्रत्ययः। अखण्डमद्वयं निजं स्वरूपं धारयन्ती सा शक्तिस्तु सर्वतः परं लोकातीतं यथा स्यात्तथा सती सर्वदा स्फुरति। विश्वोत्तीर्णस्वरूपायास्तस्याः कार्यानुसन्धानविषयं किमुत वक्तव्यमिति भावः॥ २९१॥

अथेदानीं सप्तप्रमातॄणां शिव-मन्त्रमहेश्वर-मन्त्रेश्वर-मन्त्र-विज्ञानाकल-प्रलयाकल-सकलानां प्रत्येकं शक्तिशक्तिमद्भेदेन गुणिते चतुर्दशत्वं समष्टिगतं चैकत्वमित्याहृत्य पृथिव्यादिप्रकृत्यन्ततत्त्वानां पञ्चदशदशत्वं सम्पद्यते। नरशक्तिशिवात्मके विश्वस्मिन् नरादारभ्य शिवान्तं यावत् ये सप्तप्रमातारस्तेषु नरे शक्तिशक्तिमद्भेदेन द्विधात्वे समष्टिगतस्यैकस्य संकलने पञ्चदशधात्वं निष्पद्यते। समष्टिगतं नाम स्वस्य रूपमेकम्।

तत्र शक्तिदशा तिसृभिः शक्तिभिर्विभज्यते। शाक्तैव सृष्टिरिति हेतोः शिवं विहाय पञ्चत्रिंशत्तत्त्वपर्यन्तमेष क्रमः प्रचलति। एतत्प्रक्रियाक्रमं प्रस्तौति—

खण्डितेतरसमस्तगर्भगो
यस्त्रिपञ्चविसराश्रयोऽक्रमः।
देवताक्रम उदेत्यनारतं
तस्य हि त्वमसि देवजन्मभूः ॥२९२॥

हे अम्ब! अत्र देवताक्रमपदेन बाह्याभ्यन्तरेन्द्रियगण एव गृह्यते। पूर्वपद्येऽपि सङ्केतित एव एष क्रमः। तत्र बाह्यवद् आन्तरेन्द्रियगणोऽपि बहिरन्तरे च नित्यं कार्यं करोति। तदेव वर्णयति—खण्डितेतरेति। खण्डितादितरः समस्तो गर्भगोऽन्तर्गतो यस्त्रिगुणितः पञ्चप्रसरस्याधारः क्रमरहित इन्द्रियगणो मनोबुद्ध्यहङ्काररूपः, अनारतं नित्यमुदेति। किं केवलमान्तरेन्द्रियगणस्यैव शक्त्या सह सम्बन्धः? इति प्रश्ने प्राह— तस्य सर्वस्य देवसङ्घस्य बाह्याभ्यन्तरस्य देवस्यार्थाद् देवगणस्य जन्मभूस्त्वमेवासि, "प्राक् संवित् प्राणे परिणता" इति न्यायात्। प्राणानन्तरमिन्द्रियाणि जातानि। तत्रापि पूर्वं मनोबुद्ध्यहङ्कारा अनन्तरं बहिष्करणानीत्येष क्रमः। अवरोहक्रमे संविदः सकाशात् प्राणक्रमेणेन्द्रियाणि तन्मात्राणि भूतानि चेत्येवं न केवलमिन्द्रियाणामेवापि तु तन्मात्रस्थूलभूतादीनां च प्रसर आन्तरः प्रसराधारोऽक्रमः, क्रमस्य बहिरेवोपयोगात्। पञ्चदशधा प्रसरवर्णनं तन्त्रसारे—

शक्तिमच्छक्तिभेदेन धराद्यं मूलपश्चिमम्।
भिद्यते पञ्चदशधा स्वरूपेण सहानरात्॥
कलान्तं भेदयुग्धीनं रुद्रवत्प्रलयाकलः।
तद्वन्मायापि नवधा ज्ञकला सप्तधा पुनः॥
मन्त्रास्तदीशाः पञ्चान्ये मन्त्रेशपतयस्त्रिधा।
शिवो न भिद्यते स्वैकप्रकाशघनचिन्मयः॥

शुद्धाध्वप्रमातारः पञ्च, तेषु तिसृणां शक्तीनां परा-परापरा-अपराणां सहकारेण प्रमातृप्रमेयप्रमाणांशगतदशानां शक्तिशक्तिमद्दृशाभिः सह एतयोरसंस्पृष्टं स्वरूपं गणनया पञ्चदशप्रकारकं जायते। सर्वस्य सर्वात्मकत्वात् सकलेऽपि तत्त्वदृष्ट्या प्रलयाकलशक्तिसंभवेन सप्तानां प्रमातृशक्तीनां सप्तभिः गुणने एकोनपञ्चाशद्रूपसंभवः। शक्तिमद्भेदेषु परस्परभेदने एकोत्तरचतुर्विंशतिशतप्रकारा भवन्ति। सामान्यविशेषभावेनापि पदार्थेषु भेदाः। अत्र प्रमातृप्रमेयप्रमाणांशभेदेन शक्तिशक्तिमत्स्वरूपभेदेन भेदानामानन्त्यम्। आवेश-निमज्जन-विकास-विघूर्णनभेदेन शक्तिषु भेदाः। आवेशस्तन्मयीभावः, निमज्जनमसङ्ज्ञात्मा तदन्तःप्रवेशः, विकासस्तदौन्मुख्येन प्रसरणम्, विघूर्णनं तदौन्मुख्येनोच्छलनात्मकं स्पन्दनम्। एवमर्थक्रियाकारित्वप्रयुक्तो भेदो विद्वद्भिरनुभूतः। अन्ये च तद्भावभाविताशया ज्ञास्यन्ति। अलं विस्तरेणेति विरम्यते ॥२९२॥

अथेदानीं दिव्यवाहविभवात्मकं शाश्वतं संहारं वर्णयितुं शक्तिप्रकर्षवर्णनप्राधान्येन शक्तिमभिमुखयितुं प्रक्रमते—

**दिव्यवाहविभवोदरस्थितो**
**रश्मिमण्डलसमुद्गमास्पदम् ।**
**अव्ययस्तव नवार्णविग्रहे**
**संहृतिक्रम उदेत्यकल्पितः ॥२९३॥**

हे नवार्णविग्रहे ! नवार्णमन्त्रस्वरूपे ! "त्वं नवार्णमनुचक्रविग्रहा" (२९९) इति पद्येऽपि सुस्पष्टतयाऽस्योल्लेखः। अर्णशब्दोऽक्षरवाचकः। नवाक्षराण्येव विग्रहो शरीरं यस्यास्तत्संबोधने रूपम्। मन्त्रविद्याभेदेन मन्त्रस्य द्वैविध्ये विद्यात्मकोऽयं मन्त्रः स्त्रीदैवत्यो मन्त्रमहार्णवमन्त्रमहोदध्यादिग्रन्थतोऽनुशीलनीयः। कथंभूतस्तव संहृतिक्रम इत्यपेक्षायामाह—दिव्यवाहेत्यादि। "प्राक् संवित्प्राणे परिणता" इति सिद्धान्तात् संविद आद्यपरिणामः प्राणः। दिव्यदेवीसकाशाद् आविर्भूतत्वाद्दिव्य एव। वाहः प्राणः, दिव्यो यो वाहविभवः प्राणविक्रमः, स उदरस्थितोऽन्तःस्थितो यस्मिन् तथाभूतः। पुनः कथंभूत इति प्रत्याह—रश्मिमण्डलेति। रश्मिमण्डलसमुद्गमस्य प्रभासमूहजन्मभुव आस्पदं प्रतिष्ठास्थानं यस्मिन् स तथाभूतः। आत्मयापनाय कालयापनाय शरीरयापनाय पाणिनिना आस्पदशब्दस्य निपातनं विधीयते। नियतलिङ्गकत्वात् संहृतिक्रमस्य विशेषणम्। संहार आत्मकालशरीराणां व्ययकारकोऽप्यव्यय इति संहारस्य प्रशस्तिस्तद्द्वारा शक्तेः पराक्रमस्य प्रशस्तिश्च। एवं पूर्वोक्तगुणपराक्रमादिविशिष्टस्तव, अकल्पितः शाश्वतः, संहारक्रम उदेति सर्वोत्कृष्टतया विजयत इति संहारस्याभ्यर्हितत्वम्। एतेन नित्यस्य संहारक्रमस्य प्रवर्तिकायाः काल्याः समुत्कर्षस्तु वाग्विषयातीत इत्यत्र किमु वक्तव्यम् ॥२९३॥

अथेदानीं संहारेण शक्तेः सहजो विश्रामः, संहारिकाप्यसौ सर्वशक्तिपरिपूर्णैवावतिष्ठते। नहि रश्मिचक्रशरीरेण सा भासिताऽपि तु स्वतेजसेत्यादितथ्यव्रातं संसूचयन् शक्तिस्तुतिद्वारा जीवानाप्लावयन् शाक्तप्रभावं स्तौति—

**लक्ष्यशून्यसहजाश्रमोदया-**
**रम्भपूर्णनिजकोष्ठभेदिनी ।**
**रश्मिचक्रतनुरश्मितोज्झिता**
**त्वं च गौरि ! वरपुण्यवासना ॥२९४॥**

हे गौरि ! शुभ्रवर्णतया शुभाशयार्णवे देवि ! नहि कमपि लक्ष्यमभिलक्ष्य परमविश्रामरूपः संहारः शक्तेः संघटत इत्याह—लक्ष्यशून्यो यः सहज आश्रमो विश्रामस्तस्योदयः। लोके प्रसिद्धाऽप्याश्रमव्यवस्था नियतावधिकतत्तत्कार्यसिद्ध्यर्था विश्रान्ति-

रूपैवेतिविचारणया निश्चेतुं शक्यते, तथैवेहापि संहारो महाकालमेलापकरूपः प्रवर्तमान-प्रवृत्त-उपशान्तभेदेन त्रिविधो महाविश्रान्तिरूपः स्वाभाविकः। तस्योदय एव आरम्भपूर्णा निजाकोटिः, भेदाभेदप्रधानाशक्तदशा, तत्रभेदे सहजरजोगुणाभिनिवेशेन चाञ्चल्यपूर्णाऽऽरम्भपूर्णाशाक्तप्ररोहे स्वीया प्रथमा कोटिः, तयाऽभेदभावनाप्रवर्तिका त्वम्। भेदप्रधानत्वात्तस्याः शक्तिर्बाह्यस्रोतः संगृहीता, किमित्याह—रश्मिचक्रेत्यादि। रश्मिचक्रं सूर्यसोमानलादिसंग्रथितं तस्य तनुः शरीरं तया संगृहीता रश्मिता प्रकाशवृत्तिता प्रकाशता तया उज्झिता रहिता त्वम्। नहि बाह्यरश्मिभिस्तस्याः प्रकाशता कल्पनीया, तस्याः स्वत एव प्रकाशचिदानन्दघनत्वात्। अथ च वरा श्रेष्ठा पुण्या पुण्यजनिका च वासना सत्संस्कारजा भावना यस्यां सा तथोक्ता च त्वमसीति समुदितार्थः ॥२९४॥

अथेदानीं मन्त्रपीठधारिकात्वेन शक्तिं निरूपयन् शाक्तवर्णसकारेण हकाराध्याहारपूर्वकं हंसः सोहम् इति मन्त्राध्वानं सङ्केतरूपेण वर्णयति—

अध्वभिर्ध्वनिविमिश्रणक्रम-
मब्जबीजमनिकेतनं वरम्।
कल्पनैक्यबहुभेदमद्वयं
मन्त्रपीठमसि काल्यनर्गलम् ॥२९५॥

हे कालि! कलनस्वभावभूते! त्वमनर्गलं मन्त्रपीठं धारयसि। कथंभूतं तन्मन्त्रपीठमित्याह—अध्वभिः वर्णपदमन्त्रकलातत्त्वभुवनात्मकैः षड्भिः। तत्र वाचकाध्वनि वर्णः प्रथमः, वाच्याध्वनि कला कलनस्वभावा प्रथमा, कलनं स्वभावो यस्याः। कलनम् "क्षेपो ज्ञानं च संख्यानं गतिर्नाद इति क्रमात्" इतिनीत्या पञ्चविधमपि क्षणशः विश्वायुषः क्षयक्रमेणापहारः स्वाभाविकशक्तिह्रासरूपः। वर्णास्तु तन्त्रशास्त्रे पञ्चाशदेकपञ्चाशद्वा, तन्त्रान्तरे त्रिषष्टिश्चतुःषष्टिर्वा, ते च ध्वनिरूपास्तेषां सकाशादेव विश्वोत्पत्तिः। ते च बीजयोन्यात्मना द्विधा। तेषां विमिश्रणं प्रयोजनवशात् क्रमाक्रमतया संयोगविभागरूपम्, तस्य क्रमो लोकव्यवहाराय पूर्वापरयोगवियोगरूपो यस्मिंस्तं मन्त्रपीठमितिविशेष्येणान्वयः। पुनः कथंभूत इत्याह—अब्जेति। अब्जश्चन्द्रस्तस्यबीजं सकारः, सकारः शक्तिरूपोऽपि, तदुक्तं योगिनीहृदयदीपिकाधृतहंसपरमेश्वरे—"शिवो हकार इत्युक्तः सकारः शक्तिरव्यया" इति। यथा यत्तदोर्नित्यसम्बन्धस्तद्वत् सकारहकारयोश्चापि। तेन सकारेण हकारमध्याहृत्याजपाजपमन्त्रः सोहं हंस इति सङ्केत्यते, मन्त्राध्वन्यस्य मन्त्रस्याप्युत्कृष्टत्वादनर्गलरूपेण निःश्वासोच्छ्वासरूपेण गतिशीलत्वात् "सकारेण बहिर्याति हकारेण विशेत् पुनः" इतिवचनात्, हंस इत्यत्र हकारेण बहिर्गमनं सोहमित्यत्र सकारेणेतिक्रमव्युत्क्रमयोरुभयोरपि बहिर्गमनप्रवेशसंभवः। पुनः कीदृगित्याह-अनिकेतनम्। निकेतनं गृहमाश्रयस्थानं तन्नास्ति यस्मिन् तत्तथाभूतम्। मन्त्रस्वरूपा शक्तिरेव। सा चाश्रयरहिता, तस्याः सर्वाधिष्ठानभूतत्वात्। स्वेच्छया स्वभित्तौ विश्वो-

न्मीलननिमीलनस्वभावत्वात्तस्याः । वरं श्रेष्ठम्, पुनरप्यन्यविशेषणमाह—समष्टि-कल्पनया ऐक्येऽपि वस्तुरूपतया बहवो भेदा यस्मिन् तम् । अद्वयमखण्डरूपम्, नास्ति अर्गला प्रतिबन्धकं यस्मिंस्तम् । एवंभूतं मन्त्राणां पीठं मार्गं त्वं धारयसि, "कृभ्वस्तयः क्रियासामान्यवचनाः" इत्यभ्युगमात् । "मननात्त्राणधर्मासौ मन्त्रइत्यभिधीयते" इति लक्षणतया मानसक्रियया मननात्मिकया सर्वोपप्लवात् रक्षको मन्त्रः । मन्त्ररूपा च-शक्तिरेव । अत एव मन्त्ररूपतां निरूप्य मातुः स्तुतिः कृता ग्रन्थकारेण । कालीप्रक्रियायां दूतीमुखेनैव शिष्यस्य ज्ञानप्रतिपादनविधानात्, गुरुतद्दूत्योः सममाहात्म्यतयोपादानात्, "स्त्रीमुखे निक्षिपेत्प्राज्ञः स्त्रीमुखाद् ग्राहयेत्पुनः" इति वचनाच्च स्त्रिया एव मन्त्रधारणदानाधिकृतत्वादितिभावः ॥२९५॥

अथेदानीं ज्ञानपीठमाश्रित्य प्रतिष्ठितां शक्तिं स्पन्दरूपां निःस्पन्दरूपां च प्रणतिपूर्वकं स्तोतुमुपक्रमते—

**स्पन्दमम्ब परिपूर्णमप्यभूः**
**स्पन्दमुज्झितपदं निरावृति ।**
**व्योमरूपमखिलक्रमास्पदम्**
**पीठमावधिकविद्ययाम्बया ॥२९६॥**

हे अम्ब ! अनन्यस्फुरणस्वरूपे ! परिपूर्णं निराकाङ्क्षस्पन्दमाश्रित्य स्थिता त्वं तम् अभूः तम् अधाः धृतवत्यसि । 'स्पदि किञ्चिच्चलने' इतिधातोर्भावे घञि स्पन्द-शब्दः सिद्धः अभिनवगुप्तपादाचार्येण स्वातन्त्र्यरूपमेव स्पन्दतत्त्वमङ्गीकृतम् । यथोक्तं तन्त्रालोके—

किञ्चिच्चलनमेतावदनन्यस्फुरणं हि तत् ।
ऊर्मिरेषा विबोधाब्धेः···· ········ ····॥ इति ।

स्पन्दकारिकास्पन्दप्रदीपिकानुसारं स्पन्दो निस्तरङ्गस्य परमात्मनो युगपन्निर्विकल्पसार्वकालिकौन्मुख्यवृत्तित्वरूपम् । स च निरावरणचिद्रूपो दिक्कालाद्यनवच्छिन्नप्रसरोऽद्वितीयः स्वानुभवैकप्रमाणः साध्यः शक्तिचक्राधीश्वरः । अत एव स्पन्दशास्त्रस्य प्रथमकारिकया—"यस्योन्मेषनिमेषाभ्यां जगतः प्रभवाप्ययौ' इत्यत्र शिव-शङ्करशब्दाभ्यां निर्दिश्य सङ्केतशब्देनाभिहितः । अनेनापि ग्रन्थकर्त्रा यदुपवर्णितं तेन स्पन्दशास्त्रराद्धान्त एवास्याभिप्रेत इति प्रतीयते । तदाह—निरावृति निर्गताऽऽवृति आच्छादनात्मकमावरणं यस्मात्तत्। उज्झितं परित्यक्तं पदमाश्रयो यस्मिंस्तत्, निराश्रय-मित्यर्थः । निरावृतचैतन्यात्मनः स्पन्दस्य निःस्पन्दताऽप्यर्थाल्लभ्यते । वस्तुतस्तु निर्नामकेनैव तेन भवितव्यम्, तथापि स्पन्दशास्त्रस्य प्रवर्तयिष्यमाणत्वेन कस्याप्यभिधान-स्यावश्यकत्वात् स्पन्दनाम्ना एव प्रवर्तकविपश्चिद्भिः स्वीकृतत्वात् । पुनः कथं भूतोऽसौ पीठ इत्याह—व्योमरूपमिति। व्योमशब्दोऽत्र चिद्गगनस्य वाचकः, न तु शिवाश्रित-भूताकाशस्य, तस्य व्यापकत्वेऽपि चित्त्वराहित्यात् । किञ्चान्यदप्याह—अखिलस्य

क्रमस्यास्पदमाधारः, एवंभूतं पीठं ज्ञानपीठमास्थाय प्रतिष्ठिता त्वं जगति नानाविध-पूर्वोक्तगुणैर्विजृम्भसे। अत्र सर्वाण्यपि विशेषणानि पीठस्यैव। आवधिकविद्ययाऽम्बयेति पदद्वयस्यान्वयोऽपि ज्ञानपीठ एव। अम्बया मातृरूपया अवधिरेव अवधिकः, आसमन्ताद् अवधिक आवधिकः. स्त्रीत्वे आवधिका विद्या ब्रह्मविद्यैव तया। स्वात्मप्रापिका विद्या शुद्धविद्यैव, तया प्रकाशितात्मवैभवो जनो निरावृतचैतन्यं निरोधकाभावादुपलब्ध्री स्वरूपा काली ज्ञानपीठमालम्ब्य जगदुद्धरतीति ग्रन्थकर्तुरभिप्रायः॥ २९६॥

अथेदानीं नरशक्तिशिवात्मकं त्रिकं वर्णयन् मातरं स्तौति—

**अष्टयोनिदलपत्रपूरुषं**
**त्वन्तवृत्तिदलशक्तिपेटिका।**
**त्वं पतिश्च तव लिङ्गविग्रहो**
**रुद्रसिद्धमुनिवृन्दवन्दिते!॥२९७॥**

हे रुद्रसिद्धमुनिवृन्दवन्दिते! नरशक्तिप्रतीकः पुरुषो जीवः कथंभूत इत्याह—अष्टयोनयोऽष्टवर्गात्मिका वर्णशक्तयस्ता एव दलानि, 'दल विदारणे' इति धातोः कर्तर्यचि दलतीति दलम्, दलपत्रशब्दयोरुभयोरत्र सहैव प्रयोगाद् दलमिति शाखास्तम्बादीनामप्युपलक्षणम्। शाखास्तासां पत्राण्येव पुरुषः, जातावेकवचनम्। पुरुषपदेन स्त्रीणामपि ग्रहणम्, जीवमात्रोपलक्षकत्वात् पुरुषपदस्य। एवंभूतस्य जीवस्य त्वमेव व्यवस्थापिका असि। "तुः स्याद्भेदेऽवधारणे" इत्यमरात्, तुः अन्ते यस्याः सा त्वन्तावृत्तिः भेदप्रधाना, शक्तेर्भेदाभेदप्रधानत्वात्, त्वन्तवृत्तय एव दलानि शाखापत्राद्युपलक्षितबाह्यान्तः करणानि तत्कार्याणि, तान्येव शक्तयस्तासां पेटिका मञ्जूषा त्वं शक्तिरेव। तव पत्युः किं स्वरूपमिति प्रश्ने प्राह —लिङ्गं विग्रहो यस्य लीनं गमयतीति लिङ्गममूर्तं वस्तु। लोकेऽमूर्तोऽपि कामः सकलं चराचरं स्ववृत्त्याऽऽन्दोलयति। शिवस्तु "कामः कमनीयतया" इत्युक्त्या कामेश्वरः, शक्तिः कामेश्वरी, तयोः परस्पराश्लेषमूलको ब्रह्माण्डनिवह इत्येवं नरशक्तिशिवानां त्रिकमेवात्र राजते जृम्भते च। पुरुष इति प्रथमान्तपाठः साधुः। त्वन्तेत्यत्र स्वन्त इति पाठेऽपि सुः शोभनाऽन्ते यस्याः सा वृत्तिरभेदात्मिका, सैव दलरूपतया विश्वमभिव्याप्य विश्वकार्यनिर्वाहिकेत्यर्थोऽपि शक्तेरुभयरूपतयाऽविरुद्ध एव। अष्टवर्गात्मिका मातृका जगद्योनिरित्यत्र वैदिकतान्त्रिकवाङ्मये प्रभूतं प्रमाणम्। कामधेनुतन्त्रे—"अकारादिक्षकारान्ता स्वयं परमकुण्डली। सर्वं चराचरं विश्वं वर्णात्मा सूयते ध्रुवम्॥ नानाशास्त्रं पुराणं च इतिहासश्च सुन्दरि! वेदश्च स्मृतिशास्त्रं च अन्यानि यानि कानि च॥ अक्षराज्जायते सर्वं परं ब्रह्ममयं प्रिये!॥" इत्यक्षरादेव चराचरजगदुत्पत्तिरित्युक्तम्। वर्णाभिधानग्रन्थे प्रणवस्य सर्वजीवोत्पादक इत्येकं नाम। एतेन मातृकाभ्यो जीवोत्पत्तिः स्थिरीकृता। यद्यपि नरशक्तिशिवात्मकस्त्रिक एव शक्त्युत्पन्न इति, तथापि तत्र पृथक् पृथक् कारणतया कथनं शास्त्रविस्तारहेतुकमिति ग्रन्थकर्तुराशयः॥ २९७॥

अथेदानीं चक्रनवकं नवोद्भावितं स्वात्मकल्याणाय संस्तुवन् कविः शक्ति-सामर्थ्यं सर्वोत्कृष्टं स्वीकुर्वन् मातरं स्तौति—

सृष्टितः प्रभृति यच्चतुष्टयं
यत्प्रकाशनिभमूर्तिवृन्दजम् ।
यच्च खण्डपदमम्ब ! पीठगं
देहि चक्रनवकं नुतं तव ॥२९८॥

हे अम्ब ! स्वातन्त्र्यमाहात्म्येन भेदाभेदमयि ! तव चक्रनवकं देवदनुजर्षिसिद्ध-गन्धर्वैः स्तुतं मह्यं देहीति पद्यार्थसारभूतं चक्रनवकं स्वात्मनो लाभाय कविः प्रार्थ-यमानो तदेवोपपादयति—सृष्टित इत्यादिना । कृत्यपञ्चके प्रथमं सृष्टिकृत्यमारभ्य यच्चतुष्टयं स्थितिसंहारनिग्रहानुग्रहरूपम्, अथवा भावान्तरेण सृष्टयादिस्थितिसंहारा-नाख्याभासारूपम्, अथवा वामेश्वरी-खेचरीदिक्चरी-गोचरी-भूचरीरूपम् । कीदृक् तत् कृत्यपञ्चकं शक्तिपञ्चकम् ? तदेव विशिनष्टि—यत् प्रकाशनिभमूर्तिवृन्दजमिति । प्रकाशात्मकः शिवोऽकाराक्षररूपः, "अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः" ( सं० प०)। तत्सदृशं यन्मूर्तिवृन्दं ततो जातम् । निभशब्दः सादृश्यार्थकः । "निभसंकाशनीकाश-प्रतीकाशोपमादयः" इत्यमरः । सादृश्यं भेदघटितमेव गृह्यते । सर्वाऽपि मातृका शिव-सदृशीति सुबहुश उक्तं तन्त्रेषु—"मन्त्रा वर्णात्मकाः सर्वे सर्वे वर्णाः शिवात्मकाः" इति, "स्वतन्त्रश्चितिचक्राणां चक्रवर्ती महेश्वरः" इति च । चितिचक्रं मातृकाचक्रमेव, "अउम् इति ब्रह्म" इति श्रुतिः मूर्तिवृन्दधामचक्रनाम्ना महानयप्रकाशे किञ्चिद्भिन्न-मेव वर्णितम्, किन्त्वत्र चक्रनिर्देशाभावेन मूर्तिवृन्दपदेन पञ्चाशन्मातृकाचक्रमेव गृह्यते। समनन्तरपद्ये—'रुद्रसिद्धमुनिवृन्दवन्दिते" (श्लो० २९७) वृन्दपदेन समूहार्थकवृन्द-शब्दोऽपि कविनैव वर्णितः । यच्च पीठगम्, कामरूप-पूर्णगिरि-जालन्धर-ओड्याणेति-चत्वारः पीठाः प्रसिद्धाः, तद्गच्छतीति पीठचतुष्टयगामि । खण्डपदं खण्डधाम-प्रसिद्धम् । खण्डत्वं तु चतुष्ट्वेनैव प्रसिद्धयति, एकस्याद्वयस्यैवाखण्डत्वस्मरणात् । कृत्यपञ्चके पीठचतुष्टयसंकलने नवत्वं समागच्छति । एतच्चक्रनवकं तव यद् बहुभि-र्नुतं स्तुतं प्रणतमिति यावत्, तदेव मह्यं देहीत्यन्वयः ।

योगिनीहृदये त्रैलोक्यमोहनादिसर्वानन्दमयान्तनवचक्राणि परदेवतामय-श्रीत्रिपुरादेव्याः प्रोक्तानि । पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रोत्पत्तिः, सा च स्वेच्छया विश्वात्मना स्फुरणरूपैव । चक्रसङ्केते सविस्तरं चक्रनवकस्य वर्णनं सप्रयोजनं सम्यङ् निरूपितं जिज्ञासाधनैस्तत एव ज्ञेयम् । किन्त्वत्र विशिष्टं तद्भिन्नमेव पीठचतुष्टयेन कृत्यपञ्चकसंकलनेन च निर्मितं वर्णितमिति पीठरूपिण्याः शक्तेश्चतुष्ट्वेन शक्ति-पञ्चकरूपकृत्यपञ्चकस्य च योगादुक्तं भावनामयैः परिशील्याऽनुभवितव्यम् ॥२९८॥

इदानीं सप्तदशभेदभिन्नां शक्तिं भावनामयेन रूपेण स्तौति—

त्वं नवार्णमनुचक्रविग्रहा
स्वोदरार्पितसमस्तदेवता ।
देवि सप्तदशवर्णभेदिता
त्वं प्रकाशशिवचन्द्रगामिनी ॥२९९॥

हे देवि ! स्वप्रकाशात्मिके ! त्वं नवार्णो यो मनुः, स एव चक्रं तदेव विग्रहो यस्याः सा तथोक्ता, त्वं स्वोदरे स्वगर्भे अर्पिता समर्पिता समस्ता देवा एव देवता, स्वार्थे तल्प्रत्ययः। सप्तदशभेदभिन्ना सप्तदशप्रकारात्मगा, नवार्णेऽष्टचक्रस्वरूपा अष्टवर्गरूपा अकचटतपयशेति भेदेन भेदिता भेदं प्रापिता राजसे। प्रकाश एव शिवश्चन्द्ररूपस्तस्य गामिनी अनुगामिनी । चन्द्रस्य प्रमेयात्मतया शास्त्रेषु वर्णितत्वेन तद्रूपा। प्रकाशस्य शिवरूपत्वेन विमर्शस्य शक्तिरूपत्वेन रूपणं शैवदर्शने क्रियते। अत्र तु शक्तेः प्राधान्येन शिवस्य चन्द्ररूपप्रमेयत्वेन रूपणमप्राधान्यद्योतनायैव। नीरक्षीरवत् सामरस्ये तु द्वयोरभिज्ञानमेव सुदुष्करम्। किन्तु व्यवहारसौकर्य्यार्थ शिवशक्त्योर्लक्षणं विधाय शृङ्गग्राहिकतया तत्तेदन्ताहन्तादिभेदप्ररूढिः कल्प्यते। गौणमुख्यभावं प्रकल्प्यैव लोकव्यवहारवत् शास्त्रविस्तारोऽपि क्रियते। अभेदेऽपि भेदं प्रकल्प्यैव प्रपञ्चमर्यादा निर्वाह्यते। यथा केनचित् चित्रकारेण स्वीयकौशलप्रकटनाय गजवृषभयोर्भिन्नस्वभावयोरप्येकतरसन्निवेशयुक्त्यैकावभासोऽन्यतरसंस्थानयुक्त्याऽ-न्यावभासः क्रियते, तेन तेन रूपेण विलेखनं क्रियते, येनैकतो दर्शने गजवद् अपरतश्च वृषभवत् प्रतीयते। "फलभेदादारोपितभेदः पदार्थात्मा शक्तिः" इति स्वतन्त्राद्वैतसंवित्समयसाम्राज्यशालिनि शाक्तदर्शने शक्तिप्राधान्यप्रकटनायैव शिवस्य गौणत्वं प्रतिष्ठाप्यते। यामलोल्लासरूपे परतत्त्वे तु—"न शिवेन विना शक्तिर्न शक्तिरहितः शिवः। तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव ॥" इत्युक्त्योभयथा व्यवहारः कृत्रिमः। एतत्सर्वं जानानोऽपि ग्रन्थकृत् स्वेच्छया प्रकाशशिवचन्द्रस्यानुगतत्वं शक्तेर्वर्णितवानिति शक्तिकार्यत्वं शिवे प्रकल्प्य शिवानुगामिनीत्वमपि शक्तेः स्वप्राधान्यप्रदर्शनायैवेति रहस्यम्। एवं च शिवमपि स्ववशे कृत्वा नरशक्तिशिवात्मकत्रिकानुगतत्वेऽपि शक्तेः साम्राज्यमेवेति ग्रन्थकर्तुः कल्पनाप्रौढिः ॥ २९९ ॥

अथेदानीं शाम्भवशाक्तगुरुक्रमाणां परिचयमुखेन शाक्तक्रमप्रकर्षमेव विशिष्टतया द्योतयन् स्तुतिमारचयति—

यः शिवात्प्रभृतिसोमपश्चिम-
स्त्वत्क्रमैकरसिको गुरुक्रमः ।
आननाग्रमिह चक्रभानुतो
यत्तु एददुभयं त्वया यया ॥३००॥

क्रमत्रयस्वरूपं मनाग् विचार्यानन्तरं पद्यार्थः स्फोरणीय इतिक्रमेऽत्र दर्शनेऽनेके क्रमा उद्भाविता विचारिताश्च। पीठस्यैव महाक्रमत्वं परिमले राद्धान्तितम्—"शिवशक्त्युभयोन्मेषसामरस्योद्भवं महत्। वीर्यं तस्माद् देह एव महापीठः समुद्गतः ॥" इति। पीठक्रमे स्वशरीरस्यैव पीठतयोपासनं प्राक् कर्तव्यम्। भोगातयन-शरीरधारिजीवस्य कृते पीठक्रमस्योपासनं शरीरस्यैव तीर्थत्वेन कुलकौलकालीदर्शने प्राचुर्येण महाफलतयोपदिश्यते। जीवोपकारकाणीन्द्रियाणि शरीरस्थानीत्यतः परं देवताक्रमोपदेशः। यथोक्तं महानयप्रकाशे—"धामादित्रितयेनैव वक्त्रभङ्गभयान्मनाक्। प्रकाश्यते मया सम्यग् वाक्यैरविषमाशयैः ॥" इति। धाम-संवित्-वर्णक्रमा धामादि-त्रयम्। अनन्तरं शाक्तापरपर्यायमूर्तिचक्ररूपमूर्तिक्रमः।स्वातन्त्र्यापरपर्यायकालीशक्ति-र्विवेचनीयतया पुरः स्फुरति। प्रकाशात्मकाः सूर्यचन्द्राग्नयो मूर्तिपदेनोच्यन्ते। एता मूर्तयः स्वाभाविकक्रमे बाह्यान्तरकरणोद्दीपकतया महदुपकुर्वन्ति। संकुचिताश्च पशुत्व-मुपजनयन्ति। असंकुचिताः परमशिवीभावलक्षणं मङ्गल्यमुन्मीलयन्ति। शाक्तक्रम एवानन्दक्रमनाम्नाऽपि चर्च्यते। प्रकाशपरमार्थः शाम्भवक्रमः। तदेवं पीठक्रममहार्थ-क्रमगुरुक्रमाः पर्यायाः, धामवर्णसंवित्क्रमाः शाम्भवशाक्तगुरुक्रमाणां क्रमेण समानार्थ-कतया साम्यभाजः। समस्तो हि पदार्थसार्थो धामवर्णसंवित्क्रमतां नातिक्रामति। यतो नामरूपमयं विश्वम्, विश्वान्तःपाती पदार्थो नामरूपात्मक एव। संविदालम्बनेन विश्वं सदिति प्रतीयते। एवं च धामवर्णसंवित्सु सर्वपदार्थान्तर्भावः। तत्रानन्दस्य चन्द्रादुत्पत्तिः, सूर्यस्य शिवादुदयः, सूर्यादग्नेः समुद्भव इति।

अथ कारिकार्थः—शिवात् प्रभृति सोमपश्चिमः शिवादिसोमान्तो यस्तव क्रम-स्त्वत्क्रमः, तस्यैकरसिकः सर्वात्मना त्वत्क्रमाश्रितो गुरुक्रमः पूर्ववर्णितः प्रकाशते। अनेन पद्यार्धेन शाम्भवशाक्तगुरुक्रमाणां नामग्राहं संसूचनं सम्पन्नम्, शिवशक्तिगुरुपदो-पादानेन प्रकृतकल्पनावकाशत्वात्। भानोश्चक्रं चक्रभानुतः "इतराभ्योऽपि दृश्यन्ते" इति सूत्रेण सार्वविभक्तिकस्तसिल्। आर्षप्रयोगात् चक्रशब्दस्य पूर्वनिपातः। चक्रभानु-शब्दः शितिकण्ठकृतमहानयप्रकाशेऽपि प्रयुक्तः। भानुचक्रं शाम्भवक्रम इह क्रमदर्शने शरीरे वा आननाग्रम् आननमिवाग्रमभ्यर्हितं पोषकत्वान्मुखं सर्वाङ्गेषु श्रेष्ठं लोके मन्यते, तद्वत् शाम्भवक्रमोऽपि मुख्य इति भावः। यत्तु गुरुशाम्भवरूपक्रमद्वयं यया लोकोत्तरया त्वया त्वदभिन्नशाक्तक्रमेण सह समुज्जृम्भते, तत्तु स एव "यत्तदोर्नित्य-सम्बन्धः" इत्यभ्युपगमेन तदित्यस्याध्याहारः। "तुः स्याद्भेदेऽवधारणे" इत्यमरोक्त्या तुरत्रावधारणे। शाक्तक्रम एव पूर्वोक्तद्वयापेक्षया ज्यायान्। अनेन साम्यवैषम्यविवे-चनमिषेण शक्त्युत्कर्षवर्णन एव कवेस्तात्पर्यमवसेयम् ॥ ३०० ॥

अथेदानीं क्रमवर्णनप्रसङ्गप्रसरेऽप्यक्रमस्यैव शक्तिस्वरूपत्वमिति निर्धार्यमाणः स्तुतिमुखेन शिवां प्रसादयति—

तत्तदर्थपुरुषो धृतक्रमः
प्रातिभस्फुरितदिव्यविग्रहः ।
अक्रमस्तव वरं पदं शिवे
योऽहमद्वयविमर्शलक्षणः ॥३०१॥

हे शिवे ! प्राणिहितायैव जगदात्मना स्फुरणशीले ! "अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः" इत्यभियुक्तोक्त्या तत्तदर्थाभिन्नो यः पुरुषः शिवः, कथंभूतः ? इत्याकाङ्क्षायामाह—धृतः स्वीकृतः क्रमः पर्यायक्रमेण स्फुरणं तदवगमप्रयत्नो येनेति कथनेन अक्रमेऽपि क्रमवत्त्वस्यानुस्यूतत्वं ज्ञाप्यते, अर्थस्य वस्त्वात्मकत्वात्तत्र क्रमस्य पूर्वापरीभावरूपस्पन्दनस्यावश्यप्राप्तत्वादिति भावः । पुनः कथंभूत इत्यपेक्षायामाह—प्रातिभेति । प्रतिभाया इदं प्रातिभम्, "तस्येदम्" इत्यण् । शाक्तं यत्स्फुरितं स्फुरणं दिव्यं लोकोत्तरं विग्रहो यस्मिन् सः । शाक्तस्फुरणलोकोत्तरशरीरः । स्वरूपे क्रमस्यानुपयोगात् शाक्ताकारस्याक्रमत्वमेव युक्तियुक्तमिति भावः । एवंभूतः पूर्वोक्तविशेषणद्वयविशिष्टो यस्तव अहमद्वयविमर्शलक्षणः, अहमिति ज्ञानप्रतिरूपकमव्ययम्, न त्वस्मच्छब्द निष्पन्नम्, तच्चाद्वयमखण्डं विमर्शनम्, विमर्शो लक्ष्यते ज्ञायतेऽनेनेति तथोक्तः । अक्रमः क्रमराहित्यं तद्धि वरं श्रेष्ठं पदं धाम । अक्रमवत्त्वं स्वरूपत औपाधिकक्रमवत्त्वं न दोषायेति भावः । शक्तेः शब्दस्वरूपत्वान्नाम्नि क्रमवत्त्वस्यानुपयोगेनार्थात्मकशिवे तद्योगसत्त्वेऽपि यामलभावस्वीकारे शिवे क्रमराहित्याभावे शाक्तक्रमस्य दिव्यत्वात्तस्यालक्षितत्वेनाक्रमरूपत्वमेव तव प्रातिस्विकं स्वरूपमिति कवेराग्रहः । वस्तुतस्तु विश्वविग्रहा शक्तिः क्रमवत्येव । स्वातन्त्र्यबलेन तत्र क्रमाक्रमसद्भावो न दोषायाऽपि तु भूषणायैव । पुरुषोऽधृत इति पदच्छेदे रुचिश्चेत्, तदा क्रमस्य शम्भौ सत्त्वेन शक्तौ चासत्त्वेन शक्तेरुत्कर्षः, शिवस्वरूपं शक्तेरपकृष्टमिति द्योतनाय प्रयत्नः श्लाघ्य एव ॥३०१॥

अथेदानीं ज्योतिःस्वरूपमकारमवलम्ब्य स्थितायाः शक्तेरपि तदात्मकत्वं निश्चिन्वन् मनःप्रशमनाय शक्तिध्यानं कर्तव्यत्वेनोपदिदिक्षन् मातुः प्रकर्षं वर्णयति—

लक्षणं तदनु सूक्ष्ममिष्यते
ज्योतिरात्मकमवर्णमास्थिता ।
स्थूलमेतदनुवर्ण्य लक्ष्यते
भाव्यते शमयितुं मनो मया ॥३०२॥

हे शिवे ! स्थूलसूक्ष्ममतीत्य प्रकाशतात्मिके ! सूक्ष्ममनु अनुसूक्ष्मम्, सूक्ष्मत्वाद्दं यत्तल्लक्षणं विद्वद्भिरिष्यते । इतरव्यावर्तनपूर्वकम् अव्याप्त्यतिव्याप्त्यसंभवदोषमुक्तं सल्लक्ष्यमात्रगामि लक्षणमुच्यते । फलितार्थकथनमेवात्र संकेतितमनुसूक्ष्ममिति । ज्योतिरात्मा यस्य तज्ज्योतिरात्मकं प्रकाशात्मकमवर्णमास्थिता त्वं लक्षणलक्षणातीता,

यतो हि स्वस्वातन्त्र्यबलात् सर्वात्मिका न कस्याश्चिदितरव्यावृत्तेः पात्रम्। एतत्प्रपञ्च-जातं स्थूलम्, अनुवर्णनम्, वर्णयित्वा इति अनुवर्ण्य "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति सूत्रेण क्त्वो ल्यप्। वर्णनमभिलक्ष्य यथावर्णनमिति यावत्, लक्ष्यते ज्ञायते व्यवहारक्रमे-णानुभूयत इति यावत्। लक्षणानुवर्णनयोः कतरेण त्वया व्यवह्रियते? इत्याह—भाव्यत इत्यादि। मया मनः शमयितुं भवती शक्तिर्भाव्यते ध्यायते चिन्त्यते वा। भाव्यत इति पाठे भाव्यतः कस्यचित्पुरुषस्य मनःप्रशमाय मया मा लक्ष्मीः, प्रकरणा-दत्र कालीशक्तिस्तया शक्त्या मार्गदर्शनेन स्वयं प्रयत्यत इत्यर्थः। मनःशब्दान्मयट्-प्रत्यये टित्त्वान् ङीपि मनोमयीति पाठस्वीकारे मया स्वमनःशमयितुं मनोमयी शक्ति-रेव भाव्यते। ज्ञानस्य त्रिविधत्वात् श्रुतं ज्ञानं वैदिकम्, चिन्तामयं वेदान्तादिदर्शनोपयु-क्तम्, अत्र तु केवलं भावनामयस्यैव प्रयोगः। भावना चाभूततद्भावभाविनी न केवलं भूतभाविनोर्विषये प्रवर्तते, अपि तु भावनयाऽतदर्हस्यापि तदर्हता संपाद्यते। अभूतमपि भावनया भाव्यते, अकल्पितमपि कल्प्यते इति भावनाया वैशिष्टयम्। अतः सर्वविधो-पप्लवप्रशमाय मनोमयी भवती एव मया भाव्यते, तेन सर्ववैषम्योपशम इत्यलम् ॥३०२॥

अथेदानीं तीव्रशक्तिपातेन पौरुषमले विध्वस्तेऽणुः पञ्चकञ्चुकनिवृत्तः सिद्धत्वं लभते। शक्त्यनुग्रहलाभेन निर्मुक्ताङ्कुशोऽसौ शक्तिं स्मरतीत्येतमागमसम्मतमर्थं साधकजनप्रवृत्तये निर्ब्रुवन् मातरं स्तौति—

> तत्र शान्तवति पौरुषे मले
> व्योमवद्गतमवेद्या त्वया।
> सिद्धकार्यकरणं निरङ्कुशं
> चिन्मरीचिविसरेण मङ्गले ॥३०३॥

हे मङ्गले! आनन्दात्मिके! तत्र त्रिविधेषु मलेषु आणव-मायीय-कार्माख्येषु पुरुषाज्जातं पौरुषं तस्मिन् मले शान्तवति विगते, प्रशान्त इति यावत्। तीव्रमध्यमन्दभेदेन शक्तिपातस्य त्रैविध्ये तत्र एभिरेव पुनस्त्रिगुणने नवधात्वं संजायते। तत्र तीव्र-तीव्रशक्तिपातेन गुरुकृपयाऽऽणवमलनिरासेऽवशिष्टयोर्द्व-योर्मायीयकार्मयोः स्वत एव निरासे पञ्चकञ्चुकनिरासे सर्वकर्तृत्वादिपञ्च-शक्तिनिर्भरोऽणुर्व्यापकत्वं लभते। तदेवाह—निरस्ताणवमलस्य साधकस्य वेदनं-वेदः, न वेदोऽवेदस्तयाऽज्ञेयया त्वया शक्त्या व्योमवद् नभोवद् व्यापकत्वं गतं प्राप्तम्। शक्त्यनुग्रहसंजाताणवमलध्वस्तस्य साधकस्य हृदि शक्तेरेव शश्वन्निवासेन शाक्त-धर्मेण व्यापकत्वादिना युक्तः पशुर्जीवोऽपि शाक्तीं स्थितिं लब्ध्वा तद्धर्मवान् समुप-जायते। लब्धे शाक्तानुग्रहे किं किं फलम्? इत्यत आह—चितो मरीचयस्तासां विसरेण प्रसरेण, विस्तरेणेति यावत्। का स्थितिस्तदानीम्? इत्याह—सिद्धेति। सिद्धवत् प्राप्तै-श्वर्ययोगिवत् कार्यस्य करणं निष्पादनम् कथंभूतमिति चेत्तदाह—निरङ्कुशं निष्प्रति-बद्धं प्रतिबन्धहीनमिति यावत्, लभत इति शेषः। प्राप्तशाक्तावेशः पशुः कञ्चुक-

प्रहाणेन शिववत् शक्तिवद् वा पञ्चकृत्यकारित्वचिदानन्देत्यादिशक्तिमत्त्वसर्वकर्तृत्वादिधर्मयुतश्च "तद्वत् पञ्चकृत्यानि करोति" इति प्रत्यभिज्ञाहृदयोक्तनीत्या स्वाभाविकशिवत्वमनुभवन् परमं प्रसादं प्राप्नोतीति भावः। शैलूष इव तत्तदौपाधिकनामरूपादि धारयन्नपि परमार्थतः शिवत्वलाभयुक्तः प्रमोदत इत्याशयः ॥ ३०३ ॥

अथेदानीं शक्त्यनुग्रहलब्धतेजसा शाक्तक्रमवर्णनसामर्थ्यलाभानन्तरं साधकस्थितिं स्तुतिमुखेन प्रस्तौति—

**सोमपुत्रमपनीय मद्गत-**
**स्त्वत्क्रमोऽद्य किमपि स्तुतो मया।**
**ग्रस्तभीषणभवोऽयमम्बिके**
**त्वत्पदाम्बुजविमर्शतेजसा ॥३०४॥**

हे अम्बिके ! खेचर्यादिभूचर्यन्तशक्तिवृन्दाधीश्वरि ! सोमस्य प्रमेयजातस्य पुत्रं जन्यं विषयव्रातम् अपनीय मनसा अपसार्य, अथवा सोमस्य चन्द्रस्य पुत्रं बुधमपनीय तिरस्कृत्य, मनसोपेक्ष्य इति यावत्। अत्र बुध्यत इति बुधः "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः। बुधपदं सजातीयसकलबुधोपलक्षणम्। कल्प्यते ग्रन्थकारसमकालेऽपि तन्त्रागमवाङ्मयस्याज्ञानविजृम्भिताः केचन मत्सरिणो विपश्चित आसन्, ये एतच्छास्त्रं हेयत्वेनोपेक्षमाणाः पुरोभागित्वमेव स्वात्मनः प्रकटयामासुः। तानतिरस्कृत्य कथमपि क्रमदर्शनगुम्फितमिदं स्तोत्रलेखनं शक्यक्रियं नासीत्। अथवा उमया सहितः सोमः शिवस्तत्पुत्रं गणेशम्, लोके वेदे च गणेशो बुद्धिविद्यादीनामधीश इति प्रथितः। गणेशः सर्वबुद्धिमत्सहितबुद्धेरुपपलक्षणम्, तमपनीयेति कथनं स्वात्माहङ्कारप्रयुक्तमात्सर्यपरिहाराय, मम पार्श्वे बुद्धिलेशाभावेऽपि कालीशक्तेः केवलं भक्तिरेवोपकरणम्। एवंभूतबुद्ध्या मद्गतो मह्यं प्राप्तो यो बोधपदवाच्योऽभिनिवेशः। बुद्धिरहिता अपि बुद्ध्यभिनिवेशेन बुद्धिमतोऽनुकुर्वन्ति हास्यास्पदतां च प्राप्नुवन्ति। तथाभूतोऽहं यथाकथञ्चिदुपात्तकविकर्मकौशल इति यावत्। एतेन कवेर्निरहङ्कारत्वख्यापनसौजन्यं विनीतत्वं च द्योत्यते। तव शक्तेः क्रमः, क्रमदर्शनस्वरूपमिति यावत्, अद्य किमपि किञ्चिन्मात्रं मया कालिदासेन क्रमः स्तुतः, क्रमपदार्थः स्तुतिमुखेन चर्चितः, समादरभावेन ग्रन्थरूपेण ग्रथितश्च। अपरोऽपि कश्चिद् विघ्नस्तवोत वा केवलं बुद्धिदौर्बल्यमेव ? तत आह—ग्रस्तेत्यादि। भीषणश्चासौ भवः पुनस्तथोक्तः, ग्रस्तो बलान्निगृह्य मामधिकृत्य स्थितश्चासौ भीषणभव इति तथा। यद्येवं किमर्थं प्रयतसे ? इत्याह—त्वत्पदाम्बुजयोर्विमर्शो निरतिशयश्रद्धाभावस्तेनोत्पन्नं यत्तेजस्तेन भवच्चरणकमलसेवनलब्धप्रकाशेनैवायमहं स्तुतिकर्मणि प्रववृते। कीदृक् चैतत् किञ्च नैपुण्यमधिगतमित्यत्र तु निर्मत्सरा विद्वांस एव प्रमाणमिति क्रमस्तुतौ कियत्साफल्यमधिगतमिति वक्तुमप्रभुत्ववतापि करालजागतिकपाशजालेनाधिकृतेन मया यत्किञ्चित् स्तुतं तत्र निर्मत्सरान् विदुषोऽधिकृत्य विरम्यते ॥ ३०४ ॥

अथेदानीं प्रेरणास्रोतसं निर्दिशन् स्वरचनां च देव्यै समर्पयन् स्वानुग्राह्यतां च निवेदयन् वर्णयति—

**मुक्तमेव न मया मयोचितः**
**प्रेरितोऽस्मि तव तर्तिनी तया ।**
**सिद्धनाथकृतत्वत्क्रमस्तुतेः**
**कालिदासरचितां च पञ्चिकाम् ॥३०५॥**

मा माया तया उचितो ग्रस्तो मयाऽथापि न मुक्तमेव न दुःखदावानलज्वाला-निर्मुक्तमेव । कथं तव प्रवृत्तिरत्र ? इत्याह—सिद्धनाथेन कृता, विनिर्मिता, ग्रथितेति यावत् या तव सम्बन्धिनी क्रमस्तुतिः, तस्याः सकाशादेव तव स्तोत्रे प्रेरितोऽस्मि । कालिदासेन मया रचितां ग्रथितां पञ्चिकां पुस्तिकां च कृपया गृहाण स्वीकुरु ।

अत्र पद्ये तर्तिनीपदस्यार्थो न सम्यगन्वेति, नवार्थ एव स्फुटीभवति, शब्दस्या-प्रयुक्तत्वात् । काव्यकोषादिष्वपि न प्रयुक्त इति कृत्वा पद्यार्थप्रसङ्गेऽसंबद्धतया त्यज्यते । मयामयाचित, इति पाठस्वीकारे आमयेन आचितो व्याप्तोऽपि मया मायया तव दुरत्यय-मायया न सर्वथा मुक्तम् । तर्हि किमर्थं कष्टं सहसे ? इत्याह—सिद्धनाथेति । पूर्वोक्त एवार्थः । पुस्तिकां स्वरचितां भवत्सेवायां समर्पयामि, स्वीकृत्याऽनुगृह्णातु भवतीति प्रार्थये ॥ ३०५ ॥

इदानीं क्रमज्ञानवत एव जीवनं सफलमिति वर्णयति—

**यद्विनिश्चयपदं च ते स्तवं**
**योऽम्ब वेद कुरु तन्मुखं जगत् ।**
**कालिदासपदवीं तवाश्रितः**
**त्वत्प्रसादकृतवाग्विजृम्भणः ॥३०६॥**

हे अम्ब ! यः साधकस्ते तव स्तवं चिद्गगनचन्द्रिकाख्यम्, कथंभूतं तत् ? इत्याह-यदिति । यस्य क्रमाख्यस्य विनिश्चयस्य निर्णयस्य पदं स्थानं च तद् इति वेद जानाति, तस्य मुखं तन्मुखं तत्प्रधानं जगद् कुरु । क्रमदर्शनज्ञानवतामेव जगति प्रभुत्वमैश्वर्यं च यथा भवेत्तादृशं प्रबन्धं कुरु विधेहि । मया क्रममधिकृत्यैतत्स्तोत्रं लिखितमिति हेतोर्मम यशोवृद्धिं कुरु प्रतिष्ठां संवर्द्धय । कुतस्त्वयि क्रमस्तुतिसामर्थ्यमागतम् ? तदाह—तव प्रसादेन कृतं समुत्पन्नं वाचो विजृम्भणं वृद्धिर्यस्य मम 'कालिदास' इति पदवीं गृह्णानस्तव शरणमाश्रितोऽस्मि । मामनुगृह्य स्तोत्रप्रयुक्तयशोवृद्ध्या सह गुणप्रकर्ष-जनानुरागमूलकसमृद्ध्यादिप्रदानपूर्वकं त्वच्चरणानुरागं मयि यथा स्यात्तथा दयाभावं विधेहीति प्रार्थये । एतेन स्फुटं यदस्य कवेः प्रातिस्विकं नाम किमप्यन्यदेवासीत् काल्या दासः कालिदास इति तु तस्य पदवी गुणप्रकर्षलब्धेति । अन्यदप्येकं निगूढं

रहस्यमत्रोद्घाटितं यद्देवतासमाराधनमन्तरा काव्यस्तोत्रादिप्रणयनसामर्थ्यं न लभ्येतेति। कविकर्मणा प्रतिष्ठावृद्धिरल्पेन यत्नेन कालेन चाप्यत इति ॥ ३०६ ॥

अथेदानीं तन्त्रागमदर्शनसर्वस्वमहन्तारूपं पूर्णपीठज्ञानं मोहनाशाय परममपेक्षितमिति रहस्यमुद्घाटयन् भगवत्या महत्त्वमेव सर्वतो दिशं पोस्फुरीतीति वर्णयति—

त्वद्गुणान् यदहमस्तु वै जगत्
तेन मोहमतिरद्य मुच्यताम्।
पूर्णपीठमवगम्य मङ्गले
त्वत्प्रसादनकृते मया कृतः ॥३०७॥

हे मङ्गले ! सर्वमङ्गलमङ्गल्ये ! तव गुणान् कीर्तयतो मम यद् अहमः अहन्तायाः पूर्णाहन्ताया ज्ञानमभवत्। तुरत्रावधारणे, वै निश्चयेन, जगदेव निश्चयेनाहमो रूपम्। एवं स्थिते पूर्णाहन्ताया जगतोऽभेद एव सिद्धः। तेन जगदहन्तयोरैक्येन अद्यास्मिन् क्षणे मम मोहस्य अज्ञानस्य मतिर्मुच्यतां दूरेऽपसार्यताम्, त्यज्यतामिति यावत्। जगदहन्तयोर्भेदे कदाचिज्जगदुन्मुखत्वे पूर्णाहन्तारूपस्वात्मज्ञानवैमुख्यमापतेत्, अभेदे तु वैमुख्यसामुख्ययोः प्रश्न एवापसृत इति साम्प्रतमज्ञानस्य सार्वकालिको नाश एव संजात इति हर्षास्पदम्। अनेनैक्यज्ञानसंपत्त्या कस्तव लाभः? इत्याह—पूर्णपीठं पूर्णाहन्तात्मकं स्वात्मवैभवं सम्यगवगम्य ज्ञात्वाऽनन्तरं मया त्वत्प्रसादनकृते तव प्रसन्नतायै एष चिद्गगनचन्द्रिकास्तवः कृतो मनसि चिन्तयित्वा ध्यात्वा ततः सर्वजनोपकाराय ग्रन्थरूपेण लिखित्वा प्रकटीकृतः। स्वीयज्ञानानन्तरनेव परोपकारचिन्तया प्रयतेत, अन्यथा स्वयं नष्टः परान्नाशयतीति लौकिकाभाणकपात्रत्वमापद्येतेतिभावः ॥ ३०७ ॥

इदानीं ग्रन्थस्य फलश्रुतिं युग्मेन प्रतिजानीते—

एष चिद्गगनचन्द्रिकास्तवः
किन्तु वाञ्छितमसूत मां प्रति।
यः पठेज्जपति देवि ! ते स्तुतिं
योऽर्थमत्र विवृणोति वेत्ति यः ॥३०८॥

योऽनुगात्यभिनयत्यभीप्सितां
तच्च तस्य कुरु सिद्धिमीश्वरि।
कालवर्षिणि शतैस्त्रिभिः स्तुतिं
तावकीमिह नवोत्तरैः कृताम् ॥३०९॥

हे देवि ! दिव्यदर्शनप्रसूः ! एष चिद्गगनस्य चिदाकाशस्य चन्द्रिका दिव्यः प्रकाशः, तस्याः स्तवो गुणप्रभावादिस्तुतिः, मां प्रति मह्यम्, किन्तु लोकोत्तरमात्मानन्दरूपं फलं वाञ्छितं नासूत, अपि तु स्वाभीष्टप्रदानपुरःसरं सर्वेष्टसिद्धिकरोऽयमिति यावत्। यः कोऽपि साधकः पाठको जापकश्च ते तवेमां स्तुतिं साधयेत् पठेज्जपेद्वा । स सर्वोऽपि स्वाभीष्टं प्राप्नुयादिति शेषः । यः साधकोऽस्याः स्तुतेरर्थं विवृणोति विस्तरेण व्याख्याति, यश्च वेत्ति जानाति, ज्ञानमर्जयति वा स सर्वोऽपि वाञ्छितमनोरथं प्राप्य लोकोभये सुखं शान्तिं सद्गतिं च प्राप्नुयादिति ॥ ३०८ ॥

हे ईश्वरि ! ऐश्वर्यदायिनि देवते ! यः साधकः अनुगाति गीतस्यास्यानुगानं करोति, यश्चाभिनयति शब्दार्थभावनादिभिश्चानुकरोति, तस्याभीप्सितां सिद्धिं कुरु । हे कालवर्षिणि ! "वृष शक्तिवन्धने" चुरादे रूपम्, कालशक्तिप्रतिबन्धिके ! नवोत्तरैः शतैस्त्रिभिः पद्यैस्तावकीं स्तुतिं कृतामिह स्तोत्रे सावधानमनसा यः कश्चिदुक्तक्रमेणानुपालनं कुर्यात् तस्य सर्वस्य मनोरथः सिद्ध्यत्येव । 'गाङ् गतौ' इति भौवादिको धातुरात्मनेपदीयो यद्यपि, तथापि ङिल्लक्षणमात्मनेपदमनित्यमिति कृत्वा परस्मैपदप्रयोगः साधुरेव, बहुलमेतन्निदर्शनमित्युक्त्या तत्तद्गणपठितधातुपाठस्य विसंवादितयाऽऽत्मनेपदपरस्मैपदादीनामर्थानां च नियमस्य बहुलतया विभेददर्शनात्, प्रयोगभेददर्शनाच्च । नवोत्तरशतत्रयपद्यैरेष स्तवः समाप्तिमगादिति परिगणनं कवेः प्रौढत्वद्योतनपूर्वकमत्रान्यकृतसंमिश्रणादिदोषोपनिपातपरिहाराय बोद्धव्यम् ॥ ३०९ ॥

अथेदानीं स्तवस्यास्य प्रतिदिनं पाठेन सुखं कालयापनपूर्वकं ध्यानस्मरणाभ्यां शिवत्वलाभ इति प्रतिजानीते—

**त्रैष्टुभैरहरहः परामृशन्**
**कालचक्रमतियन् प्रसीदति ।**
**कर्तुमिच्छति शिवं शिवे नृणां**
**ज्ञायते तद् विचार्य या त्वया ॥३१०॥**

हे शिवे ! शिवत्वप्रापिके ! त्रिष्टुभ इदं त्रैष्टुभं तैरेतन्नामकच्छन्दोभिरेकादशाक्षरैः, अहरहः प्रतिदिनम्, परामृशतीति परामृशन् साधकः कालचक्रं समयप्रवाहमत्येतीत्यतियन्, इणः शतरि रूपम्, अतिक्राम्यन्, यापयन्नित्यर्थः । प्रसीदति परं प्रसादं प्राप्नोत्यनुभवति च । या भवती नृणां शिवं कर्तुमिच्छति तत् त्वया विचार्य ध्यात्वा ज्ञायते । स्मर्यते 'अविचार्य' इति पाठे या भवती शिवं चिकीर्षति, तस्य विमुखत्वमापन्नस्य विचारमकृत्वाऽपि त्वया शरणागतः साधको जनः स्नेहेन स्मर्यत एवेति भवत्या औदार्यम् । कालयापनस्यानिवार्यत्वे स्तवमधीयानस्य सुखेन भवतीति स्तवस्तुतिः । कृतेऽकृते वा परमेश्वरी तु जीवं स्मरिष्यत्येवेति देव्याः स्तुतिः ॥ ३१० ॥

अथेदानीं कलनस्य स्मारणपूर्वकं तत्र द्वयोरेव प्रसङ्गेन स्मरणेनेष्टसिद्धिं ब्रुवता ग्रन्थकृता येन हेतुना कर्मणा वा भगवतः शिवस्य भक्तिसमावेशः स्यात्तथा कृपां कर्तुं मातरं स्तौति—

**क्षेपधीस्तवन (?) गौरि तत्कृता**
**विश्वराशि(?ज्ञि) कुरु सर्वमीप्सितम्।**
**केवलं मम पुनस्तदीप्सितं**
**सर्वतस्तव मदीक्षणं शिवे ॥**
**येन खेलनसरोहणार्णवः**
**शश्वदाविशति येन मां शिवः ॥३११॥**

हे गौरि ! पीतवर्णे ! उपक्रमोपसंहाराभ्यामेकार्थस्य मध्यपात्युपपत्त्या पोषणमेव कस्यापि काव्यनिबन्धस्तुत्यात्मकस्य पद्यगद्यात्मकप्रबन्धस्य शोभनपरिणतिराख्यायते। क्रमदर्शनस्योपक्रमेणान्तःसद्युक्तिनिरूपणप्रबन्धेनान्ते पुनः कलनात्मकक्रमस्मरणपूर्वकं समाप्तिमारचयता ग्रन्थकर्त्रा पञ्चधा ख्यातस्य कलनव्यापारस्य पदार्थद्वितयेनैव परिपूर्तिः क्रियते—क्षेपधीत्यादिना। "क्षेपो ज्ञानं च संख्यानं गतिर्नाद इति क्रमात्" इति क्रमापरपर्यायः कलनव्यापारो निरूपितः। अकुलस्य शिवस्य कुलरूपा शक्तिर्विश्वावभासनक्रमे स्वभित्तौ स्थितस्य विश्वस्य स्वातन्त्र्येच्छया यदिदं बहिरुल्लासनं तदेव क्षेपो नाम। बहिरुल्लासितस्य तस्य स्वाभेदेन परामर्शनद्वारा पोषणरक्षणादिना स्वाङ्गतया ज्ञानं ज्ञानमित्ययं द्वितीयो भेदः। आभ्यामेव क्षेपधीनामकाभ्यां व्यापाराभ्यां जागतिकव्यवहारो निष्पद्यते। संख्यानगतिनादास्तु संसारस्थित्युत्तरकालिक्यः क्रियास्तदर्थमेव जीवनमिति दर्शनक्रमः। एतत्सर्वं मनसिकृत्य ग्रन्थकर्तुः प्रयासः। अथ कारिकार्थः—अत्र पद्ये प्रथमचरणे कश्चन व्यत्यासो बुद्धिपूर्वक एव ग्रन्थकृत्कृतो लक्ष्यते, "तं पातयां प्रथममास" "प्रभ्रंशयां यो नहुषं चकार" इति कविकुलशिरोमणिना कालिदासेन कृतं प्रयोगमनुहरताऽनेन कविनाऽपि तथैव कृत इति निरङ्कुशत्वप्रयुक्तकविकुलप्रयासः प्रसिद्धः। क्षेपधियोः स्तवनं तत्कृता इति पाठे व्यतिक्रमनिवारणाय कृतमिति पाठस्वीकारोऽन्वयार्थमपेक्षितः। तत्कृतमित्यस्य स्थाने मत्कृतमित्यर्थं संयोज्य मत्कृतमिदं स्तवनं हृदयेनाङ्गीकृत्य, अथवा तत्कृतेति पदेन कविरात्मनो निरहङ्कारत्वं द्योतयति—नेयं कृतिर्मत्कृताऽपि तु साक्षाद्देव्या एवेति वा। हे शिवे ! हे विश्वराज्ञि ! राशिपदं लेखकप्रमादजन्यमत्र राज्ञीति प्रतिभाति, तत्संबोधने हे विश्वराज्ञि ! विश्वोत्पादनसंरक्षणविनाशदक्षे ! प्राणिनां भक्तानां साधकानां सर्वमीप्सितं निखिलाभीष्टं कुरु देहि। मम तु पुनः केवलं तदेवेप्सितं यत्सर्वतः सर्वप्रकारेण तव ममईक्षणं मदीक्षणं मद्रक्षणं यथा स्यात्तथा कुर्वित्यर्थः। ईक्षण इति पाठो न युक्तोऽपि तु ईक्षणमिति क्रियाविशेषणत्वाद् द्वितीयान्तमुचितम्। ननु किं तवेप्सितं यदर्थं देवीकर्तृकं रक्षणं प्रार्थयसे ? तदाह—येनेति। येन सतर्कतामूलकेन खेलनसरोहणार्णवचिक्रीडिषयैव पूर्णकामस्यात्मारामस्य

शिवस्य सृष्टिप्रयास इति सर्ववादिसम्मतम् । रोहणेन सह सरोहणं खेलनसरोहणयोर्णवः समुद्रः शिवो मां शश्वन्निरन्तरमाविशति समाविशेत् । मम सदैव शिवसमावेशो यथोत्पद्येत तथा कुरु, इति प्रार्थनसर्वस्वम् । विश्वसृष्टिकर्म निष्कलनिष्कामयोः शिवशक्त्योः स्वैच्छिकमेवेत्यत्र रोहणप्रत्यवरोहणादिषु स्खलनादिकष्टव्रातसत्त्वेऽपि शुद्धकरुणात्मिकैव प्रवृत्तिः, महता सतर्कताप्रवणेनापि जीवनोच्चावचकार्यकलापे प्रवृत्त्यभावस्यैव निर्णेयत्वात् । एतेन ग्रन्थकृतः शिवशक्त्योर्निरतिशयं भक्तिः स्तुतिश्च सूच्येते ॥३११॥

अथेदानीं सर्वजनहितायैवेदं स्तोत्रं श्रीवत्स इत्युपनामकेन कविकालिदासेन कृतमिति संसूचयन् निवेदयति—

**पूर्णपीठकृतं सिद्धेस्तद्भावस्तवमादरात् ।**
**वा नरार्थं महागुह्यं श्रीवत्सो विदधे स तु ॥३१२॥**

**इति श्रीकालीदासमहाकविविरचिता चिद्गगनचन्द्रिका सम्पूर्णा ॥**

स कालिदासेतिपदवीकः ३०६ पद्ये "कालिदासपदवीं तवाश्रितः" इत्यत्र स्फुटमुल्लेखात् । तुरत्र अवधारणार्थकः । स एव पूर्वचर्चितः श्रीवत्सः । एतदेवास्य स्तोत्रस्य कवेर्मुख्यं नाम प्रतीयते। गोत्रावल्यां कुत्राप्युपलब्धप्रतिषु श्रीवत्स इति गोत्रनाम न प्रसिद्धम् । महागुह्यमतिगोपनीयमिदं क्रमस्तोत्रं सिद्धेः कृते । कस्यै सिद्ध्यै ? इत्याह—पूर्णेति । पूर्णपीठाय कृतं पूर्णाहन्तात्मकस्वात्मशिवत्वलाभाय विहितं तद्भावस्तवं कालीभावनासमावेशेन पूर्णं स्तवं नराणां जनानां "लोकस्तु भुवने जने" इत्यमरः, सर्वलोकानां हिताय आदरात् श्रद्धाभक्तिभावनया विदधे जग्रन्थ, कृतवानिति यावत् । पीठशब्दार्थः प्राङ्निरूपितः २९५ पद्यार्थनिरूपणे तत एवावगन्तव्यः । शरीरमपि पीठशब्देनात्र क्रमदर्शनापरपर्यायिकुलदर्शने महता कण्ठेन तत्र तत्र तन्त्रेषु निरूपितप्रायम् । मन्त्रपीठकुलपीठादयोऽपि महानयप्रकाशस्य टीकायां शितिकण्ठकृतायामूहापोहक्रमेण निरूपिताः । अत्र पूर्णपीठशब्देन मुख्यवर्ण्यविषयकतत्त्वस्यैव शिवशक्त्यन्यतरस्य ग्रहणमुचितं प्रतिभाति, प्रकृतप्रकरणानुरोधात् । सिद्धेरिति पदं यदि शक्तिपरं स्वीक्रियेत, तर्हि शक्तेस्तद्भावः शाक्तो भाव एव तस्य स्तवस्तमित्यर्थो ग्राह्यः। वाशब्दो नरहिताय स्वहिताय इत्युभयार्थकः । नरार्थमित्यस्य स्थाने परार्थमिति कल्पनेऽप्यर्थस्य न भेदः । नरार्थं स्तवोऽयं प्रकटीकृतः । शक्तितत्त्वं तु महागुह्यं वस्तुगत्या प्रकटनार्हं नेत्यर्थबोधनाय वाशब्द इति केचित् ॥३१२॥

इति श्रीरघुनाथमिश्रकृतार्थप्रकाशिका टीका समाप्ता ॥
समाप्तश्चायं सटीकश्चिद्गगनचन्द्रिकाग्रन्थः ॥

■

## प्रशस्तिपद्यानि

तन्त्रे सूर्य इवैव बोधकिरणैरज्ञाननाशेऽग्रणी-
र्लोकालोककलाकदम्बविभवैर्देदीप्यमानो मणिः
शश्वच्छान्तिसुधासमुद्रलहरी दोलायते यद्धृदि
गोपीनाथबुधं नमामि विबुधं सारस्वतं तन्महः ॥ १ ॥

मीमांसा सहसा सुधेव धवला येभ्यः प्रदत्ते निधिं
वेदान्तामरतत्त्वबोधविभवो ब्रह्मेव बोधाकरः ।
तर्कागाधपयोधिलोललहरी लीलायते यद्धृदि
शुक्लोपाह्वविभूतिभव्यबदरीनाथान् सदा तान् नुमः ॥ २ ॥

वेदाङ्गानि विभान्ति यत्र विमले विद्यागुरौ मार्गदे
मन्ये श्रीरघुनाथशर्मविबुधे साङ्गानि रत्नाम्बुधौ ।
स्तुत्या कीर्तिलता सुधेव भुवने यस्यामरा भासते
पूज्यं तं सततं स्मरामि सुखदं विद्याकरं शङ्करम् ॥ ३ ॥

योगे तन्त्रभरे विभागकमले बाभाति विज्ञो वरः
प्रख्यातो व्रजवल्लभोऽत्र धवले विद्यानिकेतेऽधुना ।
यस्यासीमदयैव हेतुरपरो नाभाति मे मानसे
टीकाकर्मसहायिका नवनवा तं भावये प्रेरकम् ॥ ४ ॥

मानी श्रीशिवपूजनो मम पिता माता रमा मोहदा
यत्पार्श्वे प्रबलं मनोबलकुलं सम्प्राप्य कृत्वाऽधुना ।
टीकां चिद्गगने नवां नवबलामर्थप्रकाशे परां
वैदुष्याञ्चितचिद्भरां मतिमतां याचे दयां बोधदाम् ॥ ५ ॥

श्रीरुक्मिणीकस्त्रकरं सहायं
सम्प्राप्य निर्विघ्नमिहास्मि लोके ।
प्रख्यातसीवान इति प्रदेशे
वासो मदीयः सरयां-सुभूमौ ॥ ६ ॥

तन्त्रागमे श्रीरघुनाथमिश्रो
भूरिश्रमो यस्य विभागतन्त्रे ।
अर्थप्रकाशां विमलां च टीकां
कत्रां स तेनेऽर्थप्रकाशिकाख्याम् ॥ ७ ॥

का पञ्चमी याऽर्थप्रकाशिकायाः
साफल्यसिद्धावुपकारिकैव ।
नागानना संशयनाशकारी
मोहापहन्त्री कृतिभारहारी ॥ ८ ॥

सदा लोकालोको दलयति दलं गाढतमसां
भृशं ज्वालालीलो दरयति दरं वेपथुमताम् ।
मरुद्धीरा धारा दहति विपुलामुष्मलहरीं
तवैवैका दृष्टिः सकलमिह मातः शमयति ॥

॥ शुभं कुलक्रमं कुर्यात् ॥

★

# श्लोकार्धानुक्रमणी


अक्रमक्रमविमर्शं १५
अक्रमस्तव वरं पद शिवे २०७
अक्रमं शिवमवेक्ष्य १५
अक्रमः क्रममयस्त्वदाश्रयात् ८८
अक्रमः स खलु काल ईश्वरे १४६
अक्षचक्रनिवहोऽर्कसंख्यया ९७
अक्षचक्रमनुजग्मुषी २८
अक्षमूलपशुभेदविग्रहा १४३
अक्षयं शिवमुपास्य ४६
अक्षरेऽम्ब परमे वियदृचो १३६
अक्षिमात्रविसरच्छिखं १४५
अग्निमूर्तिरिह सृज्यते १६३
अञ्जनेन रुचिमिश्रणे समे १९०
अद्वयाद्विषयचित्रथा ५४
अध्वभिर्ध्वंनिविमिश्रणक्रम २०१
अन्तरम्ब करणत्रये च या १६९
अन्तरम्ब बहिरप्यमी कराः ७०
अन्तरालगमभाव ९
अन्तराहितषडध्वमण्डपैः ११२
अन्तरेव महमास्थितः ४०
अन्त्यमीशमसि तं त्रिधामकं ४९
अम्ब कार्यकरणे नियच्छतः १५९
अम्ब तज्जडमुशन्ति भेदिभिः ३४
अम्ब तत्र कलना पृथक्क्रिया १००
अम्ब धामकरणप्रयत्नजो २५
अम्ब न त्वदनुभूतिदायिनी १९५
अम्ब नन्दति समन्ततः शिवे १८६
अम्ब यद् भवति तत् ९
अम्बरस्य परमागता ६४
अम्बरेश्वरि निराकृतेस्तव १९४
अम्ब शक्तिवपुषा त्वयोन्मिष ४७
अर्थपञ्चकमयाश्च वेदका १५६
अर्थपञ्चकमलं ग्रसन्त्यसौ ६७
अर्थपञ्चकमसौ त्वमुन्मनी १५४
अर्थपञ्चकमिदं त्वया जगत् १६१
अर्थपञ्चकसुधाप्रपूरिते १७५
अर्पणेन जगतश्चिदम्बरे ३९
अव्ययस्तव नवार्णविग्रहे २००
अष्टधा स्फुरति या पुरी ३९
अष्टपुर्युदितबीजवासना ७२
अष्टयोनिदलपत्रपूरुषं २०३
अस्ति तद्यदि धृतं जलस्थले १३३
अस्ति बाह्यमिति तत्प्रथेत १२३
अस्वराख्यपरमाम्बरात्मिका ६९
अस्वराग्रिमविकास ६८
अस्वरोल्लसनबीजमग्रिमो ८६
आत्मभावमखिलस्य १५५
आदितः क्रममयीभिरम्ब ८८
आदिसर्गसमखण्डवर्जित ९८
आदिहान्तनिजदेहनिर्गताः ७५
आद्यचित्प्रसरमूर्तिरम्बिके ४६
आद्यस्पन्दस्वरूपः प्रथयति १
आननाग्रमिह चक्रभानुतो २०५
आन्तरं जननि बुद्धिदर्पणे ३३
आर्पयदनलसोममिश्रण १४२
आश्रितान्नयसि नापरं १७
आस्थितः सदसदर्थं ३८
आहतेतरदुरुत्तराश्रय २४
इत्थमम्ब तव वृत्तिपञ्चक १९८
इत्थमेकवपुषा त्वया ७७
इन्दुवह्निरविलक्षणाकुलं १८५
इन्दुशूलवृषटङ्कमातृका ६०
इष्टबोधकृतशक्तयस्त्वया ४४
इह कालिदासचन्द्र ३
ईदृगेतदिति चैव मा फलं १२३
ईदृगेतदिति तत् ७८
ईरणेन विवियेन वीरतां ४९
ईश्वरस्त्रिपथभक्ष्यधामगो ९२
ईश्वरस्य तव भर्तु १२
ईश्वरो जननि चिन्तितप्रदः १८७

उत्तरं च विषयोत्सवः १५१
उद्भवस्थितिलयात्मकं २१
उद्यमः प्रथम ऊर्मि २७
उद्यमप्रथनचर्बणात्मकं ७७
उन्मनीं स्मरति यस्तवाकृतिं ३१
उन्मिषत्यपि पुनस्तदुद्गमे १३९
उन्मिषन्निमिषदप्युत द्वयं १५०
उन्मिषन्निमिषदर्कबिम्बया १६३
ऊर्ध्वसोमरसपानदीपिता १५३
एकमम्ब तव भात्यनावृतो १०१
एतदम्ब सदिदं तु नेति नः १५७
एष चिद्गगनचन्द्रिकास्तवः २११
एष तान् प्रतिभवन् सुधामयो १७३
ऐकरस्यलसदक्षयप्रथं १७२
और्ध्वबाह्मयबिन्दु ४१
कर्तुमिच्छति शिवं शिवे नृणां २१२
कर्म यद् विविधवासना १६
कल्पनातिगमतीन्द्रियं ९
कल्पनापि न मृषा फलं १३१
कल्पना यदि मृषेति भासिता १३३
कल्पनैक्यबहुभेदमद्वयं २०१
कालकर्षिणि वहन्ति योगिनः १८३
कालपालकमुखं शिवान्तकं १५७
काललक्षणकलाप्रदीप्तये १६६
कालवर्षिणि शतैस्त्रिभिः स्तुतिं २११
कालवह्न्यधिकृतौ शिवे यथा १९१
कालविग्रहविलासनं ८९
कालिदासपदवीं तवाश्रितः २१०
कुण्डहृत्स्वरचतुष्टये ९१
कुर्वती जननि सृष्टिचित्रतां १६३
कूर्मवृत्तिमनुकृत्य कूर्मतां ९२
केवलं जगति योनिरक्रमा ८८
केवलं तदनुवर्णनेऽप्युमे १८६
केवलं मम पुनस्तदीप्सितं २१३
क्रोधनी त्वमसि तज्जिहीर्षया ७१
क्षान्त आदि कलिताक्षचक्रगो ९५
क्षीरोदं पौर्णमासी शशधर १
क्षेत्रपालमनुपाधिकोल्लसत् ५२
क्षेपधी स्तवन ? गौरि तत्कृता २१३
क्षेपमम्ब वितनोति संख्यया १४६
क्षोभमम्ब ! तव तावदिष्टतो ६७
खण्डचक्र उदितोऽम्ब ते क्रमो ९५
खण्डसत्प्रसरगर्भया ८
खण्डितेतरसमस्तगर्भगो १९९
खानिलाग्निजलभूमिभासिनी ८१
खेचरी जठरनिष्ठितास्त्वया ७५
खेचरी प्रभृति यच्चतुष्टयं २९
खेचरी प्रभृतिरम्ब शाकिनी ५२
खेचरीमुखमरीचि ६
खे बहिर्घनवृते रुचिः १४७
ख्यातिरम्ब ! यदि याति १३२
गुप्तभाषितजगद्विजृम्भणा १४४
गृह्णती परममम्ब ६८
गृह्णती मयि निवेश्य चण्डिके १८२
गोचरी प्रभृति शून्यपश्चिमं ११८
ग्रन्थयोऽपि षडुमे यया ७२
ग्रन्थिपञ्चकविभेदिनी ८६
ग्रस्तकालतनुभानुमत्कला १४५
ग्रस्तभीषणभवोऽयमम्बिके २०९
ग्रस्यसंहृतिमुखेन दिक्चरी ५६
ग्राहकत्वमपि निश्चितग्रहे ३७
ग्राहकं ग्रससि तं श्रुतं १६९
ग्राहकांश्च वरदे मरीचयः १६८
ग्राह्यतद्ग्रहविधातृसंभ्रमो ९६
ग्राह्यमत्र पुरतो हरन्ति ते १६८
घोरता पुनरियं जिहीर्षया १९१
घोषवाडवशिखास्तदुत्तरं ५९
चञ्चला तटिदिवाक्रमं परा ९९
चाररावचरुभिर्विभेदितै ४५
चिच्चमत्करणनिर्भरः स ते ९७

चिच्चमत्करणरुढनिर्भरा ५५
चित्तदाकृतिनिराकृतिः ३४
चिद्गगनचन्द्रिकाब्धेः ३
चिद्विकल्पमयमन्तरुद्यमं १६०
चिन्मयीकृतमतोक्ष १६
चिन्मयं परमरूपलक्षणं १९२
चिल्लोचनेन सततम् ३
चेतसः कृतमदा स्वजृम्भया ६८
छन्दतो मम निराश्रये पदे ९३
जागरामुखचतुःपदाऽद्वयो ९०
जाड्यमम्ब जगतो निसर्गतो ३४
जृम्भमाणगुरुवक्त्रचित्पथो ५४
जृम्भितस्त्वदनुपाख्यदीपितो ५०
जृम्भितस्य हृदये स्वशङ्कया १५९
ज्ञप्तिमात्रमपनीतवासनं ७९
ज्ञानतः प्रभृति पञ्चमं शिवे ८४
ज्ञानदीधितिषु रौद्रदीधिते ७६
ज्ञानधाम्नि निखिलेशि ८३
ज्ञानमम्ब तव भेदितैः ७४
ज्ञानमम्ब समपूर्णचित्पयो ८०
ज्ञानमस्य शुचि कर्म १२
ज्योतिरम्ब हृदि विद्ययेक्षितं १२
ज्योतिषाम्ब ! शिखयापहन्यते १८०
तज्जपौष्टकृतचित्त ३९
तत्कलाधरतनुर्गुरु ४१
तत्क्षयाय बत कालकर्षिणी ९७
तत्तदर्थमयभोग्य ३९
तत्त्वमर्थपुरुषोधृतक्रमः २०७
तत्त्वमैश्वरमखण्डम ८
तत्पदं तव तुरीयमम्बिके ४४
तत्तथेति हि विमर्श उत्तरो १३२
तत्तदर्थदलशोभितं जहत् १७६
तत्तया सकलमीक्ष्यते १३७
तत्र ते य उदयः कुलेशि २२
तत्र ते सदसदर्थशून्यता १४६
तत्र देवि ! वियदग्निपार्श्वयोः ६३
तत्पदं झटिति नीतसन्ततिः ९८
तत्र पद्मरुचिवेद्यमण्डले १७६
तत्र यो निखिलकल्पितोऽर्णवः १४९
तत्रयोऽधरमहन्त ५
तत्र शान्तवति पौरुषे मले २०८
तत्स्थितिस्त्वमपि वर्णभेदिनी ७६
तद्द्वयोल्लसितमम्ब वर्तते ५२
तद् द्वयं च तव धाम्नि संभृतं ११६
तद् द्वयं च भजतां बहिः फलं १३५
तद्वशेन भजते परम्परां ४५
तद् द्विपञ्चकलवह्निविग्रहं ६८
तद्विमर्शतदुपाश्रितक्रम ८०
तद्विरूपममलं तनुक्रमो १००
तद्विलक्षणपदा त्वमम्बिके १४१
तन्न वेदयति चेदृचां फलं १३६
तन्न जगमुरुदधौ स्वयौक्तितो १३४
तन्नभः श्रयसि सर्वतः परं १७२
तन्मिथोपनिहिता निषीदसि १४०
तस्य गोपक उदग्रवैभवो ९१
तस्य देवि हर संभृतेर्वशात् १०३
तस्य षोडशकलाः कृतास्त्वया ४२
तातमम्ब तनयस्य शङ्करो १३४
तानि तानि वियतीव शोभने १९६
तावकं त्रिविधरूपवर्जितं १९२
तावकं पदमपाकृतक्रमं १०
तावकोद्यमपदेऽपि सर्वगो १९७
तावदद्वयविमर्शभिन्नता ३३
तावदेव दिवसक्षपोदयः ४२
ताश्च संस्मृतिमहालये परे १५६
तुर्यचित्पदमयुः प्रसारिताः ४४
तुर्यरश्मिगुणविक्रमैकभूः १७०
ते त्वमाविशसि याननारतं १९५
ते विदन्ति न तवाम्ब वैभवं १७९
त्वत्क्रमोपहतभानुमण्डलः १६७

त्वत्पदस्मृतिविधूतकल्मषं १८३
त्वत्पदे ग्लपितकल्पने १४३
त्वत्पदं हि विषयामृतासवैः ११७
त्वत्प्रथा त्वमसि विश्वघस्मरी १८७
त्वत्स्वरूपमकलङ्कितं तया १४
त्वद्गुणान्यदहमस्तु वैं जगत् २११
त्वद्भ्रुवा कुटिलया शिवे क्षणात् १६२
त्वद्विमर्शमकरन्दनिर्भरं १७६
त्वद्विमिश्रणमपि ह्यसुस्थितं १८९
त्वन्मुखं त्रिपथनेत्रि भात्मकं २३
त्वय्यमूर्झटिति संविदापगाः ८४
त्वं कुलाख्यशशिभानुपावके १८१
त्वं गुहानिखिलभावगूहनी १२७
त्वं च चिन्नभसि माययावृते १४७
त्वं चतुर्थपदवर्तिनी शिवे १९३
त्वं तुरीयतनुराहृतत्रिका १९३
त्वं तु जाड्यपरिपन्थिनी ३४
त्वं निरावरणयुक्तिमास्थितैः ११२
त्वं पतिश्च तव लिङ्गविग्रहो २०३
त्वं पदं त्रितयगर्भितोदयं १७२
त्वं नर्वाणमनुचक्रविग्रहा २०५
त्वं निरन्तरचिदम्बरात्मिका ८४
त्वं पराप्रभृतिवैखरान्तिमो ७३
त्वं प्रकाशयसि यं स सृज्यते ३१
त्वं बिभर्षि वपुरम्ब भात्मकं १८१
त्वं मलत्रयविलापिनी शिवे १७७
त्वं शिवादकुलतः समेयुषी २९
त्वं श्मशानमसि वीरहृद्गतं ५०
त्वं हि चित्तनुरतो न चित्तता ३२
त्वं हि रुद्रजकटाक्षवर्ति १३
त्रैष्टुभैरहरहः परामृशन् २१२
त्वष्टुरम्ब शिवबोधभास्वतः १७०
त्वां नयन्ति परमेशि ते मखा १९४
दर्शितक्रमविभागसंभ्रमं १४
दिक्चरी त्वमसि बिन्दुभास्करा ६७
दिक्चरी दशसु दिक्षु या १६९
दिव्यमोघमत उद्गिरन्त्यसौ ६३
दिव्ययोनिरिह स्वस्वरूपिणी ८९
दिव्यवाहविभवोदरस्थितो २००
दृक्क्रियात्म शशिभानुमध्यगं २०
दृक्शिवे ! विषयभानविग्रहा १३९
दृग् विधत्त इह विश्वमम्बिके १४०
दृष्टिरूपमिदमम्ब १४३
देवताक्रम उदेत्यनारतं १९९
देशकालकलना विशेषतो १०
देशकालमवभासि १३७
देवि ! कार्यकरणाह्वयं ७१
देवि तद्द्वयकलाविमिश्रणात् ४३
देवि ! तर्पणसुधाकलाश्रयं ५
देवि ! नैकविषयोद्यमस्फुटा ५६
देवि वर्ण इव भासि निष्क्रमा ६३
देवि ! संकलनबोधजीविता १३३
देवि ! सप्तदशवर्णभेदिता २०५
देव्यनावरणशम्भुसद्मगा ७३
देव्यभेदितकलाचतुष्टया ७६
द्रष्टृता जगति यत्प्रकाशने ३७
द्रष्टृदृश्यदृशिलक्षणं १३९
द्वादशक्रमपदत्रयोर्ध्वगा १७०
द्वादशक्रमपदं पदादिभिः २३
द्वादशात्मकविकालघस्मरी १४८
द्वादशाम्ब ! किरणात्मनो १२०
द्वादशैक्यतनुरक्रमक्रमो १०४
द्व्यष्टधामनिलया चितिः ७०
धर्मिवृत्तिकृतसिद्धनामकं ३०
धाम यद् भवति मुद्रया समं ८५
धूमलक्ष्म गुरु यच्च तच्च्युतं १२
न त्वमम्ब पुरुषश्च नाङ्गना १८७
न प्रवेदयति निष्प्रमाणकं १२३
न श्रुतिर्न च गिरो न चागमाः १९४
नाद इष्टतनुरस्य कारणं २६

नाद एष तव विश्ववैशिकः ८६
नादबिन्दुलिपिविग्रहा १९
नादसर्गनिहितस्ववैभवा ६६
नापि भर्तुरपि ते त्रिरूपता १८७
नित्यता त्वयि विभुत्वपूर्णते १९६
नित्यतुर्यमहिमाग्रसन्निभं ९३
निर्जनस्थितिलयप्रथात्मिके ५०
निर्णिकेतनतयाम्ब ६६
नित्यतादिगुणलक्षिते पदे १९५
नित्यभातरुचिविश्वघस्मरं ५०
निर्गमागममपोज्झितान्तरे १५२
निर्गताधममहार्थजृम्भितः ९६
निर्द्वयाद्वयगतिर्महाखगे ९०
निर्निकेतनपदा तनोष्यसौ ७०
निर्निकेतपदमेति ५३
निर्निकेतमहिमा निराकृति ९४
निर्निरुक्तिकमिदं जगत् ३५
निर्मलज्वलनशौचवज्जगत् ३५
निर्विकल्पपरमाम्बराश्रयाः ९९
निर्विबोध उपधानशब्दवत् १२३
निश्चितग्रहनिदेशवर्जितो ९५
निष्कलङ्कमनवेक्षितक्षयं १७८
निस्तरङ्गजलधिक्रमा ८९
निस्तरङ्गपरमाद्वयप्रथा ९४
निस्तरङ्गपरमाम्बरात्मग्राः ९८
निह्नुतोदितशतार्कदीधिति १८१
पञ्चचक्रतनुरेष जृम्भते ८२
पञ्चदिव्यकुलबीजविग्रहाः ८१
पञ्चधा प्रभृति वैभवं शिवे ८५
पञ्चधा वहसि शाश्वतोदया ५३
पञ्चमं झटिति पातुकक्रमा ८३
पञ्चवर्णमयपिण्डगामिनी ६३
पञ्चवाहगतशक्तिलक्षणैः १८२
पञ्चवाहमयशक्तिगर्भिणी ८४
पञ्चवृत्तितनुरम्ब २९
पञ्चसु क्रममहीरुहः ८२
पञ्चसु स्फुरति देवि ! वृत्तिषु ६६
पद्मतां वहसि संविदिन्दिरा १७५
पीठचक्रनिकरैकधर्मिणी ४८
पीठतः प्रभृति यावदर्च्यते ४९
पूर्णताक्रशतयोर्यदन्तरं १४
पूर्णतां वहति यत्र दीप्तिचिद् १५७
पूर्णपीठकृतं सिद्धैः २१४
पूर्णपीठमवगम्य मङ्गले २११
पूर्णमेव तव रूपमन्यथा १३
पूर्णसत्त्वरजआदि ५३
प्रज्ञया वहति सार्वभौमया १८६
प्रत्यगर्पितमुखी भिदाक्षया ६५
प्रत्यगात्मनि दृशोऽवकुञ्चना ५६
प्रत्यहं जननि यत्र तिष्ठति ८
प्रागचित्पदपरिग्रहात्तव २७
प्राग्विमर्श इह तन्मुखी प्रथा ७८
प्राण एष यमकाल उच्यते १६७
प्राणधाम्नि दशसप्तधा ४३
प्रातिभः प्रथम उद्यमोऽम्ब ! य २९
प्राप्तचित्तमुखतोऽधितस्थुषी ५७
प्राप्तदिव्यनयनैर्विलक्षणैः १८६
प्रेतमुज्झितगमागमं शिवे १७८
बर्हिणोऽण्डरसवद् यदन्तरे १५४
बाह्यमीश्वरि विना सुदर्पणो १२२
बिन्दुगर्भनिहितं त्रिधामगं १०८
बिन्दुचक्रशशिकुण्डली ७५
बिन्दुनादशशिपीठभास्वरा ६९
बिन्दुनादसमवेद्यवेदिका ४३
बिन्दुभूमिमधितस्थुषी ६७
बिन्दुरक्षरमयं क्रियामयं २६
बिम्बवर्णमिह तन्निदर्शनात् १३०
बीजमम्ब तव पञ्चधोदित ८२
बीजयोनिविधिभेद २५
ब्रह्मणः प्रभृति सिद्धपञ्चकं ३१
ब्रह्मविग्रहकलाधिरोहिणी ५७

ब्रह्मविष्णुहरमूर्तितां १०७
ब्रूहि सा तव कलोन्मुखी १६३
भक्षणाय जगतः प्रसारिता ११०
भक्षयन्त्यखिलमक्षजैः १५६
भर्गनाम्न इह भारवेः १६४
भानुशाङ्करविभेदतस्तव १८८
भानुशीतकरवह्निकुण्डली ५८
भामूर्तिं यं विमर्शक्रिय २
भावदृक् स्मृतिवियुक्तमीश्वरे ३५
भावनादिकलनातिवर्तिनी ६८
भावसंहृतिनिमेषविग्रहा १५५
भासनावरणशक्त्यधिष्ठितो १८९
भासितं जननि मायया १२९
भास्वरे वपुषि सर्वगे तव १९१
भूचरीत्वमनु योगधाम्न्यतो ८३
भूचरी वहति दण्डतः क्रमं ६२
भूतचक्रमधुकोशसंभृतं १६६
भूतयन्त्रनिलयास्तवाम्बिके ११७
भूतभाविभवदर्थगर्भितं १८३
भूतभावियुगलं यथापुरं १२५
भेदनानिधनमों यदम्बिके १०८
भोग्यभोक्तृकलनोर्मिसंक्षये ६२
भोग्यभोक्तृपरिघट्टनोल्लस ७९
भोग्यभोक्तृमयगा १४२
भोग्यभोक्तृरुचिघस्मरं ५३
मङ्गले त्वमसि वाक्चतुष्टये ४६
मन्त्र एष तव वृन्दचक्रगो ७८
मन्त्रिता सहपरिच्छदेन यत् १२९
मातुरेतदुभयं च १२९
मातृतत्करणगोचरोज्झिता १४६
मातृमेयमितिसाधना १४
मानमेयमितिनेत्र २३
मानसः पुनरसावनाहतो २५
मान्त्रमुग्ररससंकुलं ७१
माययान्तरमपि स्थितं १२५
मायायाम्ब पुरुषो निमीलितः १७६
मारुते नभसि वा तदाकृति १३३
मिश्रणोत्थमितरद्रजस्तव १२
मुक्तमेव न मया मयोचितः २१०
मुक्तबाह्यपदजृम्भणी १७
मुद्रितस्वकृततत्त्वमण्डला ७४
मूर्तिचक्रमधिरुह्य ६८
मूलतः प्रभृति पावकाश्रयं ११३
मेयमातृमितिलक्षणं ४४
मेष एष उदयः परो मम ९३
यच्च खण्डपदमम्ब ! पीठगं २०४
यच्च यस्तव पतिर्गृहाशयः १२७
यज्ज्वरादिपदमम्ब वायुना ६१
यत्कुलं त्रिविधमम्ब १४९
यत्तदूर्ध्वशिखरे परं नभः २०
यत्तदोल्लसति वीर्यमूर्जितं ४७
यत्तमोऽन्यदिह तत् क्षितेर् १२
यत्तुरीयमपि तद्विलापनं ७७
यत्पथप्रथनलक्ष्म पुङ्खितं १८०
यत्पदं प्रथममेतदुत्तरे १९३
यत्प्रकाशतमरञ्जकं पदं १८५
यत्प्रकृत्यवधि तत्त्वमण्डलं ७१
यत्र कालि दश ते कराः स्थिताः १७२
यत्र मेयमितिमातृघस्मरे ११५
यद्द्वयाद्वयविभाग २९
यद्द्वयोभयपदातिरोचना १७२
यद्यनङ्क्ष्यदनुभूतिरीश्वरे १३८
यद् विनिश्चयपदं च ते स्तवं २१०
यन्नभः स्फुरति यो मरुत्त्वया ६१
यन्मरीचिविषयः स भास्करः १६६
यस्त्रयोदशविधः स्वतन्त्रता ३८
यस्त्वधोवहननादलक्षणो ४२
यस्त्वनाहतधृतोर्ध्वपारग ६३
यत्स्मृतौ स्फुरति वस्तु बिम्बितं १३०
या च दृग्जननि निह्नुतेन १४०

| | | | |
|---|---|---|---|
| याऽणुभावकलिता कला | ८५ | यो विकल्परहितोऽक्षमण्डला | ७८ |
| या दशासु निखिलासु | १४४ | यौ मिथः समुदिताविहोन्मुखौ | ४ |
| यादृशी भवसि चण्डि ! तादृशी | १४८ | यः किलास स किलास | ८ |
| याऽनलार्कशशिविग्रहा | ४९ | यः पठेज्जपति देवि ते स्तुतिं | २११ |
| यानि तत्र भुवनानि चण्डिके | १११ | यः परो निरुपसर्गतः | १५१ |
| या निशा मधुनिविष्टसृष्टिका | ६१ | यः प्रकाश इह स त्वया | ३१ |
| या परा स्फुरति शक्ति | २२ | यः प्रमज्जयति मूढचेतसं | १७४ |
| याऽप्यहङ्कृतिरनात्मनि स्थिता | १५९ | यः शिवात् प्रभृति सोमपश्चिम | २०५ |
| या प्रमातरि निषेदुषी | १८ | यः श्मशान इह भूतघस्मरे | १६९ |
| यावदम्ब पुरुषस्य शान्तता | ३३ | राशिराजिविधिभञ्जितैः | २३ |
| या शिखान्तरहुताशनिर्गता | १५३ | लक्ष्यशून्यसहजाश्रमोदया | २०० |
| या शिखा यदुत वारियज्ञसू | ६१ | वर्णमन्त्रपदजृम्भया समं | १११ |
| या शिवे स्फुरणशक्तिरक्षया | ४८ | वस्तुतस्त्वमसि विश्वविग्रहा | १९२ |
| याश्चरन्ति तव खे मरीचयः | १७ | वह्निभानुशशिविद्युदातपं | १३६ |
| या स्थिताम्ब बहिरक्षकाङ्क्षया | १५ | वह्निसूर्यशशिधामघस्मरी | ७३ |
| याहमित्युदितवाक् च या | ७७ | वागियं त्रिविधभावभासिता | १८ |
| याः स्फुरन्ति हृदयेऽपि सारवाः | १३६ | वारिवह्निमुकुरादिक | १२९ |
| युक्तितोऽम्ब तव वृत्तिरञ्ज | ३० | वासना च न विचित्रतापदं | ३२ |
| येन खेलनसरोहणार्णवः | २१३ | वासनास्थितिमयी भवास्पदा | १६२ |
| येन तद्भवसुधाम्बुधिः | १७४ | वासरेशरजनीशयोः | ४२ |
| ये तु कुण्डलशिखाकुलस्थिताः | १७९ | वाहतत्प्रथनयोर्निषेदुषी | ११३ |
| ये निरावरणयुक्तिशालिनः | ११५ | विग्रहं द्वितयमप्यतः परं | ७० |
| ये मनः प्रणिदधुर्महर्षयः | ६ | विग्रहाभरणविन्दुशर्वरी | १८९ |
| येयमम्ब परधाम्नि ते तनुः | ८६ | वित्तदारमुखभोग्यगामिनी | १५९ |
| ये विदन्ति तव रूपमीदृशं | १७३ | विश्वभक्षणरसा मरीचयो | १६७ |
| योगदीधितिषु जृम्भतेऽम्बिका | ७६ | विश्वभक्षनिरुपाख्यचिन्मयात् | ८५ |
| यो दशेन्द्रियनिविष्ट | ९७ | विश्वमन्नमुदरं नयत्युमे | ९४ |
| योनिरत्र महती तदुत्तरा | ८८ | विश्वमम्ब कुरुषे शवासनं | १६० |
| योऽनुगात्यभिनयत्यभीप्सितां | २११ | विश्वमूर्त्ति यददृष्टविग्रहं | २२ |
| योऽपि पञ्चमपदाश्रितः शिवं | १९३ | विश्वमेतदिति याऽहमित्यसौ | ३५ |
| योऽभवद् भवति यस्तथेतर | ५ | विश्वमेत्य सहसा मरीचयो | १२० |
| यो मनोन्मनमनोन्मनीतरः | १०४ | विश्वसद्मनि सदात्मनीश्वरे | ६ |
| योऽमृताण्डनिभमर्थपञ्चकं | १६५ | विश्वसंहरणलीलयोत्कटं | ५२ |
| योऽयमर्थनिकरस्त्वदन्तिके | ३६ | विश्वसंहृतिपदे लयोज्झिते | १५१ |
| यो यमः स खलु काल्यते | १५७ | | |

| | | | |
|---|---|---|---|
| वृत्तिचक्रमकृताः षडध्वनो | १८४ | शून्यमम्ब गगनं हि या | ८० |
| वृत्तिभिस्तव विलाप्यते | १६ | शून्यमम्ब महमुच्यते तु या | ६३ |
| वृत्तिसंहरणमेव मातरि | ११६ | श्यामनीलतनुताञ्जनेधिके | १९० |
| वृन्दचक्रगतपञ्चभेदगा | ७४ | षट् त्वया पृथगमी प्रवर्तकाः | ४० |
| वेद्यवेद्यकविभेददक्षया | १५ | षण्डवर्जमहिमद्युतेः कलाः | २५ |
| वैखरी प्रभृति वाक्त्रयं परे | २१ | सक्रमाक्रमविमिश्रभावत | १७० |
| व्यक्ततत्परतया स्थितं | ९८ | सत्त्वजाश्रुतकलावधि | ११० |
| व्यक्तमक्रमविजृम्भिता | ६४ | सत्त्वमम्ब विहितस्य वस्तुनः | ११ |
| व्यक्तिजातितनुसंश्रित | १० | सत्पथोदितखधामगः | ९५ |
| व्यक्तिभेदरचना समन्ततो | ८७ | सत्सुधाब्धिरसभृत् कलान्तरी | १७७ |
| व्यक्तिमत्तदितरक्रमप्रथा | ९६ | सद्भिरुद्यमनिरन्तरात्मभिः | ९५ |
| व्यञ्जनैरुदयते महान्तिकै | ७४ | सन्तमेमि समभावदं | ४८ |
| व्याप्ततामुपेयुषी त्वदम्बरे | १२२ | सन्निकेतपदनित्यजृम्भितो | ३ |
| व्योमभावविनिविष्टचेतसः | १९५ | सप्तधा वमसि या | १७ |
| व्योम यत् क्रममयी त्वदीरणा | १०७ | सप्रकाशकृतमज्जनं | १३ |
| व्योमयानमतितत्पुरस्सरः | ५४ | स प्रसादमिह पञ्चभिः शिवे | ५९ |
| व्योमरूपमखिलक्रमास्पदं | २०२ | सर्गसंवृतिशरीरयोः | ४० |
| व्योमवृत्तिघटितैव उल्लस | १९७ | सर्व एव शशिनः कलाः | २५ |
| शक्तिनेत्रपरिणद्धमास्थितं | ५ | सर्वदा स्फुरति सर्वतः परं | १९८ |
| शक्तिरत्र कृतशम्भुभेदना | ७५ | सर्वदा स्फुरसि चेयमद्वया | १९४ |
| शक्तिरम्ब भवति क्रियामयी | २५ | सर्वदैव सकृदास्थितोदयाः | ७७ |
| शक्तिलक्षणजगद्भृतोदरी | ३२ | सा त्वमम्ब न बिभर्षि भास्यतां | ३५ |
| शङ्खयोनिरत उत्तराधृता | ८९ | सा त्वमम्ब लहरी शिवाम्बुधेः | १५० |
| शम्भुदक्षतनुजावभासया | ६ | सा प्रकाशसुखवृन्दचक्रगा | ४६ |
| शम्भुधाम्नि पतिताम्बरेश्वरि | ८३ | सा प्रमातुरिह जीवितं | १४० |
| शश्वदाशुनिखिलास्तदैव | ६६ | सा महद्भवति वीर्यमग्रिमं | ४८ |
| शान्ततां भजदनाश्रितं | ३५ | सामरस्यकृतशाश्वतोदया | ७९ |
| शान्तमम्ब यदभिन्नमम्बर | १७२ | सामरस्यघटितोदया शिवे | ५७ |
| शान्तिधामजुषि याति | १६४ | सार्वकालिकमिदं जगत्त्वया | ३३ |
| शाम्भवं जननि बिन्दुमध्वना | ७३ | सांख्ययोगपथदेशिकद्वयं | १३ |
| शाश्वतप्रसरया चिदर्चिषा | १६१ | सिद्धकार्यकरणं निरङ्कुशं | २०८ |
| शिञ्जिकावयवकार्थपञ्चकं | २२ | सिद्धचक्रमिह मोदते शिवे | १८३ |
| शिष्यसे यदि विनार्थमण्डलं | ३२ | सिद्धनाथकृततत्क्रमस्तुतेः | २१० |
| शुद्धभानुतनुरद्वयप्रथा | १७७ | सिद्धशक्तिमयमातृभासन | ३६ |
| शून्यधाम वमसि त्वमिष्टितः | ५५ | सिद्धिदोऽयमपरीतजृम्भणो | ८२ |

| | | | |
|---|---|---|---|
| सृष्टकाल्यसि यया वहिः | १५१ | स्पन्दमूर्तिमविनश्वरं | ९२ |
| सृष्टिकाल्युदयमेति यन्मुखे | १०१ | स्पन्दमूर्तिघृतभेदडम्बरा | ७२ |
| सृष्टितः प्रभृति यच्चतुष्टयं | २०४ | स्पन्दमेत्य परमं विराजते | ६४ |
| सृष्टितश्च यदनाख्यविक्रमं | ५२ | स्पर्शमूर्तिमधिरुह्य पञ्च ते | ८९ |
| सृष्टिपालननिरोधलक्षणा | १४१ | स्पर्शरूपरसगन्धरूपजं | १८४ |
| सैव चेन्निजपदान्तर्वर्तिनी | ६५ | स्पर्शवर्णमयपञ्चवर्गजैः | ८७ |
| सैव संचरसि संश्रिता | ६४ | स्पर्शसंग्रहणनित्यसम्मुखी | ५६ |
| सोदयात् प्रभृति कल्पनां विना | ९९ | स्फारतावकविमर्शपावक | ८१ |
| सोमपुत्रमपनीय मद्गतं | २०९ | स्फारिता जननि सेय | २८ |
| सौम्यता तव सिसृक्षया तनोः | १९१ | स्फारिता हि यदि पूर्णतामधुः | ९९ |
| संविदो वसतयूयमित्यमूः | ९३ | स्यात्तमश्च यदिदं निषिध्यते | ११ |
| संस्तवो ह्यनुभवस्मृतौ | १३८ | स्यादनाख्यमनिकेतयुक्तित | १४३ |
| संस्मृतासि मुनिचित्तमण्डपे | १८१ | स्वप्नदृष्टमसदित्यसद्वचो | १३१ |
| संस्मृतिः सदृशवस्तुबोधिका | १३९ | स्वप्रभे प्रमदनिर्भराः परं | ११८ |
| संहृतार्थमनुमन्तराहृतं | १६५ | स्वस्थशक्तिविसरत्समाहितो | ९४ |
| संहृतिस्थितिविसृष्टि | १९ | स्वं क्रमं ग्रससि सैव | ६५ |
| संहृतोर्ध्वनिकरस्मृतावधि | १६५ | स्वं वपुः स्फुरणशक्तिलक्षणं | ६५ |
| स्त्यायमानशिवचिद्रसात्मकं | ८१ | स्वप्रकाशविनिमग्नचिज्जडं | १७८ |
| स्त्रीति नाम तव कापि कल्पना | १९२ | स्वस्वभावविहितक्रमाक्रमे | १०३ |
| स्थूलं सूक्ष्मं परं च | २ | स्वस्वरूपमयविश्वमूर्तिदृक् | ८९ |
| स्थूलमेतदनुवर्ण्य लक्ष्यते | २०७ | स्वैरखेलननिवेशिताः | १५६ |
| स्पन्दमम्ब परिपूर्णमप्यमू | २०२ | हृदगुहामभिलषन्नहन्तया | ३ |
| स्पन्दमाद्यमनुकुर्वती शिवे | ५५ | | |


●

# शुद्धिपत्रम्

| अशुद्धिः | शुद्धिः | पृ० | पङ्क्तिः |
|---|---|---|---|
| द्वे रजो | द्वे रजः | १६ | १६ |
| षष्ठ- | षण्ढ- | ४० | २० |
| वह्वि | वह्नि | ४९ | १३ |
| बाह्मै | ब्राह्मै | ४९ | १५ |
| ०महानयप्रकाशे | ०महानये | ६२ | ११ |
| वृत्तिसु | वृत्तिषु | ६६ | २ |
| निर्णिकेतन | निर्निकेतन | ६६ | १७ |
| क्विप | क्विप् | ७३ | ३ |
| तथा | तथा | ७३ | ३ |
| अग्रिमो | अग्रिमः | ८६ | १५ |
| त्रिधामगं | त्रिमात्रगं | १०८ | २५ |
| कला | कलाः | १११ | २१ |
| सहस्रारर्णिकाया | सहस्रारकर्णिकायाः | ११३ | २३ |
| अनुश्रियते | अनुस्रियते | ११४ | १३ |
| ०संकारोऽपि | ०संस्कारोऽपि | ११६ | ८ |
| इमास्तिस्तः | इमास्तिस्रः | ११६ | २९ |
| ०परिहर्यतया | ०परिहार्यतया | ११७ | १५ |
| ०प्रभृति शून्य० | ०प्रभृतिशून्य० | ११८ | २८ |
| ०रित्यादि | ०रित्यादिः | १२१ | ३ |
| प्रतिबिम्वं न | प्रतिबिम्बं | १२२ | १९ |
| सास्फुरता | सास्फुरत्ता | १२४ | १६ |
| ०मात्रादि छन्दो | ०मात्रादिच्छन्दो | १३० | ३२ |
| ०यौक्तितो | ०युक्तितो | १३४ | १६ |
| द्वादशात्मात्म० | द्वादशात्म० | १४८ | १४ |

| अशुद्धिः | शुद्धिः | पृ० | पङ्क्तिः |
|---|---|---|---|
| मुगेन्द्रा० | मृगेन्द्रा० | १५० | २३ |
| स्तोति | स्तौति | १५७ | २८ |
| चिदचिंषा | चिदर्चिषा | १६१ | २२ |
| ०नुध्रियते | ०नुस्रियते | १६५ | १५ |
| ०मामन्त्यं | ०मानन्त्यं | १७० | २५ |
| प्रत्यक्षीकृतेत्याह | प्रत्यक्षीकृते इत्याह | १७८ | ३० |
| ब्रीडा० | व्रीडा० | १७८ | १६ |
| विद्यते | विद्यते | १८० | ३२ |
| वृत्तिं च क्रमकृताः | वृत्तिचक्रमकृताः | १८४ | १२ |
| वषुः | वपुः | १९० | १८ |
| ऽघिके | ऽधिके | १९० | १९ |
| तद्वबहिः | तव्दहिः | १९२ | ७ |
| घोतनाय | द्योतनाय | २०७ | २१ |

श्रीमदुदयनाचार्यकृतः

# आत्मतत्त्वविवेकः

( हिन्दीभाषानुवादोपेतः सपरिशिष्टश्च )

अनुवादकः सम्पादकश्च

आचार्यकेदारनाथत्रिपाठी 'दर्शनरत्नम्'

( न्याय-वेदान्त-सांख्ययोगाचार्यः )

काशीहिन्दूविश्वविद्यालये

भू० पू० दर्शनविभागाध्यक्षः

प्रकाशकः

केदारनाथत्रिपाठी

४४, जवाहरनगर ( एक्सटेंशन )

वाराणसी—२२१०१०

१९८३

श्रीमदुदयनाचार्यकृतः

# आत्मतत्त्वविवेकः

( सटिप्पणराष्ट्रभाषानुवादोपेतः सपरिशिष्टश्च )



अनुवादकः सम्पादकश्च

आचार्यकेदारनाथत्रिपाठी 'दर्शनरत्नम्'

( न्याय-वेदान्त-सांख्ययोगाचार्यः )

काशीहिन्दूविश्वविद्यालये

भू० पू० दर्शनविभागाध्यक्षः

प्रकाशकः

केदारनाथत्रिपाठी

८४, जवाहरनगर ( एक्स्टेंशन )

वाराणसी—२२१०१०

१९८३